श्रीः

# श्रीव्यासपाणिनिभावनिर्णयः

(वेदान्तव्याकरणविमर्शः)

पदवाक्यप्रमाणज्ञानां लब्ध्यन्तनिष्णातानां महामहोपाध्याय
श्रीमुष्णं व्याकरण सुब्बरायाचार्याणा मात्मजेन
श्रीमत्तातपादचरणसरोजसेवासमुपलब्ध
शब्दब्रह्मविद्यावैदुष्येण
**महामहोपाध्याय व्याकरणं**
**श्रीमुष्णं सेतुमाधवाचार्येण**
विरचितः

तदन्तेवासिना श्रीपदपुरी विराजमान श्रीवेङ्कटेश्वर संस्कृत
महाकलाशालायां व्याकरणाध्यापकेन
**रा. राममूर्तिशर्मणा**

श्रीपदपुरस्थ तिरुमलै तिरुपति देवस्थानमुद्राक्षरशालायां
सम्मुद्रय प्रकाशितः
तारणसंवत्सरः—१९४४



[मूल्यम् रू. ३

श्री वेङ्कटेशाय नमः



फणिपतिगिरिवासे ब्रह्मणि श्रीनिवासे
निगमनिचयवेद्ये वासुदेवाभिधाने ।
गुरुपरमगुरूणां हृत्सरोजाधिवासे
भगवति कृतिमेतामार्पये भक्तिवश्ये ॥



श्रीमदार्याचार्य कुलावतंसः वैयाकरण चक्रवर्ती वैयाकरण
केसरी महा महोपाध्यायः श्रीमुष्णं व्या. सुब्बरायाचार्यः



महामहोपाध्याय, व्याकरणं, श्रीमुष्णं

सेतुमाधवाचार्यः

ग्रन्थकर्ता (AUTHOR)

## ACKNOWLEDGEMENT

In presenting this work to the Public I have gratefully to acknowledge the help rendered in the form of donations by His Holiness Sri Sri Swamigal of Uttaradi Mutt His Holiness Sri Sri Swamigal of Sri Raghavendraswami Mutt and Sri Maharani Saheba of Gadwal Samasthanam and many other well wishers, who made the publication of this valuable treatise possible. Owing to the scarcity of paper and other inconveniences I was unable to publish this book earlier.

R. RAMAMURTI SARMA,
VYAKARANA PANDIT.
SRI VENKATESVARA SANSKRIT COLLEGE. TIRUPATI

# APPRECIATIONS.

I had the privilege of hearing the reading of Sri Vyasa-Panini-Bhava-Nirnaya by the author Sri Vidwan Sethu Madhavacharya Swamy, son of late Mahamahopadhyaya Subbarayacharya Swamy. The book is extremely well written and it deals with topics which have not till now been discussed. The views expressed by the later commentators of the Vyakaran Sutras Nagoji Bhatta etc., on Vedantic truths are fully canvassed and examined in the light of Patanjali's Mahabhashya and the Vedanta Sutras. The author demonstrates with good success that the views of the later Vyakarana authors have no support from the Mahabhashya in the original Vyakarana Sutras or the Vartikas. The book is a model in clarity and it may be said to be a valuable contribution to the Sanskrit Literature.

TRICHINOPOLY,
26—1—'41.

A. V. GOPALACHARIAR,
M.A., B.L.

---

R. S. PANCHAMUKHI, M.A.,
*Director of Kannada Researoh,*
BOMBAY PROVINCE

KANNADA RESEARCH OFFICE,
DHARWAR
*Dated 5th April 1944.*

I had a glance through the book Śrī Vyāsa-Paṇini-Bhava-Nirnaya of PANDIT SETHU MADHAVACHARYA son and pupil of Mahamahopadhyaya Vyakarana Subbrayacharya of Tirupati. The author is a distinguished Scholar in Vyakarana and Vedanta and served in the S. V. S. College, Tirupati, for a period of 35 years, as the Professor in Vyakarana and Vedanta. I am glad to learn that he retired from the College as its Principal and was immediately entertained as Professor in S. M. S. O. College, Chiruthanur. The above work is the production of the mature intellect of Pandit Sethumadhavacharya and as such it commends itself to every scholar of Indian Philosophy and grammar.

The author has shown admirable skill and erudition in his approach to the understanding of the teachings of Sri Vyasa and Panini and in proving that they are identical in their conclusions. It is a distinct contribution to the study of the

subject and every lover of research, and I would comend this novel approach to the students of other *Darśanas*.

I am glad to state that this erudite Scholar deserves his due share of honour from the public as well as from the Government for such a valuable work.

*Camp* :—MANTRALAYA, 5—4—'44.

R. S. PANCHAMUKHI,
*Director of Kannada Research.*

---

I have seen the work, the *Vyāsa-Pāṇini-bhāvanirṇaya* written by Mahāmahopādhyāya Srimushnam Setumādhavāchārya of Tiruchanur, in which he has ably demonstrated, against the commentators of the *Mahābhāshya* of Patanjali, that Vyāsa, the author of the *Brahmasūtra* and Pāṇini, the author of the *Ashtādhyāyī*, are advocates of the dualistic theory of *jīva* and *brahman* as distinct entities as against the monistic view of their identity attributed to them unwarrantedly by their commentators and that they did not acquiesce in the *māyāvāda*. It is a well-known fact that the commentators often read their views into the texts they are commenting upon instead of trying to ascertain the views of the author and stating them in an impartial manner. More often than not the commentator forgets that his should be a disinterested endeavour to understand and explain what is stated in his text. The author has established that it is more than true in the present case. I have no doubt that the arguments put forth by the author to establish his thesis would commend themselves to scholars in as much as he is well-versed in both the subjects of Vyākaraṇa and Vedānta and has imbibed the fundamental principles of these sciences by engaging himself in teaching them for over a quarter of a century.

P. V. RAMANUJASWAMI, M.A.
*Director,*
*Sri Venkateswara Oriental Institute*
*& Principal, S. V. O. College*

TIRUPATI
7—1—45

---

श्रीः

## ॥ श्रीरामचन्द्रो विजयते ॥

श्रीमत्परमहंसपरिव्राजकत्वाद्यनेकबिरुदाङ्कित श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य श्रीकूड्ली आर्यअक्षोभ्यतीर्थमठाधीश श्रीरघुदान्ततीर्थकरकमलसञ्जात **श्रीरघुवीरतीर्थस्वामिभिः** सादरं विलिख्य प्रेषितेयं पत्रिका ।

महामहोपाध्याय वैयाकरणकेसरीत्यादिबिरुदभूषित श्रीमुष्णं व्याकरण सुब्बरायाचार्याणामात्मजैः महामहोपाध्याय **श्रीसेतुमाधवाचार्यैः** विरचिते व्यासपाणिनिभावनिर्णयग्रन्थे पाणिनिपतञ्जली वासुदेवोत्तमत्वादिकमाशयाते इति "वासुदेवार्जुनाभ्यां वुन्नि"त्यादि पाणिनिसूत्रं, तदीयभाष्यञ्च सम्यग्विचार्य व्यवस्थापितम् । समग्रमवलोकितोऽयं ग्रन्थः, समजनिच महान् प्रमोदः ।

तारणज्येष्ठवद्य ५.
बेङ्गळूरु
(CAMP BANGALORE)

इति नारायण स्मरणानि ॥

श्रीः




## श्रीवेदव्यासो विजयते

श्रीमन्तः समीरसमयप्रवचनबद्धादराः, पातञ्जलतन्त्रपारदर्शिनः महामहोपाध्याय **श्रीसेतुमाधवाचार्याः** सप्रणामं निवेद्यन्ते.

भवद्भिर्निर्मितः 'व्यासपाणिनिभावनिर्णयः' सादरं समवलोकितः, तत्र श्रुतिमहाभारतभगवद्गीताभागवतादिसर्वशास्त्रप्रतिपाद्यो भगवान् वासुदेवएव, विषय-

वैराग्यवतां गुरोःशास्त्रमधीत्य भगवदुपासकानां मोक्षप्रद इति प्रतिपादितम् । तत्र प्रमाणत्वेन बहून्युपनिषद्वाक्यानि श्रीमहाभारतभगवद्गीताभागवतविष्णुपुराणश्लोकां-श्चोदाहृत्य सरलया वाचा तेषामर्थो निरूपितः, विशेषेण तत्तत्प्रकरणमनुसृत्य प्रसङ्ग-सङ्गत्या तत्वमसीत्यादिश्रुत्यर्थविचारः, श्रुतिविरोधपरिहारः, जन्मादिकारणरूपब्रह्म-लक्षणस्य परोक्ततटस्थत्वनिरासः, श्रुतीनामखण्डार्थत्वनिरासः, शब्दसाधुत्वनिर्णयार्थं प्रवृत्तस्य शब्दशास्त्रस्य तच्छास्त्रपारङ्गतैरेव कैश्चित् ग्रन्थकारैः प्रतिपादितस्याद्वैत-परत्वस्य निरासः, 'वासुदेवार्जुनाभ्यांवुन्'ति सूत्रतद्भाष्यरीत्या वासुदेवस्य भगवतः परत्वस्य पाणिन्यभिमतत्ववर्णनं, उदाहृतानां वचनानां पराभिमतार्थे अनुपपत्तिप्रदर्शन-पूर्वकं सिद्धान्तार्थस्य निरूपणम्, इत्यादिभिः बहुभिर्विषयविशेषैरलङ्कृतोऽयं ग्रन्थः बहुतन्त्रपारङ्गतानां विद्वद्वर्याणां तत्वजिज्ञासूनांच अतीवोपकुर्वन् महान्तं प्रमोदं जनयेदित्यत्र न कश्चित्संशयलेशः । ग्रन्थोऽयं विद्वद्बृन्दश्लाघनीयो लब्धप्रचय आचन्द्रार्कं जीयादिति श्रीमध्वान्तर्यामिणं बादरायणं प्रार्थये ।

कुम्भघोण
५-७-१९४४
KUMBHAKONAM

इत्थं विद्वत्समुदायदासः
**खापे रामचन्द्राचार्यः**
महामहोपाध्यायः भारतसिद्धः विद्याभूषणः

## श्री श्रीनिवासो विजयते

निश्शेषशास्त्रगति निश्चयपाटवेद्धश्रीसेतुमाधव सुधीमणिनिर्मितेन ।
श्रीव्यासपाणिनिमतार्थविनिर्णयेन चेतो न कस्य परिहृष्यतु कोविदस्य ॥
तत्त्ववादसमुदित्वरतर्षोऽतत्त्वावाद परिखेलदमर्षः ।
हर्षदो मम सदा गुणसिन्धुः सेतुमाधवबुधो बुधबन्धुः ॥

देशिक तिरुमलै ताताचार्य शिरोमणिः M. O. L.
*Curator, S. V. O. Institute, Tirupati.*

ओं नमः पाणिन्यादिभ्यो गुरुभ्यः

(१) दययाऽऽयत येषां पदविद्वत्संप्रदायपरिपाटी ।
तान्नौमि लोकमान्यान् प्राचार्यान् सुब्बराय गुरुवर्यान् ॥

(२) तद्दृष्ट्या पाणिनीये सकलबुधमनोहारिवैदुष्यमेत्य
भ्राजत्कारुण्यभूमा गिरमतिविमलां स्वोपदेशेन तन्वन् ।
योऽस्माकं शब्दशास्त्रे जयति गुरुतया, **माधवं सेतुपूर्वं**
ध्यायामो व्यासपाणिन्यभिमतभगवत्सेव्यतावादमेनम् ॥

(३) सामानाधिकरण्यगीः फलवती राजा प्रजावाक्यवत्
श्रुत्यादौ न भिदाऽवसीदति न चाद्वैतं ततः सिध्यति ।
बौद्धं वस्तु विभाति धीविषयतामेत्यैव नान्यादृशं
सिध्यत्येवममूदृशानिह गुरुर्ग्रथ्नाति चार्थान्बहून् ॥

(४) परमकृपया मादृक्षेषु प्रसन्नमुखोऽस्मयः
फणिपतिगिरां भावं नावद्यमुद्गृणति स यः ।
स इह ललितै र्वाक्यै श्शब्दात्मसूत्रकृतोर्मतं
प्रकटयति चेद्विद्वद्भाग्यं कथं न फलेग्रहि ॥

(५) वेदवैदिकवाक्यजाल विरोधगन्धविधूननात्
वासुदेवपरत्वनिर्णयतश्च वैदिकसंमतः ।
पाणिनीयमतज्ञशेखरसेतुमाधवनिर्मितो
व्यासपाणिनिभावनिर्णय एष भातु चिरं भुवि ॥

(६) पञ्चत्रिंशतमब्दान् कुण्डलिगिरिनाथसंस्कृतनिकेते ।
उपदिष्टशब्दविद्यो जयतु चिरं सेतुमाधवाचार्यः ॥

(७) श्रीमद्रङ्गशठारि देशिकदयालब्धोदयायां कला-
शालायां मधुरान्तके पदनयस्याध्यापकत्वं श्रितः ।
पादू राघव इत्थमद्य पदविद्याचार्यपादाम्बुजे
पद्यैः कैरपि धन्यतां प्रकटयत्यद्धा निबद्धाञ्जलिः ॥

इति एषामन्तेवासी

**P. N. राघवाचार्यः**
विद्वान्–व्याकरणाध्यापकः
श्री-अहोबिलमठ संस्कृतकलाशाला मधुरान्तकम्.

श्रीः

श्रीमद्भिः "शब्दाब्धिकुम्भयोनिं गौतमकाणादतन्त्रनिष्णातम् । मीमांसाद्वयनिपुणं नौमि श्रीसुब्बरायगुरुवर्यम्" ।। इति वर्णितवैदुषीकाणां **महामहोपाध्याय**, वैयाकरणकेसरि---वैयाकरणचक्रवर्ती---त्यादिबिरुदावलीपरिमलितकीर्तिज्योत्स्नाभासुरदशदिशावकाशानां श्रीमतां **श्रीसुब्बरायाचार्याणा** मात्मजैर्दीपोत्पन्नप्रदीपन्यायेन इदमादिप्रबन्धसत्त्यापिततदधिकविज्ञानसंपत्समृद्धपाण्डितीकैः श्रीपद्पुरीप्रतिष्ठितश्रीवेङ्कटेश्वरसंस्कृतमहाकलाशालायामधिकत्रिंशानि वर्षाणि व्याकरणप्रधानाध्यापकपदमलङ्कृतवद्भिरनवरताध्यापनावृत्तिशतगुणितप्रज्ञाप्रकर्षैः नानादेशप्रतिष्ठितविद्यालयलब्धपदजैत्रच्छात्रबृन्दनिबद्धजयपताकाद्योतितयशःप्रपञ्चैः **महामहोपाध्याय** विरुदभूषितैः **श्रीसेतुमाधवाचार्यैः** प्रणीतं "श्रीव्यासपाणिनिभावनिर्णया"भिधमन्वर्थसंज्ञं सद्युक्तिसूत्रैः श्रीव्यासपणिन्योर्भावप्रसूनानि संग्रथ्नत् परःसहस्रसंवत्सरेभ्य आरभ्य तत्तत्समयलब्धप्रचारबौद्धादिसिद्धान्तविचक्षणप्रतिपक्षिदन्तिदन्तादन्तितन्द्रालुतया तत्तत्सिद्धान्तश्रद्धातिरेकेण वा भर्तृहरिकैयटादिनागेशान्तवैयाकरणमूर्धन्यैः स्वस्वग्रन्थेषु वैयाकरणसिद्धान्तत्वेन समुद्घोषितान् तदनुयायिभिस्सर्वंसहनिशितधीभिः कोमलप्रज्ञैः, वैयाकरणाभासैस्तत्तद्ग्रन्थेषु प्रामाण्यबुद्ध्या तथात्वेनाद्ययावदादृतान् अखण्डस्फोटबौद्धार्थवाचकता, प्रकृतिप्रत्ययविभागस्थान्यादेशभावागमागमिभावादि व्याकरणसर्वस्वभूतप्रक्रियाऽऽविद्यकत्वजगद्विवर्तताजीवब्रह्मस्वरूपैक्यादीन् बौद्धतद्गन्धिसिद्धान्तच्छायानुसारिणोऽपार्थान् विमर्शचक्रमारोप्य सत्तर्कशास्त्रैर्निकृन्तत्, पाणिन्यादिमुनित्रयस्य सेश्वरसांख्यसिद्धान्तास्थायुकतां सप्रमाणं प्रतिष्ठापयत्, तत्तद्ग्रन्थपाठनावसरेषु "भ्रमर इव विभाते कुन्दमन्तस्तुषारं न च खलु परिभोक्तुं नैव शक्नोमि हातुम्" इति न्यायेनैतान् तत्र तत्र वर्णितानसदर्थान् उपादतुमक्षमानामेतत्खण्डनक्षमसद्युक्तिपरिकर्मितप्रज्ञाप्रकर्षविधुराणामस्माकमान्तररणरणिकामपनुदत्, दोलायमानां मतिमेकत्र स्थिरीकुर्वत्, परःसहस्रेभ्यो वर्षेभ्य आरभ्य निमीलितं वैयाकरणलोकस्य चक्षुरुन्मीलयत्, सहस्ररश्मिवत् तमश्च्छेदि प्रसृमरप्रकाशं प्रसादगुणसंभृतमनुवाचितमेव व्याख्याननिरपेक्षं वदान्यवत् स्वार्थान् सर्वान् अर्थिसात्कुर्वत्, प्रबन्धरत्नमिदमादित आन्तमनुवाच्य प्रमोदनिर्भरोऽहं, न केवलमात्मानं, न वा केवलं वैयाकरणलोकम्, अपितु कृत्स्नमेव विपश्चिदपश्चिमलोकमनेन कण्टकविशोधिना प्राचीनमुनित्रयसंमतसन्मार्गाविर्भावकेन

ग्रन्थरत्नेन बहूपकृतं नित्याधमर्णं चावपन् एवं बहूपकृतवतामेषामाचार्यवर्याणां सर्वान् मनोरथान् वृषगिरिशिखरनिलयः कमलाजानिः क्रियासमभिहारेण पूरयत्विति प्रार्थयमान एषामाचार्यवर्याणां पदकमलयोरिमं विज्ञप्तिपुष्पाञ्जलिं समर्प्य धन्यजन्मा बुभूषामि ॥

इति विद्वज्जनविधेयः ।

के. वि. नीलमेघाचार्यः व्याकरणप्रधानाध्यापकः

श्रीवेङ्कटेशसंस्कृतकलाशाला तिरुपति.

श्रीः

**श्रीनिवासपरब्रह्मणे नमः**

भोःभोः विद्वद्वरेण्याः, महदिदं प्रमोदस्थानं, अयं श्रीव्यासपाणिनिभावनिर्णयाभिधो ग्रन्थः कलिमलकलुषितान्तःकरणानां, कतकायमानः इदानीं सञ्चकास्तीति ।

विदितमेवेदं भवतां यल्लब्धोपलब्धेः ग्रन्थस्योपादेयत्वे त्रीणि कारणानि विलसन्ति । विषयवैलक्षण्यं, ग्रन्थवैलक्षण्यं, वक्तृवैलक्षण्यञ्चेति । ननु पुरातनत्वेन ग्राह्यत्वं, आधुनिकत्वेन त्याज्यत्वं वा युक्तम् । तदुक्तमभियुक्तैः—"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् । सन्तः परिक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ इति ॥ तदात्वे नूतनं सर्वं आयत्याञ्च पुरातनम् । न दोषायैतदुभयं न गुणाय च कल्पते" ॥ इति च ॥ अतोऽत्र वक्तृवैलक्षण्यं तावत् प्रतिपाद्यते । ग्रन्थस्यास्य कर्तारस्तु तत्रभवन्तः श्रीमन्तः **महामहोपाध्यायाः** श्रीसेतुमाधवाचार्याः, पाणिनीये तन्त्रे श्रीमत् पूर्णप्रज्ञसिद्धान्ते च अप्रतिहतपाण्डित्याः, पञ्चत्रिंशतं वत्सरान् श्रीवेङ्कटेश्वर संस्कृतमहाकलाशालायां प्रधानव्याकरणाध्यापकपदवीमधिष्ठितवन्तः, तदानीमेतेभ्य एव तत्रभवद्भ्यः व्याकरणशास्त्रमधीयद्भिः तत्रतत्र कलाशालासु लब्धपदवीकैः छात्रवर्गैः दिक्सौधाबद्धजैत्रध्वजाः विराजन्ते ॥ येषाञ्च जन्मभूमिः "विमानं रङ्गसंज्ञकम् । श्रीमुष्णं वेङ्कटाद्रिञ्च सालग्रामञ्च नैमिशम् । तोताद्रिं पुष्करञ्चैव नरनारायणाश्रमम् ।" इति प्रसिद्धेष्वष्टस्वपि स्वयंव्यक्तेषु क्षेत्रेषु अन्यतमत्वेन परिगणितं ज्ञानप्रदस्य भगवत आदिवराहस्याधिष्ठानभूतं श्रीमुष्णं नाम क्षेत्रम् ॥

येषां हि वंशः श्रीमत्पूर्णप्रज्ञमतानुयायिनां द्विजवराणां प्रधानभूतयोर्द्वयोराचार्यवंशयोः मुख्य आर्याचार्यवंशः ॥ तथा येषामेव जनकाः ब्रह्मोपदेष्टारः

व्याकरणविद्याप्रदायिनश्च "व्याकरणं सुब्बराचार्यवर्याः, पाणिनीयगौतमीयतन्त्रादिष्वतिशयितधिषणाः वादाहवेषु प्रतिपादनचातुरीधुरीणा आसेतोः आचगौरीगुरोः प्रथितप्रभावाः "महामहोपाध्याय कुलपती"त्येवमाद्यनेकबिरुदावलीसमलङ्कृताः, लघुशब्देन्दुशेखरपरिभाषेन्दुशेखराद्यनेकग्रन्थव्याख्याकरणानुगृहीतछात्रवर्गाः व्यराजन्त। एवमाभिजात्येन पाण्डित्यप्रकर्षेण च महनीया आचार्यवर्याः ॥

विषयश्चास्मिन् 'भगवान् वासुदेवः दवदहनदन्दह्यमानैः अमृतत्वायासेव्यमानः, सकलवेदेतिहासपुराणादीनां सिद्धान्तभूतः, विशेषतश्च परतत्वनिर्धारणपरस्य व्यासमहर्षेः सिद्धान्तएव व्याकरणाचार्याणां सिद्धान्त इति ॥ किञ्च—तत्रभवता महावैयाकरणेन नागेशमहाशयेन लघुमञ्जूषायां परमतानुवादेन कृतः सर्वोऽपि विचारः, तत्तन्मतसिद्धान्तानुगुण इति तत्तन्मतावलम्बिप्रमाणग्रन्थोपपादनेन प्रकटीक्रियते ॥ रचनाचात्र महतोदुरूहानप्यर्थजातान् सरळसरळया शैल्या प्रकाशयन्ती, कृतेदूषणोक्तीः विनाग्रहं अन्तरेण स्वकपोलकल्पनां तत्तत्ग्रन्थमवलम्ब्यैव सप्रमाणं तत्त्वार्थनिर्धारणपरायणा सर्वानप्यास्तिकवर्यान् सोत्साहं प्रवर्तयति ।

अतो ग्रन्थमिममामूलाग्रं विनादोषदृष्टिं पर्यालोच्य व्यासपाणिन्योर्भावतत्त्वमवगम्य कृतार्थीभवेम इत्यभ्यर्थये । इत्थम् ग्रन्थकर्तॄणामन्तेवासी

**चेट्लूर्-राघवाचार्यः**

*Principal, Sanskrit College, Madhurantakam.*

श्रीः

भवतो भावगंभीरः सरसः सरळैः पदैः ।
व्यलोकि व्यासपाणिन्योरपूर्वो भावनिर्णयः ॥
व्यस्ततां नीतयोरन्यैः व्यासपाणिनिशास्त्रयोः ।
**सेतुमाधव आचार्यः** सेतुबन्धमचीक्लृपत् ॥
शब्दानुशासनाम्भोधिशायिता जलशायिनः ।
युक्तमुद्घोषिता तत्रभवता तत्त्वदर्शिना ॥
अद्यापि शास्त्रग्रन्थानां निबन्धारो भवादृशाः ।
वर्तन्त इति हर्षो मे नर्तनं कुरुते हृदि ॥

Presidency College,
MADRAS.
12—2—1945.

K. L. **व्यासराजशास्त्री**
विद्यासागरः, महोपाध्याय शिरोमणिः

# भूमिका

यस्य ब्रह्मादयो देवाः किङ्कराः करुणाकरः ।
शरणं मे स भवतु कण्ठादुपरि केसरी ॥ १ ॥
शरणार्थि भक्तलोकं न त्यजामि कदाचन ।
इति व्रतं भगवतस्तस्मात्तं शरणं व्रजेत् ॥ २ ॥

अद्यत्वेपि इह वैदिके पथि वर्तमानैः वेदवेदान्ततदङ्गव्याकरणसांख्ययोगन्यायवैशेषिकधर्मशास्त्रमीमांसाः पठनपाठनादिना प्रचार्यमाणाः तत्तत्रसभासु परीक्ष्यग्रन्थेषु परिगणिता विराजन्ते । तत्र वेदास्तावत्—ऋगादयश्चत्वारः, ते पराऽपरात्वभेदेन द्विविधाः, तत्र परा परमात्मविचारविषयिका, अपरा तु परमात्मविचाराङ्गचित्तशुद्धिसंपादकधर्माऽधर्मविचारपरा। पराया ऋगादिष्वन्तर्भावेपि अक्षरनामकपरमात्मविषयकतया प्राधान्यद्योतनाय पृथङ्निर्देश इति 'द्वेविद्ये वेदितव्ये पराचैवाऽपराचे' (मु. १-३)तिवाक्यव्याख्यावसरे श्रीशङ्कराचार्याः । अन्येतु—'सर्वेवेदा यत्पदमामनन्ति (का.) वेदैश्चसर्वैरहमेववेद्यः' (गीता. १५-१५) इत्यादिश्रुतिस्मृतिषु परमात्मनएव सर्ववेदप्रतिपाद्यत्वोक्तेः धर्मादेश्च श्रुतिषु निरूपणाच्च, भगवत्परतयाऽन्यपरतयाच योजना कार्या इति प्रतिपद्यते, यदा भगवत्परता तदा परात्वमृगादीनाम्, यदात्वन्यपरता तदा अपरात्वमित्याहुः । योजनाप्रकारस्तु शास्त्रे द्रष्टव्यः ।

**वेदान्तो**—ब्रह्ममीमांसा, सातु प्राधान्येन परमात्मपरैवेति पराविद्येत्यौपनिषदाः ।

व्याकरणं **तदङ्गं**, तत्तु प्रधानाङ्गं वेदानां, 'प्रधानं च षडङ्गेषु व्याकरण'मितिमहाभाष्योक्तेः, 'व्याकरणंतु पदार्थविशेषनिर्णये उपयुज्यत'इति पस्पशान्हिककौस्तुभोक्तदिशा वेदवेदान्तवाक्यार्थनिष्कर्षोपयोगिपदार्थमात्रनिर्णायकं नतु जगन्मायिकत्वात्मैक्यादिसिद्धान्तस्य। अस्यच वेदाङ्गत्वात् दर्शपूर्णमाससंनिधिपठितानां तदङ्गप्रया-

जादीनां दर्शादिप्रधानयागफलेन फलवत्त्ववत्, सर्ववेदप्रतिपाद्यभगवदुपासनाजन्य-परमात्मसाक्षात्कारतदनुग्रहजन्यफलेन फलवत्त्वम्। महाभाष्योक्ता रक्षोहादयस्तु अवान्तर-प्रयोजनानि।

**सांख्यास्तु** मन्यन्ते—पञ्चविंशतितत्त्वज्ञानान्मोक्षः, प्रकृतिः स्वतन्त्रं कारणं जगतः, ईश्वरस्तु नास्तीति। अतो नैषा सांख्यस्मृतिः श्रुतिसंमता, 'श्रुत्यननुसारिण्यः कापिलस्मृतय'इतिस्मृत्यधिकरणे(२-१-१)श्रीशाङ्करभाष्योक्तेश्च।

**योगास्तावत्**—ईश्वरवादिनः, अथापि योगएव कैवल्याख्यमुक्तिसाधनम्, ईश्वरप्रणिधानादि तदङ्गमिति वदन्ति, 'द्वैतिनोहि ते सांख्या योगाश्च' इति 'एतेने' (ब्र. सू. २-१-३)तिसूत्रशाङ्करभाष्योक्तेः, 'कृतार्थंप्रती'(यो. सू. २- )तियोगसूत्राच्च सांख्ययोगौ भेदवादिनौ। 'तत्रापि प्रधानं स्वतन्त्रमेव कारण'मिति 'एतेने'ति सूत्र-शङ्करभाष्यात् श्रुतिविरुद्धं तन्मतम्, तत्रोक्तो योगश्च श्रौतयोगविरुद्धश्चेति ब्रह्मसूत्र-भाष्यकारास्संगिरन्ते। नागेशस्तु—'ईश्वरप्रेरिता प्रकृतिर्विषयात्मना परिणमत इति स्त्रियामितिसूत्रोद्द्योते वदति।

**न्यायवैशेषिकावपि**-आत्मनां भेदवादिनौ, अथापि ईश्वरसद्भावे 'सदेवसोम्ये-दमग्र आसी' (छा. ६-३)दित्यादिपरःशतश्रुतिनिचये जाग्रति अनुमानेनेश्वरं साधयन्तौ अनुमानैकशरणौ श्रुतिमार्गाननुयायिनौ। उक्तंच—"अपरिग्रहाच्चात्यन्तमनपेक्षा (१७) समुदायउभये" (१८) ति सूत्रयोः शाङ्करभाष्ये 'ईश्वरकारणश्रुतिविरुद्धत्वात्, ........वैशेषिकराद्धान्तो दुर्युक्तियोगात्........सोप्यर्धवैनाशिकः'इति वैशेषिकस्य श्रुतिविरुद्धभाषित्वम्। ननु-वैशेषिकस्य तेन तथात्वावगमेपि न्यायमतस्य कथं तथात्वमिति चेत्, उच्यते-उदाहृताधिकरणद्वयस्यतन्त्रद्वयमपि विषयः, न्यायवैशेषिकयोरुभयोरपि तन्त्रयोः प्रायेणसमानप्रक्रियत्वात्, सुरेश्वराचार्यैः पारिमाण्डल्याधिकरणस्य'वैशेषिक-नैयायिकमतं निरस्यती'त्यवतारितत्वात्, उभयव्यामोहाधिकरणे नैयायिकमतं दूषयती' त्यसकृदुक्तेश्च। भाष्यकारास्तु वैशेषिकतन्त्रमेवाऽधिकरणविषय इति मन्यन्त इत्येके।

**मीमांसातु**—जैमिनिप्रणीता[1] ऐहिकामुष्मिकबहुविधफलसाधननानायाग-

1. पशुवृष्ट्याद्य ऐहिकं फलम्। 'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पद'मितिलक्षितं सुखमामुष्मिकम्। वचनार्थस्तु—रत्यन्तकालदुःखसदृशदुःख समानदुःखेनामिश्रम्, नच ग्रस्तम् = उक्तदुःखाधिकदुःखेन नग्रस्तम्, (तादृशदुःखामिश्रम्)-

विधायकश्रुतिवाक्यविचारपरा, न तत्रेश्वरादितत्त्वविचारः कृतः। अयं तद्दर्शन-निष्कर्षः—'अग्नयेस्वाहे'त्यादौ चतुर्थ्यन्तशब्दएव देवता, तस्या विग्रहभोजनतृप्ति-प्रसादफलदत्वानि पञ्च न सन्ति, यागएव अपूर्वोत्पादनद्वाराफलं ददाति, ईश्वरस्तु नास्त्ये-वेति। श्रुतिवाक्यविचारपरत्वेऽप्यस्य तन्त्रस्य, श्रुतिव्यासोक्तिभ्यां विरुद्धमेतत्

तथाहि—श्रुतौ देवासुरसंवादादिश्रवणेन देवताधिकरणे (१-३-८)देवानां ब्रह्म-विद्यायामधिकारनिरूपणेन, 'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तान-प्रदायैभ्यो यो भुङ्क्ते स्तेन एव स'(गी. ३-१२) इतिदेवानां फलदातृत्वोक्त्याच देवानां विग्रहादिपञ्चकसद्भावावगमात्. तेषां विग्रहाद्यभावकथनं श्रुत्या व्यासोक्त्याच विरुद्धम्। नच—'लभतेच ततः कामान् मयैव विहितान् हि ता'(गी. ७ २२)निति सर्वदेवतापूजनेपि भगवानेव फलं ददातीत्यर्थकवचनेन विरुद्धमेतदिति वाच्यम्—अन्तर्यामिणा प्रेरिता देवा दास्यन्त इत्यर्थेन परमात्मनएव तत्रापि दानकर्तृत्वमित्याशयेना-दोषात्। अतएव सर्वदेवतोपासनेपि 'सर्वाध्यक्ष ईश्वरएव फलंददाती'ति 'ब्रह्मदृष्टि-रुत्कर्षात्' (४-१-४) इतिसूत्रे शंकराचार्यैरुक्तम्। क्वचित्साक्षात्, क्वचित्प्रेरकत्वेन तस्य फलदातृत्वमिति शास्त्रतत्त्वम्। एतेन अपूर्वद्वारा यागएव फलद इत्येतत् गीताविरुद्धम्। फलाधिकरण (३-२-७)विरुद्धं च। श्रुतौच यागोऽपूर्वद्वारा फलद इति क्वापि नोक्तम्। ईश्वरानङ्गीकार ईश्वरकारणतापरबहुश्रुतिस्मृतिविरुद्धः[1]। जैमिनीयप्रथमस्य प्रथमपादीयमिश्रग्रन्थात् जैमिनीया भेदवादिन इति भाति।

भगवान् **बादरायणस्तु**—श्रुत्यर्थनिर्णयाय ब्रह्मसूत्राणि प्रणयतिस्मेति सर्वेषामाचार्याणां मतम्। तत्र ब्रह्मसाक्षात्कारमपेक्षमाणैर्मुमुक्षुभिः तच्छ्रवणमनननिदि-ध्यासनरूपविचारः कार्य इति प्रथमेन सूत्रेण बोधयन् 'जन्माद्यस्ययत' इत्यादिना

---

अनन्तरम् = कालव्यवधानशून्यम्, (सार्वकालिकं) अभिलाषोपनीतम् = इच्छामात्रेणप्राप्तं नसंपादनायास इतिभावः। इतिलिङर्थप्रकरणे मंजूषायाम्। 'दुःखासंभिन्ननिरतिशयसुखरूपः स्वर्गइति मिश्रभावखण्डदेवाः। मोक्षस्तु स्वर्गादन्यो ज्ञानसाध्यः, सच—'निःसंबन्धो निरा-नन्दश्चे' (जै. १.१.५. अ.)तिमिश्राः। अत्र तदीयार्षवचनं मृग्यम्। स्वर्गसुखं न नित्यसुखं 'क्षीणेपुण्ये मर्त्यलोकंविशन्ती' (मु.)त्यादिश्रवणात्। गीतायां नवमेप्युक्तमित्थम्। नित्यसुखंतु न कर्मसाध्यं नास्त्यकृतः कृतेनेत्युक्तेरितिब्रह्मविदां मतम्।

1. अत्र "अक्षपादप्रणीतेच काणादे सांख्ययोगयोः। त्याज्यः श्रुतिविरुद्धोऽर्थः "इति पाद्मपुराणम्" इति अक्षपादशब्दे वाचस्पत्युक्तिरप्यनुसन्धेया।

जिज्ञास्यस्य अनितरसाधारणजगत्कर्तृत्वादि गुणान्निरूप्य, जिज्ञासाप्रयोजननिरूपणावसरे'जगद्व्यापारवर्ज'मिति मुक्तात्मनां जगत्सृष्ट्यादिकर्तृत्वातिरिक्तसमस्तभोगं व्यवस्थाप्य न पुनर्जन्म लभन्तें मुक्ताइति प्रतिपादितवान् सूत्रकारः। सूत्रे जगद्व्यापारपदं विष्णवसाधारण लक्ष्मीपतित्वादेरप्युपलक्षणं, तेन तेपि धर्मा मुक्तानां नेति बोध्यम्। किंच—प्रत्यधिकरणं प्रायेण जीवावृत्तिधर्मवत्त्वं ब्रह्मणो निरूपयन्, क्वचिदधिकरणे'भेदव्यपदेशा'दिति भेदबोधकसूत्राणि रचयन्, क्वचित् ब्रह्मजीवयोरुपास्योपासकभावं, क्वचित् प्राप्यप्रापकभावं च प्रतिपादयन् ब्रह्मजीवयो र्भेदमेव मन्यते सूत्रकृत्। अयमस्य सिद्धान्तनिष्कर्षः—श्रुतौ कारणोपासनावाक्ये ब्रह्मात्मशब्दौ नारायणपरौ, सएव जगतां जन्मादिकर्ता, स एवोपास्यः शास्त्रोक्तगुणवत्त्वेन, सएव फलप्रदाता. 'अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः। स सर्गकाले च करोति सर्वं प्रयाणकालेच तदत्ति भूयः' इतिपुराणोक्तेरिति। इदं श्रुत्यनुसारिपुराणवचनमिति स्मृत्यधिकरणे शाङ्करभाष्यम्। ततश्च निर्णायकब्रह्मसूत्रानुसारेण सर्वश्रुतीनां भेदे तात्पर्यवर्णनं न्याय्यम्। 'तत्त्वमसी'त्यादौ सादृश्यादिना सामानाधिकरण्यव्यपदेशः न तु स्वरूपैक्येनेति भेदतात्पर्यकत्वमेव तेषां युक्तम्।

रामायणभारतेतिहासपुराणादिषु मोक्षकारणं ज्ञानभक्ति शरणागतयः, ताश्च परमात्मप्रसादद्वारा फलप्रापिका इति सविस्तरमवर्णयन् वाल्मीक्यादयः।

'त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः' इत्यादिरामायणे। 'हा नाथ द्वारकावासिन् क्वासि यादवनन्दन। इमामवस्थां संप्राप्तामनाथां किमुपेक्षसे॥ शंखचक्रगदापाणे द्वारकानिलयाच्युत। गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागताम्॥' (भार. सभा.) इत्यादयो भारते।

भगवानाचार्यः **पाणिनिरपि**—महता कण्ठेन जीवपरयो र्भेदमब्रुवाणोपि 'वासुदेवार्जुनाभ्यांवु'न्निति सूत्रे वासुदेवशब्दं पूर्वं प्रयुञ्जानो'ऽभ्यर्हितं पूर्व'मितिबोधनद्वारा व्यासमतमेवाभिनन्दयन् जीवेशयोर्भेदमाशंसते। 'श्वयुवमघोनामतद्धिते'(६-४-१३३) इति सूत्रे मघवच्छब्दस्य परप्रयोगस्तु ज्ञाप्यमर्थं न सर्वत्राश्रयन्त इति बोधनाय। अतस्सूत्रे वासुदेवपदस्य वसुदेवसुतकृष्णपरत्वे सर्वाधारवासुदेवाभिधपरमात्मपरत्वे वा उक्तार्थसिद्धिर्निराबाधा। अभ्यर्हितत्वस्य भेदनिबन्धनत्वेन वासुदेवे अर्जुनोपलक्षितसर्व जीवभेदः, सर्वोत्तमत्वं चेत्युभयं पाणिनिसंमतमिति शक्यनिरूपणम्, निरूपितंचैतदत्र

ग्रन्थे(१५-पु) । पाणिनिरर्वाचीनो व्यासमहर्षेः । 'संज्ञैषा तत्रभगवत'इतिभाष्यतत्त्यकैयटाभ्यां परमात्मपरमेव वासुदेवपदमिति निष्कर्षः । 'संज्ञैषा देवताविशेषस्ये'ति प्रतीकमादाय 'वसत्यस्मिन् सर्वमिति व्युत्पत्त्या परमात्मन एवैषा संज्ञे'ति वदन् पदमञ्जरीकारोपि भाष्योक्तद्वितीयपक्षएव साधीयानिति मन्यते । वसुदेवसुते श्रीकृष्णे भगवदवतारत्ववादं प्रद्विषन्तो बहवःपुरा आसन्निति प्रतीयते। 'अवजानन्ति मां मूढा मानुषीं तनुमश्रित'(गी. ९-११)मितिगीतोक्तेः, अद्यत्वेपि कलिमहिम्ना तादृशाः केचन भवेयुः, साधवस्तु कृष्णे नारायणावतारत्वनिश्चयवन्त एवेति नाऽस्माकं भगवदवतारत्वसाधनोद्यमः सफलः। किंच–तत्साधनेन कृष्णवाचकमेव वासुदेवपदमित्यङ्गीकारे तत्पदोपादानं व्यर्थं स्यात्, उक्तदिशा ऽन्यथासिद्धिरिति 'अथवे'तिपक्षान्तरमास्थितं भगवता भाष्यकृता । अतः–श्रीकृष्णे भगवदवतारत्वाभावधिया पक्षान्तरमादृतं भाष्य इति मा शङ्कनीयम् ।

सांख्यादिषु एतेषु क्वचिदपि प्रपञ्चो भेदश्च मायिकः(असत्यः)इति न प्रतिपादितम् । ब्रह्मविद्यया संपाद्यमानःसुखविशेषएव नित्यः, विषयेषु नानुरागःकार्यः न ते नित्यसुखानुभवहेतवोऽसारा अनित्याश्चेति परं निरूपितम् । अतएव–ब्रह्मवादिभिः शमदमादिगुणसंपत्तिः, नित्यानित्यवस्तुविवेकः, विषयविरक्तिः, मुमुक्षुत्वमिति अधिकारसंपदं निरूपयद्भिः 'नित्यानित्यवस्तुविवेक'इत्युक्तं, नतु 'सत्यमिथ्यावस्तुविवेक'इति । भागवते पञ्चमे, एकादशेच स्कन्धे(११-अ. २८-अ)जडभरतरहूगण भगवदुद्धवसंवादादौ संसारे प्राणिनां वैराग्योदयाय संसारानित्यत्वं प्रतिपादितं नतु तस्यमायिकत्वम् ।

सत्येवं शास्त्राणां वस्तुतत्त्वे वैयाकरणसार्वभौमो न्यायमीमांसाऽतिरिक्ततन्त्रेषु बहुग्रन्थप्रणेता **नागेशनामा** पण्डितमणिः 'वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यत'इति वैयाकरणसिद्धान्तनिरूपणं प्रतिश्रुत्य स्फोट[1]स्वरूपनिरूपणमुखेन अर्वाचीनं कंचन परमार्थसारनामानं ग्रन्थं शास्त्रत्वेनाश्रित्य, 'तत्रत्यवचनोपन्यासेन, क्वचिच्चरकोपन्यासेनच, आत्मैकत्वं, जगतो मायिकत्वं(मिथ्यात्वं) च व्यवस्थापयति । निरूपयतिच कैयटो भाष्यव्याख्यावसरे आत्मैकत्वादिकं, भट्टोजीदीक्षितोपि तत्र तत्र अद्वैतप्रक्रियां दर्शयति

1. 'अथगौरित्यत्र कःशब्दः, उभयत्र स्फोटमात्रं निर्दिश्यत'इति'एओङ्' सूत्रभाष्यव्याख्यायां भर्तृहरिकृतदीपिकायामपि सर्वसंमतवाचकशब्दातिरिक्तो विलक्षणः कश्चन स्फोटो भाष्यसंमतइति न व्यवस्थापितम् ।

कौस्तुभे । तत्र मञ्जूषायां जगतो मायिकत्वनिरूपणावसरे 'तदनन्यत्व' (ब्र. सू. २-१-१४)मिति व्याससूत्रोपन्यासेन, 'वैयाकरणसिद्धान्ते'ति प्रतिज्ञापूर्वमद्वैतनिरूपणात्। कैयटकौस्तुभादावद्वैतप्रक्रियानिरूपणाच्च तदुभयमभिमतं श्रीव्यासपाणिन्योरिति कदाचित्कस्यचिदाशङ्का जायेत, मा भूत्कदाचिदपि तादृशी शङ्का, पाणिन्यादिभिस्तथाऽनिरूपणादिति प्रतिपादनाय, नैर्मल्यसंपादनाय चाऽऽस्माकीनवाङ्मनसयोः, तयोः तत्त्वं समालोच्य, श्रीव्यासपाणिनिभावनिर्णयनामानं ग्रन्थमिममतानिष्म । नागेशस्तावदद्वैतवासनावासितान्तःकरण इति स्पष्टं भवेत् तदीयग्रन्थपरिशीलनशालिनाम्, अथाप्ययं श्रीशाङ्करमतानुयायिनोऽद्वैताचार्यान्महत्तमान् प्रद्वेष्टीति चित्रमिदम्। इदमपि शक्यं विज्ञातुं सर्वेषाम्, मञ्जूषायामद्वैतमतजीवातुभूताऽनादिभावरूपाविद्यापदार्थदूषणप्रकरणादिदर्शिनाम् । किंच—केचनाचार्या वस्तुतत्त्वमपलप्य अन्यथाभाषमाणाः प्रतारकाः, केचन भ्रान्ताः, केचन अवास्तवमर्थमुपदेष्टार इति मञ्जूषायामाह नागेशः, तदनुवादेपि न प्रवर्तेत विदुषां वाणी । कुतूहलिनस्तु ततएवाऽवगच्छन्तु । यागे पशुविसनं पापसाधनमिति सप्रमाणमसाधयत् लिङर्थवादे मञ्जूषायाम्, अनुमोदनीयमेवैतत् । अथापि ना भिनन्दन्ति केचन ।

श्रीमदाचार्यतातपादानां, श्रीव्यासपाणिनिवररुचिपतञ्जलीनां च परमानुग्रहसंवर्धितफणिपतिधराधिवासि श्रीपद्मावतीसहायश्रीनिवासकृपाऽपाङ्गो ग्रन्थमिमं संपूर्णभावमगमयत् ।

भूमिकालेखनं व्युत्पित्सूनां रुचिमुत्पाद्य प्रवर्तयति ग्रन्थपठनादाविति निश्चित्य प्रतिग्रन्थं प्रारम्भे तां विलिखन्ति पाश्चात्यभाषापण्डिताः, निरूपयन्ति च तत्र आवश्यकं ग्रन्थकर्तुः कालादिकम्, उपादेयताप्रयोजनकग्रन्थप्राशस्त्यम्, नातिविस्तरं ग्रन्थप्रतिपाद्यप्रमेयम् । समीचीनेयं पद्धतिरिति अस्मद्देशीया अपि सर्वभाषापण्डिता भूमिकालेखनावलोकनकर्मणि सोत्साहाः प्रवर्तन्ते । प्राचीनास्तु केचन शोधनादिकर्मणि प्रवर्तमानास्तां तथाविधामेव व्यलेखिषुरिति जानीमो मुद्रितग्रन्थावलोकनेन । अर्वाचीनास्तु केचन ग्रन्थशोधनादौ प्राप्ताधिकाराः भूमिकालेखनावसरे अभिनिवेशेन प्रस्तुतग्रन्थसंबन्धं कथंचित् परिकल्प्य स्वस्वाभिलषितविषयान् निरङ्कुशं निरूपयन्ति । तदेतन्निरूपणं प्रस्तुत ग्रन्थस्य नोत्कर्षमावहति नोत्पादयतिच तत्र विस्रम्भं जिज्ञासूनाम् । इदमत्र निदर्शनम्—खिस्ताब्दे (1925)तमे काश्यां चौखांबामुद्रणालये मुद्रितव्याख्याद्वयसनाथसभाष्यन्याय

दर्शनग्रन्थे भूमिकालेखको ढुण्डिराजशास्त्री भूमिकाप्रथमपुटे टिप्पण्याम्-एवं लिखतिस्म। "कदाचिद्वेदव्यासमुनिः गौतममिदमूचे, यत्त्वया जीवब्रह्मणोर्भेदस्तर्केण साधितः, तत्ते मुखं न द्रक्ष्यामीति, ततो गौतमेन व्यासदर्शनाय प्रसारितःपादः सचक्षुर्जातः, इति तन्माहात्म्यपरितुष्टेन व्यासेन गौतमस्याऽक्षपादनाम्ना स्तवः कृत इति होचुर्वृद्धा" इति । तस्यैवमाशयमुत्प्रेक्षन्ते—भूमिकापठनमात्रेण व्यासो जीवब्रह्माभेदाभिमानी, तत्प्रणीतसूत्राणि चाभेदपराणि, अतो व्यासस्य भेदे तात्पर्यं तद्वाक्यानां भेदपरत्वं चोत्प्रेक्षमाणान्निन्दन्तु विपश्चितः, इति । अथवा—निशम्य व्यासवचनमदत्त्वा प्रतिवचनं सचक्षुषं पादं प्रसारयन् गौतमः, पश्य मे पादे चक्षुः सर्वविलक्षणामात्मनःसृष्टिं कुर्वाणस्य ब्रह्मणः सृष्ट्यादिकर्मणि अस्त्यनितरसाधारणः सामर्थ्यविशेषः, तेन हेतुना आत्मदृष्टान्तेन जीवब्रह्मभेदमसाधयमिति बोधयन् व्यासं चक्रे निरुत्तरम्, तेन जानीमो व्यासो न निराकरोद्भेदम्, अतस्तदीयाद्वैतसिद्धान्तो न समीचीनः 'अप्रतिषिद्धमनुमतं भवती'तिन्यायेन गौतमसाधितो भेदो व्यासेनाप्यङ्गीकृतः, अतो लोके ऽभेदवादिनो, व्यासतदीयवचसामभेदे तात्पर्यं वर्णयतो विपश्चिज्जनान् निन्दन्तु सर्वे जनाः, इति । यद्वा—अत्रलेखे'तर्केणसाधितस्त्वये'तिवाक्यश्रवणात् सतीषु बह्वीषु भेदवादिनीषु श्रुतिषु कस्मात्कारणात्तर्केण साधितो भेदो भवतेति नियुक्तो गौतमः किंप्रतिवचनेन, विविधविचित्रप्रजासर्जनसाधनसामर्थ्यमीश्वरेऽस्ति, नास्तिच जीवेष्विति पर्यालोच्य तेनहेतुना जीवेशभेदस्साधितो मया, एतावता त्वदीयवचनस्य भेदपरश्रुतिवाक्यानांच का क्षतिः, भवानेव जानाति वरीयस्तर्केण भेदसाधनं विलक्षणां भगवतः सृष्टिक्रियां दृष्ट्वा इति विलक्षणां भगवत्कृतां 'पश्यतु भवानिति सचक्षुःपादं प्रासारयत् । ततश्च व्यासो नाभेदवादी, गौतमस्तं नावजानीते इत्युभयोश्च द्वैतमेव संमतमिति । अत्रलेखकाशयस्तु तं पृष्ट्वैवावगन्तव्यः । एवंजातीयकाः वाचस्पत्यादिभिः "अक्षपादशब्दे" अभिहिता गाथाश्च चिन्त्याः । [1]पाश्चात्येन Encyclopaedia of Religion and Ethics Vol IX Page 422. b कोशे अक्षपादशब्दस्य

---

2. Encyclopaedia of Religion and Ethics Vol IX p. 422 b.
*Nyaya*:

Its founder is known either by his genetic name of Gowthama or by a nickname which has lost its opprobrious meaning and has supplanted the personal name, "*Akshapâda*". the eye-footed, *ie* with the eye directed on the feet.

स्वदृष्टिं स्वपादयोर्निवेशयन्निति तात्पर्यार्थो वर्णितः। वृद्धतमास्तु—व्यासगौतमसमावेश-संभाषणादिकथातु शङ्कररामानुजसमावेशसंभाषणकथासब्रह्मचारिणीति वदन्ति ॥

एवंव्याख्यातारोपि केचन व्याख्येयप्रबन्धप्रणेतॄणामपकर्षगर्भं वाक्यं लिखन्ति, आत्मभेदनिरूपणपरन्यायभाष्यव्याख्याने भाष्यचन्द्रे'आस्तिकानां परमसिद्धान्तोऽद्वैत' मितिवाक्यं दृश्यते, एतेन भेदवादिनो नैयायिका नास्तिका इतिध्वन्यते ।

नीलकण्ठीये दीपिकाप्रकाशे—तत्त्वमसीतिप्रतीकमादाय'इदमुदाहरणं जीव-ब्रह्मणोरैक्यं ब्रुवतां ब्रह्मवादिनां सिद्धान्ताभिप्रायेणे'तिवाक्यमस्ति। ब्रह्मवादिनो द्विविधाः, ऐक्यवादिनो, भेदवादिन इति, तत्राद्यमताभिप्रायेणेदमुदाहरणमिति तस्य स्वारसि-कोऽर्थः। अत्र—प्रकाशव्याख्याता भास्करोदयकारः—अत्रब्रह्मवादिनामिति विशेषणात् इतरेषां द्वैतवादिनामवास्तविकब्रह्मवादित्वसूचनादद्वैतमताभिमानो ध्वनित'इति प्रकाशा-भिप्रायं प्रकटीचकार। तेन विशेषणेनायमर्थः कथं ध्वन्यत इति निर्मत्सरास्सहृदया विमृशन्तु। सन्ति एवम्प्रकारा लेखा बहवो बहुषु ग्रन्थेषु। तेऽपि स्वस्वमताभिनि-वेशमूलकाः न प्रस्तुतग्रन्थोत्कर्षावहा इति भाति।

## (चरकादिविचारः)

'चरके पतञ्जलिः, पतञ्जलिराह' इति कर्तृनामनिर्देशेन चरकपरमार्थसार ग्रन्थस्थवचनोपन्यासेन, महाभाष्यकृतोपि पतञ्जलिनाम्नैव प्रसिद्धेः, महाभाष्यकृत्पतञ्जलि-प्रणीतावेव तावुभावपि ग्रन्थाविति मा संशयितव्यम्। उभयोश्च तयोर्ग्रन्थयोः पतञ्जलि-विरचितत्वे प्रबलप्रमाणानुपलम्भात्। तथाहि—तत्र वैद्यके चरकोनाम कश्चिदस्ति ग्रन्थः प्रसिद्धः, सच चरकमुनिप्रणीतइति वैद्यकाचार्या वदन्ति इति सर्वेषां ज्ञातचरम्। तस्माच्चरक नाम्ना तत्कृतस्य ग्रन्थस्यापि लोके व्यवहारः। कवयोहि कविनाम्नापि काव्यं व्यवहरन्ति यथा 'माघ'इति साहित्यदर्पणकारादीनां व्यवस्थादर्शनेन कविकाव्ययोरेकनामत्वे न विप्रतिपत्तिर्विदुषाम्। चरकस्तु भगवत आत्रेयस्य मतं संक्षिप्य अग्निवेशेन कृतं तन्त्रं प्रतिसंस्कृत्य चरकनामानं ग्रन्थमेकमतनिष्टेति'अत्राहभगवानात्रेयः, अग्निवेशकृतेतन्त्रे चरकप्रतिसंस्कृते'इतिप्रत्यध्यायमादावन्तेच चरके वाक्यदर्शनादध्यवस्यामः, पुराणस्य नवीकरणरूपो जीर्णसंस्कारात्मको व्यापारः, आचार्योक्तस्य स्पष्टीकरणपूर्वमनुक्तां-शपूरणंवा' प्रतिसंस्कारः। तादृशोऽयं चरकग्रन्थ इति आयुर्वेदविदः।

अस्य ऋषिपुत्रस्य एतन्नाम्ना व्यवहारे इममितिहासं वदन्ति पुराविदः—पुराकिल भगवान्नारायणो मत्स्यरूपेण सर्वान्वेदानुद्दधार, तदा फणिपतिरखिलान् वेदान् साङ्गान् अथर्वान्तर्गतमायुर्वेदं चाऽधीत्य सकलभुवनवृत्तं ज्ञातुकामः—'चर'(गूढचारः) इव सर्वां महीं सञ्चचार, तदा तं नागाधिप इति जना नाऽज्ञासिषुः, ततोऽयं चरकइति व्यवहृतो लोके; चरशब्दात् अज्ञाते(पा. सू. ५-३-७३) इति के निष्पन्नोऽयं शब्दः। अतएव-चरकप्रास्ताविकलेखकोऽपि-'अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमे प्राप्ते तस्मिन् दृढबलेनतु'इतिचरकस्यैव संस्करणकर्तृत्वमाह, नतु पतञ्जलेः, यदि पतञ्जलिः संस्कर्ता अभविष्यत् तदा'पतञ्जलिप्रतिसंस्कृते'इत्येवावक्ष्यत्। 'पतञ्जलिस्तु स्वयमाविर्भूत्वा कृतसंस्करणमात्मानं कृतकृत्यं मेने'इतिचरकोपोद्घाते लेखस्तु प्रमाणानुपन्यासेन न विश्वासस्थानम्। अतएव—वैद्यकशास्त्रे प्रबन्धप्रणेता भवमिश्रः भावप्रकाशकारः स्वीयप्रबन्धादौ आयुर्वेदविदाचार्यपरंपरां प्रतिपादयन् चरकाख्यऋषिरेव चरकस्य कर्तेत्याह। एते तदीयाःश्लोकाः—

'यदा मत्स्यावतारेण हरिणा वेद उद्धृतः।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान्॥ ५७॥
अथर्वान्तर्गतं सम्यगायुर्वेदं च लब्धवान्।
एकदा स महीवृत्तं द्रष्टुं चर इवाऽऽगतः॥ ५८॥
अनन्तश्चिन्तयामास रोगोपशमकारणम्॥ ६०॥
सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह।
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः॥ ६१॥
यत श्चर इवाऽऽयातो न ज्ञातः केनचिद्यतः।
तस्माच्चरकनामासौ ख्यातश्च क्षितिमण्डले॥ ६२॥
स भाति चरकाचार्यो वेदाचार्यो यथा दिवि।
सहस्रवदनस्यांशो येन नाशो रूजां कृतः॥ ६३॥
आत्रेयस्य मुनेः शिष्या अग्निवेश्यादयोऽभवन्।
मुनयो बहव स्तैश्च कृतं तन्त्रं स्वकंस्वकम्॥ ६४॥

तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ।
चरकेणाऽऽत्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥ ६५ ॥ इति

अत्राचार्यपरंपरायां पतञ्जलेर्नाम्नोप्य(श्रवणात्)परिगणनेन चरकसंस्करणं न पतञ्जलिना प्रणीतमिति प्रतीमः ।

'योगेन चित्तस्य पदेन वाचां मलं शरीरस्यच वैद्यकेन । यो ऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलि रानतोऽस्मि' इति सांप्रदायिके पद्ये वैद्यकपदेन चरक एव ग्राह्य इत्यत्र मानाभावः । 'पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः । मनोवाक्काय-दोषाणामाहर्त्रेऽहिपतये नम' इति चक्रदत्तीयचरकव्याख्यानाद्यपद्यस्य पतञ्जलिप्रणीत-योगेन, रूपान्तरेण कृतमहाभाष्येण, चरकरूपेण कृतवैद्यकसंस्करणेन, मनोदोषादीन् अपाहरदहिपतिरिति तात्पर्यात् नैतदपि तत्र मानम् । "शब्दानामनुशासनं विदधता पातञ्जले कुर्वतावृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके । वाक्चेतोवपुषां मलः फणभृतां भर्त्रेव येनोद्धृत स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो ज्वलन्त्युज्ज्वला" इतियोगसूत्र-वृत्तिकृद्भोजराजपद्येऽपि चरकः पतञ्जलिप्रणीत इत्यत्र गमकं पश्यामः । अतोऽहिपतिरेके-नैवाऽवतारेण स्वस्वरूपेणवा न त्रीन् ग्रन्थानकरोत्, किंतु अवतारत्रयेणेति निश्चेतव्यम् । नच–पतञ्जलेरेव नामान्तरं चरक इतिवाच्यम्–तथाकल्पने दृढतर-प्रमाणानुपलम्भात् । नच पतञ्जलिचरकयो रहिराजावतारत्वेन चरककृतत्वेपि पतञ्जलि-कृतत्वव्यवहारोप्युपपद्यत इतिवाच्यम्–श्रीकृष्णबुद्धयोर्भगवदवतारत्वाविशेषेपि बुद्धा-गमस्य श्रीकृष्णकृतत्वमिति, गीतादेर्बुद्धकृतत्वमिति, व्यवहारादर्शनेन अत्रापि अन्य-कृतेऽन्यकृतत्वव्यवहारायोगात् । तस्मात् 'योगेने'तिपद्ये (वैद्यकेनेति वचनम्) उक्तवैद्यकग्रन्थकर्तृत्वंतु 'सूत्राणि योगशास्त्रे वैद्यकशास्त्रेच वार्तिकानि ततः' (५-२५) इतिपतञ्जलिचरिते तत्कृतत्वेनोक्तवार्तिकमादाय, पातञ्जलेतु स्पर्शादिनापि पाकवि-ज्ञानमुक्त'मित्यादि चरकीयलौहविधिव्याख्यातृवचनेन तद्रचितत्वेन सिद्धरसायनतन्त्र-मादाय, चोपपन्नमिति शक्यं वक्तुम् ।

किंच–चरिते'चरकनामानम्, चरक संस्कार'मितिवाऽनुक्तिः चरकसंस्करणं न पतञ्जलिकृतमिति चरितकाराशयं प्रकटयति । 'संहितामतुला'मिति चरितश्लोकपाठस्तु किमयं सुश्रुतसंहितामकरोत्, आहोस्वित् चरकसंहिताम्, अथ अन्यां महतीं कांचन

संहितामिति बहुविधसन्देहहेतुरिति न सांप्रतम् । अतः 'योगेने'तिपद्यं चरकसंस्करणं पतञ्जलिकृतमित्यस्य न साधकम् ।

केचित्तु—इदंपद्यमेकमेव तारानाथतर्कवाचस्पतिना संशोध्य मुद्रापिते भोजवृत्तिसहितयोगसूत्रे भोजवृत्तिमङ्गलपद्यतया लिखितम्, अधुना मुद्रितभोजवृत्तौ तु नेदंपद्यं दृश्यते, तत्स्थाने अन्ये सप्तश्लोका दृश्यन्ते, विज्ञानभिक्षुकृतयोगसूत्रवार्तिके ऽयंश्लोक इति प्रत्यक्षशारीरकोपोद्धातेलिखितं वासवदत्ताव्याख्याने रामभिश्रकृतेऽयमित्यर्वाचीनाः केचन । अतः केनेदं कृतमिति कर्तुरनिर्णयेन संदिग्धप्रामाण्यमिति वदन्ति ।

अन्येतु—इदंपद्यं प्रमाणमेव क्वचिद्देशे शान्तिपठनपूर्वं महाभाष्यप्रवचनावसरे एतच्छ्लोकपठनाचारदर्शनात् । आन्ध्रास्तु न पठन्ति, प्रदीपादिषु शाब्दिकग्रन्थेष्वयं श्लोकः क्वापि न दृश्यते । चक्रदत्तभवमिश्रवचनैः चरकसंस्करणस्य स्पष्टं चरकमुनिप्रणीतत्वलाभेन पतञ्जलिप्रणीतत्वनिर्णयाय न कल्पेत पद्यमिदम् । पतञ्जलिस्तु भगवान्सर्वलोकमान्यो महर्षि रप्रतिमप्रभावः, सदृक्ष आत्रेयादिभिः, अधिकोवा तेभ्य इत्यत्र न ह्यस्ति संशयलेशः । सचेत्संस्कारकर्ता चरकस्य, महामहिम्नस्तस्य नाम आचार्यपरंपरायां भवमिश्रः कस्मान्नाजीगणदिति परं चिन्तास्थानम् । नच वाच्यं गुरुपरंपरायां श्रूयमाणं चरकपदं पतञ्जलिवाचकमिति, उभयोः शब्दयोः पर्यायत्वेन लोके व्यवहाराभावात्, कोशाभावाच्च, 'पतञ्जलिसुसंस्कृत'मिति स्पष्टं वक्तव्यत्वाच्च । ततःचरकसंस्करणं पतञ्जलिकृतमिति दुर्निरूपम् । स्पष्टप्रमाणानुपलम्भेन नायं विवादः शाम्येत् आकल्पम् । पाश्चात्या अपि इतिहासनिपुणाः चरकः पतञ्जलिकृतइति न वदन्तीति प्राहुः । आस्तां तावदेष विचारः ॥

(परमार्थसारविचारः)

'योगेनेत्यादिश्लोकेषु पतञ्जलिचरिते अन्यदीयग्रन्थे पाश्चात्यभाषाविशारदविरचितकविचरितेषुच पतञ्जलिकालादिनिर्धारणावसरे न परिगण्यते परमार्थसारस्तत्कृतिषु इति सोपि न पतञ्जलिविरचितः, कैयटदीक्षितादयोपि क्वापि एनं ग्रन्थं प्रमाणतया नोदाहार्षुः । श्रीशङ्कराचार्यादयोप्यद्वैतमताचार्या अद्वैतप्रक्रियानिरूपणावसरे प्रमाणतया नोदाहरन्तीत्ययमत्यन्तमर्वाचीनः । यद्ययं पातञ्जलः, तर्हि उदाहरेयुरेव !

ननु—'इत्याधारो भगवान् पृष्टः शिष्येण तं स होवाच। (८) वेदान्तशास्त्र मखिलं विलोक्य शेषस्तु जगतआधार'(८७) इत्यार्याभ्यां जगदाधारो भगवान् आदिशेषः प्रणीतवान् तं ग्रन्थमित्यवगम्यते, अतस्तत्कृतो नेति कथं शक्यं वक्तुमिति चेत्—वदामः-अन्तिमायामार्यायां 'जगतआधार'इत्यस्य शिरसा निखिलभुवनभारं वोढेति नार्थः, अपितु गर्भगृहवासादिकल्लोलमालासंकुले संसारसिन्धौ मग्नं तरणोपायमलभमानं (जगत्) प्राणिवर्गमवलोक्य दयालुःकश्चित् कंचन विद्वांसं स्वगुरुं शेषनामानमधीतवेद-वेदाङ्गं कृपालुं शिष्यजनसंशयनिवर्तकं भवसागरतरणोपायमपृच्छ'दिति

*गर्भगृहवाससंभवजन्मजरामरणविप्रयोगाब्धौ ।
जगदालोक्य निमग्नं प्राह गुरुं प्राञ्जलिः शिष्यः ॥ ३ ॥
त्वं साङ्गवेदवेत्ता भेत्ता संशयगणस्य ऋतवक्ता ।
संसारार्णवतरणप्रश्नं पृच्छाम्यहं भगवन् ॥ ४ ॥ इति

तृतीयतुर्याभ्यामार्याभ्यामुक्तेः गहने संसारे वर्तमानतरणोपायानभिज्ञप्राणि वर्गपरं जगत्पदं तस्याधार इत्यर्थः, अज्ञानां ज्ञानोपदेशेन तारकत्वादाचार्य आधारो भवतीति तात्पर्यम् ।

भगवान् फणिराडयमहर्दिवं परिचरति वासुदेवं पर्यङ्कादिबहुरूपेण, उपास्तेच तमनिशं स्वस्मिन् स्वाभाविकं भृत्यभावं, परमात्मनि स्वामिभावंच विभावयन्, इत्यतिरोहितमिदमितिहासादिविदां सर्वेषाम् । एवंविधातु भावना जीवात्मपरमात्मैक्याध्यासवतां न कदापि संभवतीति आत्मभेदनिश्चयवतैव भवितव्यं तेन, अतः सर्वविलक्षणं परमात्मानं रात्रिंदिवमीश्वरत्वेनोपासीनःफणीशः आत्मैक्यप्रतिपादकं शास्त्रं कथं प्रणयेत् । नहि महान्तः परान् प्रतारयितुं प्रवर्तन्ते विना कारणेन । तस्मादयं परमार्थ सारग्रन्थः शेषावतारेण पतञ्जलिना, आदिशेषेण वा न कृत इत्येव तत्त्वमित्यलं बहुना ।

अत्राह कश्चित्—चक्रदत्तभोजराजाभ्यां स्वस्वश्लोके योगसूत्रस्यैव पातञ्जलपदेन व्यवहारात्, महाभाष्यं पतञ्जलिप्रणीतं न वेति संदिहते जना इति । अत्र केचित् वदन्ति 'योगेन'तिपद्ये एकस्यैव पतञ्जलेः योगादिग्रन्थत्रयनिर्मातृत्वाभिधानेन, 'प्राज्ञमर्पय सुतं मम भास्व"(प. च. २-१०)न्निति प्रार्थनापूर्वं भास्वतेऽर्घ्यं ददत्या गोणिकानाम्न्याः कस्यचिद्दृषेर्धर्मपत्न्या अञ्जलिमध्यात्सहस्रांशुनिदेशेन तापसवेषः

कुमाररूपी पतन् [1]पतञ्जलिरिति विख्यातः, 'भाष्यं कुरुष्व वत्स त्व'(प. च.)मित्यादौ हरिहराभ्यामाज्ञप्तः पाणिनीयसूत्राणां भाष्यं चकार, योगवैद्यकग्रन्थौ चेति निरूपणेन च महाभाष्यादिकं प्राणैषीत् पतञ्जलिः, एतेन तावनन्याविति ।

न्यायकोशकारो महामहोपाध्यायः झलिकि भीमाचार्यस्तु पतञ्जलिशब्दे योग कृत्पञ्जलेरन्यो महाभाष्यकारः पतञ्जलिरिति वदन्, क्वचित्तु गोत्रप्रवर्तकः पतञ्जलिर्योगस्य कर्तेति वदन्तीत्याह । तारानाथतर्कवाचस्पतिरपि पतञ्जलिशब्दे "केषांचिन्मते योगसूत्रकारपतञ्जलेः भाष्यकृत्पतञ्जलिः भिन्न एव, अनयोरभेदं तु निर्दिशन्ति पाश्चात्याः' इत्याह ।

किंच—'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (पा. सू. ४-३-११०)व्यास-वरुडचण्डालबिम्बानांचेतिवक्तव्य'मिति सूत्रवार्तिकयोः पाराशर्यव्यासपदयोरुपादानेन पाणिनिकात्यायनाभ्यां प्राचीनो व्यासः, तेनच 'एतेनयोगःप्रत्युक्त' (ब्र. सू. २-१-३) इतिसूत्रेण योगतन्त्रस्य प्रत्याख्यातेन योगतन्त्रेण, तत्कर्त्रा पतञ्जलिनाच, ब्रह्मसूत्रादिकृतो व्यासात्प्राचीनेनैव भाव्यम् । महाभाष्यकर्तुः पतञ्जलेस्तु पाणिनिकात्यायनवचनव्या-ख्यानकर्तृत्वेन ताभ्यां 'वैयासिकिः शुक'इति तत्रत्यमहाभाष्येण, 'व्यासोऽत्र वेदव्यास एव प्रसिद्धत्वादिति शेखरोक्त्याच भारतादिकृच्छुकतातवेदव्यासाच्चार्वाची-नता सर्वेषां स्पष्टा । अतो योगसूत्रकारात्पतञ्जलेः महाभाष्यकृत्पतञ्जलिरन्यएव काल-भेदा *दिति सुस्पष्टम् ।

---

1. पतन्नञ्जलि र्यस्मिन् नमस्कार्यत्वादिति मनोरमाबोधिन्युक्तव्युत्पत्तिः, गोनर्ददेशे कस्यचिद्दषे रञ्जलेः संध्याकरणसमये पतित इति शेखरोपि, गोणिकापुत्र्यां अञ्जलेःपतितइति कथाविरुद्धः ।

* *Authorships of the Yoga Sutras.*

Identity of Patañjali, author of the Sutras and, of Patañjali, author of the Mahābhaṣya, not yet proved. (Introduction to Yoga system of Patañjali—Translated by Woods, edited by Harvard Oriental series in 1927).

1. Date of Yoga Sutras between A. D. 300 and A. D. 500. (Introduction to Yoga systems. Harvard Oriental series).

2. The main arguments for assigning him (Patanjali) to 150 B. C. are these ;—

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारेहि नित्यत्वं नोपपद्यते' इति 'युष्मदस्मद्भ्यां ङसोऽशि(पा. सू. १-२७)तिसूत्रोदाहृतवचने पाणिनेर्दक्ष-प्रजापतेर्दौहित्रत्वोक्तिरपि पाणिने र्व्यासोत्तरकालिकत्वेप्युपपद्यते।

हैरण्यगर्भयोगो निरस्तो व्यासेनेति मतेपि तत्संक्षेपकर्तुःपतञ्जलेर्न व्यासात्पूर्वतन-त्वमिति कल्पने कल्पकाभावः, 'योगेने'त्यादौ उभयोरेककर्तृकत्वोक्तिः पूर्वतनत्व कल्पिकेत्यपि न। 'पातञ्जलमहाभाष्ये'त्यादिचक्रदत्तादिवचनैरुभयोरेककर्तृकत्वस्यैव दुर्घटतया व्यासादर्वाचीनत्वेपि तदुपपत्या च तेन पूर्वतनत्वकल्पनायोगात्। किं बहुना लोके विचारपराणां प्राचीनानां व्यवहारो बहुधा वर्तते, योगकृत् व्यासात्पूर्वोवा भवतु उत्तरकालिकोवा, योगसूत्रमहाभाष्ययोः भिन्नकर्तृकत्वमेव।

लेखकास्तु स्वस्वोपलब्धप्रमाणानुसारेण यथामति विलिखन्ति। अस्ति महति महीमण्डले उभयोरपि कर्ता पतञ्जलिरिति प्रसिद्धिः अबाधिता। सनामानो हि बहवो महर्षयःकविलोकाश्चासन्। ते तु स्वनामकुलगोत्राणि, जन्मकालदेशादिकंच आदावन्ते वा न प्रतिपादयन्तिस्म। केचित्तु ग्रन्थकाराः केनचित्प्रकारेण प्रतिपादयन्ति स्म। भिन्नकर्तृकयोरपि ग्रन्थयोः परस्परच्छायानुसरणंतु परिचयातिशयाधीनम्। तस्मात् न तत् समानकर्तृकत्वे मानं स्यात्। अतिपरिचयादेव हि अन्यः अन्यग्रन्थच्छायामनुसरति। एतद्धि सर्वेषामानुभविकम्।

श्रीमत्तिरुपतितिरुमलैप्रभृतिदेवस्थानविचारणकर्तृभिः, श्रीमहान्तु प्रयागदासजी-प्रभुवर्यमहाशयैः, श्रीवेङ्कटेश्वरसंस्कृतमहाकलाशालायां S. V. S. College Tirupati. अध्यापकपदवीविश्राणनेन चिरकालं कृतपोषणं निर्विचारं ग्रन्थस्यास्य रचनानुकूल ग्रन्थावलोकनसाधनमनोऽवधानं संपादयत् प्रबन्धप्रणयने प्रथमं साधनमभूत्। एवमुप

---

(*a*) The instance इहपुष्पमित्रं याजयामः, in such a context that the event must have occurred within the life-time of Patanjali.

(*b*) Similarly the instances अरुणद्यवनस्साकेतम् and अरुणद्यवनो माध्यमिकान् which refer to a seige by Menander.

(*c*) As a collateral evidence the mention of financial expedient of Mauryas.

(Systems of Sanskrit grammar by Belvalkar page 32).

कुर्वतामेतेषां महाशयानां श्रीप्रयागदासविभुवराणां धन्यवादवितरणपूर्वकं कृतज्ञतां निवेदयामहे, आशास्महे च देवो भगवान् जानकीजानिरेतेषां परमं श्रेयो विदधात्विति।

प्रबन्धोऽयं श्रीमदुत्तरादिमठाधीशश्रीमद्वैष्णवद्वैतसिद्धान्तप्रतिष्ठापनाचार्यत्वाद्यनेकगुणगणाऽलंकृतसर्वतन्त्रस्वतन्त्र १०८ श्रीमत्सत्यध्यानतीर्थश्रीपादैर्बहुकृत्वः सविमर्शं समालोच्य आमोदितः। तेषाम्, अद्यत्वे तत्सिंहासनमधितिष्ठतां तथाविधवैदुष्यादिगुणरत्नरत्नाकराणां श्रीमत्सत्यप्रज्ञतीर्थश्रीचरणानां च परमानुग्रहेण, श्रितजनसंरक्षणबद्धदीक्षस्य श्रीवासुदेवस्य करुणाकटाक्षवीक्षणेनच मुद्रणकर्मापि कल्यब्दे तारणे (५०४४) समाप्तिमगात्।

श्रीमद्वेङ्कटाचलाभिधदिव्यक्षेत्र (तिरुपति) प्रान्तप्रदेशे विराजमानश्रीपद्मावतीदिव्यक्षेत्रे (पद्मसरोवर) चिरेण विराजमानश्रीमन्मध्वसिद्धान्तोन्नाहिसभीयश्रीमद्द्वैतपाठशालायां (S. M. S. O. D. College, Chirtanur) लब्धव्याकरण वेदान्ताध्यापकपदनिमित्तकनियतवासो मनःप्रणिधानप्रबन्धावलोकनपरिष्करणादिकर्मणि अनुकूलोऽभूत्। अत्र बहूपकृतवतां श्रीमदित्यादिगुणवतां **श्रीसत्यध्यानतीर्थश्रीमत्सत्यप्रज्ञतीर्थश्रीपादानां** स्मारंस्मारं प्रत्यहं तान् प्रणमामः।

श्रीसत्यप्रज्ञतीर्थानां विशेषेणाऽनुगृह्णताम्।
दिव्यपादाब्जयुगले विदधे नमसां शतम्॥

निर्दिष्टपाठशालायां अध्यापकपदं वितीर्य एतद्ग्रन्थमुद्रणादिविषये साहायकं कृतवतां श्रीसभापाठशालाकार्यनिर्वाहकसंघाध्यक्षकार्यदर्शिप्रभृतीनां **कानूकूर्ति कृष्णराव् बलवन्त पोतदारप्रमुखाणां** महाशयानां धन्यवादविश्राणनपूर्वं कृतज्ञतां निवेदयामः। श्रीसभापाठशालाकार्यनिर्वाहकसंघोऽयं विराजतामाचन्द्रतारं महीतल इति पद्मां, पद्मासहायं वासुदेवं च प्रार्थयामहे।

ग्रन्थपरिशोधनेन मुद्रणकर्मणि साहाय्यकमाचरद्भ्यः, मैसूरुश्रीमहाराजसंस्थानविद्वद्वर्येभ्यः न्यायव्याकरणपण्डितशिरोमणिभ्यः **धा. कृष्णमूर्त्याचार्य**, पण्डितरत्न **नेरूर. कृष्णाचार्येभ्यः** श्रेयोऽर्थनापूर्वं धन्यवादं वितरामः। श्रीतिरुपतिनगरविराजमान श्रीवेङ्कटेश्वरसंस्कृतमहापाठशालायां (S. V. S. College Tirupati) लब्धव्याकरणा-

ध्यापकस्थानाय मदन्तेवासिने जामात्रे व्याकरणशिरोमणि **श्री राममूर्तिशर्मणे, प्रूफ्** (proof) शोधनादिनोपकुर्वते, अन्येभ्योऽप्युपकुर्वद्भ्यः शिरोमणिविरुदभाग्भ्यो **श्री राजगोपालशर्म** प्रभृतिभ्यश्च मदन्तेवासिभ्यो भगवान् वासुदेवो निरन्तरं श्रेयो विदधात्वित्यभ्यर्थयामहे श्रीनिवासम् ।

पुस्तकमवलोकमाना निर्मत्सरा विपश्चितो मितमणयः 'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति' इत्यभियुक्तोक्तिमनुसन्धाय ग्रन्थेऽस्मिन् परिदृश्यमानगुणदोषयो र्मध्ये गुणमादाय तुष्येयुः, अक्षरसंयोजकानां संशोधकानामनवधानेन संभावितान् अक्षरपातविनिमयादिदोषान् कण्ठे नियच्छेयुः । मैत्रीं पुरस्कृत्य तानस्मत्सकाशे निवेदयेयुरिति सुदृढं विश्वसिमः ।



द्रव्यं वितीर्य बहव उपाऽकुर्वन्महाशयाः ।
उपकारकृतां तेषां श्रीपतिः शर्म यच्छतु ॥
भूमिकेयं भगवति श्रीनिवासे समर्प्यते ।
तेन शेषाचले वासी श्रीनिवासः प्रसीदतु ॥

तिरुच्चानूरु
तिरुपति
१–५–१९४४.

इति विदुषामनुचरः
**व्याकरणं, श्रीमुष्ण सेतुमाधवाचार्यः**



## अत्रोदाहृता ग्रन्थाः

ऋक्संहिता, यजुःसंहिता भट्टभास्करसायणभाष्ये दशोपनिषदः, श्वेताश्वतरश्च, तद्भाष्यतद्व्याख्यानानि । ब्रह्मसूत्रभाष्याणि तद्व्याख्यानानि भामती पञ्चपादिका विवरणवार्तिक-चित्सुखीकल्पतरुपरिमलादीनि, अद्वैतसिद्धिचन्द्रिकापरिभाषाः । जैमिनिसूत्रं—तद्भाष्यं, शास्त्रदीपिका, तन्त्रवार्तिकं, भाट्टदीपिका, गीता, तद्भाष्याणि तद्व्याख्यानानि गूढार्थदीपिका श्रीधरीयादयः । पाणिनिसूत्रं—भाष्यप्रदीपोद्द्योताः, भाष्यप्रदीपिका कौस्तुभकौमुदीमनोरमा-बोधिनीशेखरद्वयवृत्तिपदमञ्जर्यः । सहस्रनाम

०

भाष्यादि न्यायसूत्रं—तद्भाष्यवार्तिकतात्पर्यटीका तद्व्याख्यान न्यायमञ्जर्यः । वैशेषिक सूत्रं तद्भाष्यादीनि, मुक्तावलीदिनकरीय नीलकण्ठ प्रकाशिका भास्करोदयाः । सांख्यकारिका, तद्व्याख्यानानि । योगसूत्रं—तद्भाष्यव्याख्यानानि, वार्तिकं च । षष्ठितन्त्रकारिका, चरकपरमार्थसारौ, सव्याख्यौ । नैषधकिरातशाकुन्तलानर्घराघव रामायणचंपू काव्यप्रकाश प्रदीपाः । भारतरामायण भागवतविष्णुपुराणहरिवंशाः । मनुयाज्ञवल्क्यस्मृतयः, आपस्तंबसूत्राणि । खण्डनखाद्यम् । धर्मसिन्धुनिर्णयसिन्धू ॥

०

श्रीः

# श्रीव्यासपाणिनिभावनिर्णयस्थविषयानुक्रमः



## संकेतिताक्षराणां विवरणम् ।

ई. ईशावास्योपनिषत्
का. काठकोपनिषत्
के. केनोपनिषत्
ष. षट् प्रश्नोपनिषत्
मु. मुण्डकोपनिषत्
मा. माण्डूकोपनिषत्
तै. उ. तैत्तिरीयोपनिषत्
ऐ. ऐतरेयोपनिषत्
छा. छान्दोग्योपनिषत्
बृ. बृहदारण्यकोपनिषत्
श्वे. श्वेताश्वतरोपनिषत्
ऋ. ऋक् संहिता
य. यजुः संहिता
भार. भारतम्
भाग. भागवतम्
वि. विष्णुपुराणम्
रा. रामायणम्
तै. आ. तैत्तिरीयारण्यकम्
पा. पाणिनिसूत्रम्
ब्र. ब्रह्मसूत्रम्
जै. जैमिनिसूत्रम्
न्या न्यायसूत्रम्
वै. वैशेषिकसूत्रम्
यो. योगसूत्रम्
गी. गीता
नै. नैषधकाव्यम्
भारवि. भारविकाव्यम्

ॐ

श्री गुरुभ्यो नमः

# श्रीव्यासपाणिनिभावनिर्णयः

श्रीवासुदेवः प्रसन्नः

सनीरनीरदप्रख्यं सच्चिदानन्दविग्रहम् ।
रमारमणमीशेशं श्रीकृष्णं समुपास्महे ॥ ॥ १ ॥

ज्ञानमुद्राऽञ्चितकरं [1]नृसिंहार्यकराऽर्चितम् ।
व्यासं वन्दारुमन्दारं वन्दे ऽहं बुद्धिशुद्धये ॥ ॥ २ ॥

पाणिन्यादिगुरून्वन्दे शब्दशास्त्रप्रवर्तकान् ।
येषां सूक्तिः पूरुषाणां वाङ्मलानि चिकित्सति ॥ ॥ ३ ॥

शब्दाब्धिकुम्भयोनिं गौतमकाणादतन्त्वनिष्णातम् ।
मीमांसाद्वयनिपुणं नौमि श्रीसु[2]ब्बरायगुरुवर्यम् ॥ ॥ ४ ॥

श्रीसेतुमाधवाभिख्यः सुधीस्तेषां गिरां स्म[3]रन् ।
कुर्वे श्रीव्यासपाणिन्योर्ऋष्योर्भावविनिर्णयम् ॥ ॥ ५ ॥

वासुदेवः परं तत्त्वमिति व्यासश्च पाणिनिः ।
अभिप्रैतीति संक्षिप्य सप्रमाणमिहोच्यते ॥ ॥ ६ ॥

सभवान् महर्षिः पाणिनिराचार्यश्चिरकालं तपश्चरणेन प्रसादितान्महेश्वरात् अक्षरसमाम्नायमधिगम्य सर्वेषां प्रमाणभूतो दर्भपवित्रपाणिः शुचाववकाशे

1. अस्मत्कुलकूटस्थः पुरुषः । 2. अस्मत्तातपादपूज्यचरणाः महामहोपाध्याय वैयाकरणकेसरि, वैयाकरणचक्रवर्त्यादिबिरुदावलिमण्डिताः श्रीमत्पूर्णप्रज्ञमतानुयायिनः
3. अधीगर्थेति कर्मणिषष्ठी,

प्राङ्मुख उपविश्य महता मनःप्रणिधानेन 'वृद्धिरादैच्'इत्यादीनि 'अअ' इत्यन्तानि सूत्राणि प्रणीय पुंसां वाङ्मलं विधूनयन् शब्दापशब्दविवेकरव्यातिमुदपादयत् । उक्तंहि शिक्षायाम्—

"येनाऽक्षरसमाम्नाय मधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ (१)
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाऽज्ञानजं भिन्नं तस्मै पाणिनये नमः" ॥ इति (२)

इदंच सार्वलौ [1]किकम् । इदमीदृशं व्याकरणं वाक्यवाक्यार्थोपयोगि, पद-पदार्थाऽवगतिसाधनं सर्वपुरुषार्थसाधनपरमपुरुषमाहत्म्यपरिज्ञानहेतुभूतवेदार्थविचारे प्रधानमङ्गम् । उक्तंहि महाभाष्ये पस्पशाह्निके—'प्रधानंच षडङ्गेषु व्याकरण' मिति ।

एतादृशेन शास्त्रेण पाणिनिना कृतं शब्दव्युत्पादनमवास्तवम्, तस्मिंश्च वास्तवत्वधिया प्रकृतिप्रत्ययार्थविचारे प्रवृत्तानां परेषां वैदिकानां लौकिकानांच भ्रान्तत्वं च वक्तुं विपश्चितः कस्यचिदपि वाणी सहसा न प्रवर्तेत । प्रदीप, कौस्तुभ, वैयाकरणसिद्धान्तकारिका, वैयाकरणभूषण, तत्सार, मञ्जूषादि प्रबन्धप्रणेतारस्तु अनेन महता शास्त्रेण पाणिनिर्यदकरोच्छब्दव्युत्पादनं तदवास्तवम् (असत्यं, मिथ्या) । एतच्च वास्तवस्य ब्रह्माऽभिधेयस्य स्फोटस्य प्रतिपत्तये उपायो भवति, 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहत' इत्यसत्यस्य सत्यवस्तुप्राप्त्युपायत्वोक्तेः, ततश्च-शब्द-ब्रह्माख्यः स्फोट एकएवसत्यः सएवतु वाच्यो वाचकश्च 'शक्यत्व इव शक्तत्वे जातेर्लाघवमीयुषाम् । औपाधिकोवा भेदोऽस्तु वर्णानां तारमन्दवत्' इत्युक्तेः, । तदन्यन्नाम-रूपात्मकंतु सर्वं जगदसत्यम् (मायिकं) इति, अवास्तवेच पाणिनीये व्युत्पादने वास्तवत्वाभिप्रायेण प्रकृतिप्रत्ययार्थविचारे प्रवृत्ता भ्रान्ता इतिच—

"फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते" ।

इति प्रतिश्रुत्य, महाभाष्योदाहरणपुरःसरं स्वस्वग्रन्थेषु निपुणं निरूपयन्ति स्म । यद्यपि – एतेषुच ग्रन्थेषु बहवः प्रकारभेदा उपलभ्यन्ते, तथापि – स्फोटस्य

1. 'लोकसर्वलोकाट्ठञ्' (पा. सू. ५—१—४३) इतिविदितइत्यर्थे ठञ् ।

परमार्थत्वे, तदन्यस्य चाऽतथात्वे; सर्वे एते समानकण्ठा एव । अस्तु तावत् तेषां तथाऽभिप्रायः, तावता का हानिरितरेषाम्, स्वाभाविकमेतत् ग्रन्थकृताम्—यत् स्वस्वग्रन्थेषु स्वस्वाऽभिमतस्यार्थस्य वर्णनमिति, सत्यम्—मैवमुच्चैर्वोचः नास्तिहानिरिति, संभवेदेव महाननर्थ आचार्याणां निन्दावचनश्रवणादौ, अतएव—मनुना आचार्य-निन्दाश्रवणमेव न कार्यमिति बोधितम्—

'गुरोर्यत्र [1]परीवादो निन्दा[2]वाऽपि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः' (२—२००)

इत्याकस्मिकगुरुनिन्दाश्रवणादौ कर्णपिधानादि विदधता । आचार्य निन्दाश्रवणादिरनर्थहेतुः, प्रतिविधातव्यमवश्यमत्रेति तद्भावः । प्रतिविधानंच गुरो-र्निन्दनस्याऽऽचार्यभक्तिमतां सर्वेषां स्वस्वकृत्येषु प्रवरमादिमं कृत्यम् । पण्डितनागे-शादिकृतस्याऽऽचार्यनिन्दनस्य मैवं भाषितव्यमिति शिक्षणं न सुकरमद्यतनैः, विफलं च तादृक्षं प्रतिवचनम् । अद्यत्वेतु—अनुक्तमाचार्यैरनभिमतं च तेषामर्थं स्वस्वग्रन्थेषु निरूपयन्तः 'अवास्तवमेव प्रकृत्याद्यर्थमाचार्या अवोच'न्निति ब्रुवाणा अर्वाचीना नागेशादय एवाऽवास्तवं भाषन्ते, नतु आचार्याः पाणिन्यादयः, तेतु—वास्तवमेवाऽर्थं प्राहुरिति प्रतिपादनमेव प्रतिविधानमिति प्रतिसन्धाय 'बहूनां जन्मना'मिति भगवद्वच-नादि तात्पर्यविवरणमुखेन, व्यासस्य सूत्रकृत्पाणिनेश्चाभिमतपरतत्वस्वरूपमिदं, तदभि प्रायश्चायमिति सहृदयानास्तिकजनानावेदयितुमास्माकीनोऽयमुद्यमः ।

ननु—गीतायां सत्सु अनेकेषुश्लोकेषु अस्यश्लोकस्य व्याख्यानं कस्मात्कारणा त्प्रस्तूयते, उच्यते—अत्र मञ्जूषायां नागेशः [3]'अहंममेत्यध्यास एवाऽविद्या, 'वासुदेवः सर्व'मिति विद्यायां तस्यैव विरोधित्वात्' इतिवदन्, सर्वस्य वासुदेवात्मकत्वविज्ञानमेव अज्ञाननिवर्तकं समीचीनं ज्ञानमिति गीतावचनतात्पर्यमाविष्कुर्वन्, सर्वशास्त्राणामत्रैव तात्पर्यमिति प्रपञ्चयन्, सर्वस्य मायिकत्वं(मिथ्यात्वं)निरूपयति । तदिदं सर्वमपाणिनीयं तेन तथानुक्तेः, "वासुदेवाऽर्जुनाभ्यांवुन् (पा. सू. ४-३-९५) 'अअ' (पा. सू. ८-४-६८) इति सूत्रद्वयं कुर्वतः सूत्रकृतोऽनभिमतमित्यवगमाच्चेति निरूपणं ताव-

1. विद्यमानदोषकथनं परीवादः, 2. अविद्यमानदोषकथनं निन्दा, 3. अध्यास-भाष्यव्याख्यावसरे (व्या. २२४ पु.)

स्यात्तावसरमिति निश्चिन्वानस्य मम प्रथमं स्मृतिपथमारूढोऽयं श्लोकः, अतः संगतत्वाच्च आदावस्य प्रस्तावः। श्लोकार्थविवरणोत्तरं सूत्रकारस्य पाणिनेरभिप्रायो विवरिष्यत इति।

श्लोकोऽयं महाभारते भीष्मपर्वणि गीतापर्वणि सप्तमेऽध्याये वर्तते। इदं च महाभारतमाख्यानमितिहासरत्नं सर्ववेदार्थसंभृतं सर्वशास्त्रोपबृंहणभूतं भगवतो वासुदेवस्य माहात्म्यं प्रतिपादयति प्राधान्येनेति अविप्रतिपन्नम्। तदिदमाख्यानं श्रीमन्नारायणो भगवान् करुणावरुणालयोऽसाधुजनसंसर्गादिना विमूढचेतसः संसारे क्लिश्यमानान् पुंसः कालतो ज्ञानहीनान् अनुजिघृक्षुः सत्यवत्यां पराशरात् व्यासरूपेणाऽवतरन् अररचत्। तत्र—

" वेदे रामायणे पुण्ये भारते भरतर्षभ।
आदावन्ते च मध्येच हरिः (विष्णुः) सर्वत्र गीयते॥ ९३॥
भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च॥ (भार० १-१-२८२)
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम्।
दुर्वृत्तं धार्तराष्ट्राणा मुक्तवान् भगवानृषिः" ॥ (भार० १-१-७६)

इत्यादिभिः सर्वविलक्षणो हरिरेव प्रतिपाद्यत इति स्वग्रन्थप्रतिपाद्यं स्वयमेव भगवान्महर्षिः प्राह। गीतायांच–भगवान् वासुदेवएव पुराणपुरुषोत्तमः सर्वश्रुतिस्मृतीतिहासपुराणरूपप्रमाणप्रतिपाद्यगुणविशिष्टः प्रतिपाद्यत इति त्रयोपि भाष्यकाराः, श्रीकण्ठेतरे केचन भाष्यकाराः, मधुसूदनसरस्वतीप्रभृतयो व्याख्यातारश्च ब्रुवते। यैश्च सप्तभिः श्लोकशतैः श्रीकृष्णो वसुदेवनन्दनःपार्थाय तत्त्वमुपादिशत् तानेव श्लोकान् अत्र भारते उपनिबबन्ध बादरायणः—

'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता' ॥

इति गीतामाहात्म्यवचनादिति बहव आचार्याः।

केचित्तु–देशभा[1]षया अर्जुनाय भगवता कृष्णेनोपदिष्टं शास्त्रार्थं श्लोकरूपेण सर्वजनोपकाराय प्राह भगवान् श्रीव्यासोऽत्र भारतसंहितायामिति वदन्ति।

---

1. हिन्दिभाषया, व्रजभाषया वा,

तत्र भारतादौ विस्तरेण निरूपितं भगवतो महिमानं समासेन निरूपयितुकामो भक्तिरसभूयिष्ठं भगवद्गुणरत्नरत्नाकरं भागवतं नाम पुराणरत्नमकरोत् । तत्रच— 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुंच तत्त्वेन प्रवेष्टुंच परंतप' (गी. ११-५४) इत्युक्तदिशा अभीष्टसिद्धौ भक्तिः परमसाधनमिति निश्चित्य तया श्रियःपत्युर्भगवतो नारायणस्य पादारविन्दप्रपदनमीप्सितसर्वविधसुखसाधनमिति सोदाहरणमाह । तथाहि—

"न ताः[1]स्म ते देव पदारविन्दं प्रपन्नतापोपशमाऽऽतपत्रम् ।
यन्मूलकेता यतयो ऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति (भाग. ३-६-१७)
ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दा[2]महे पुरुष ते चरणारविन्दम् । भा. ११-५
नमो[3]नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीताऽमलसत्वमूर्तये । दिष्ट्या
हतोऽयं जगतामरुन्तुद स्त्वत्पादभक्त्या वय मीश निर्वृताः (भाग. ३-२०) इति ।

आचार्या अपि तद्देशीया अर्वाचीनाः स्वोत्तमविषयमनोवृत्तिरनुरागाभिधा, भक्तिरिति लक्षितभक्तिस्वरूपं युक्तमिति मन्यमानाः भगवद्भक्तिस्वरूपं 'स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः । भक्तिरित्युच्यते सैव करणं परमीशितु'रित्यन्यत्र भगवदुक्तदिशा अनितरसाधारणमाहात्म्यज्ञानपूर्वकाऽविच्छिन्नभगवद्विषयकप्रेमप्रवाहः, 'उपास्यः फलप्रदश्च देवो नान्योस्ति वासुदेवा'दित्यनन्यसाधारणगुणत्त्वेन भावने'ति शास्त्रेषु व्यवहरन्तः अनन्यभक्त्या भगदुपासनं फलसाधनमिति शास्त्रतत्त्वं सिद्धान्तयित्वा तमेव शास्त्रार्थं शासति साधून् ।

सैषा भक्तिर्न सुलभा सर्वैः, किंतु—विहितस्वकर्मानुष्ठानेन प्रक्षीणपापैः शुद्धान्तःकरणैः शमादिसंपन्नैरधीतविद्यैरेव । 'स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' (गी. १-४५) शान्तोदान्तःतितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत् (बृ. उ. ६-४-२२) परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्ति अकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् (आ. २-१२) आचार्यवान्पुरुषो

1. नमाम इतिश्रीधर ३-५-३८) 2. वन्देमहा. क०. पा०। 3. श्री. पा, (३-९१-३०)

वेद(छा. ६-१४-२) तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया (गी. ४-३४)आचार्योपासनं चैव (गी. १३-७) इतिगीतादिषूक्तेः। तत्रप्रथमं कर्म संध्यावन्दनं तदकरणे सर्वकर्मस्वनधिकारएव, 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यत्किंचित्कुरुतेकर्म न तस्यफलभाग्भवेत्'इतिस्मृत्युपन्यासेन प्रायश्चित्तप्रकरणे विज्ञानेश्वरेण व्यवस्थापितत्वात्।

एवं कृतोपकारोपि भगवान् व्यासः परमदयालुः 'अनन्ताश्च वेदाः, सपादलक्षग्रन्थंच भारतम्, अष्टादशसहस्रग्रन्थं श्रीभागवतम्, इतराणिच पुराणानि बहूनि अमितग्रन्थानि, कथमेतानि मितायुषोऽल्पशक्तयःप्राणिनः प्रत्यहं विमृश्य भगवद्गुणान् अनुसंधातुं समर्था भवेयुरिति स[1]मालोच्य, निखिलागमसारसंग्रहमवश्यमनुसंधेय भगवत्संबन्धिजगत्कर्तृत्वादिविविधविचित्रतरगुणप्रधानं ब्रह्मसूत्रनामधेयं महाशास्त्रमतनोत। तदिदं तस्य नामाऽन्वर्थकम्, तथाहि—वेदतदनुसारिश्रुतीतिहासपुराण प्रतिपादित जगज्जन्मादिकारणत्वाद्यनन्तकल्याणगुणविशिष्टश्रीमन्नारायणपरं ब्रह्मपदम्, सूत्रपदन्तु 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्। अस्तोभ मनवद्यंच सूत्रं सूत्रविदो विदुः' इति निरुक्तलक्षणोपेतशास्त्रपरम्। ततश्च—अनितरसाधारणनिरुक्ताऽनवद्याऽनन्तगुणविशिष्टनारायणवासुदेवादिपदा ऽभिधेयपरब्रह्मप्रतिपादकं सूत्रमिति तदर्थः। अथवा ब्रह्म वेदः, तेन तदर्थो ग्राह्यः, तन्निर्णायकं सूत्रमित्यर्थः। वेदार्थश्च उक्तगुणविशिष्टो वासुदेवः। अस्त्यस्य वेदान्तशास्त्रं, वेदान्तसूत्रमित्यपि व्यवहारः। वेदशब्दो वेदार्थपरः, अन्तशब्दो निर्णयार्थकः 'उभयोरपि दृष्टोऽन्त' (गी. २-१७) इत्यत्राऽन्तशब्दस्य निर्णयार्थकत्वेन सर्वैरङ्गीकारात्। ततश्च—वेदस्य=वेदार्थस्य, अन्तो=निर्णयः, यस्मिन्निति बहुव्रीहिः, ततः शास्त्रपदेन सूत्रपदेनच कर्मधारयः। वेदार्थनिर्णायकं शास्त्रमित्यादिरर्थः। वेदार्थस्तु उक्तो वासुदेव एव।

अस्यैव ब्रह्मणो वासुदेवस्य जिज्ञासा कार्येति 'तद्विजिज्ञासस्वे' (तै उ ३-१) त्यादिश्रुतिः; अथातो ब्रह्मजिज्ञासे' (ब्र. सू. १-११) तिसूत्रंच विधत्ते इति सर्वे भाष्यकारा स्तदनुयायिनश्च। श्रीकण्ठाचार्यस्तु शिवो जिज्ञास्य इति ब्रवीति। केचित् नारायणस्य सर्वोत्कर्षं ब्रह्मसूत्रादिसर्वशास्त्रादिप्रतिपाद्यत्वंच निरूपयन्तो

1. श्रीमत्पूर्णप्रज्ञेन मुनिना, श्रीरामनुजभाष्यव्याख्याश्रुतप्रकाशिकाकर्त्रा च, नारायणाद्विनिष्पन्न'मित्यादिनाजिज्ञासाधिकरणे निरूपितं कारणमप्यत्रानुसंधेयम्।

बादरायणीयमिदं महाशास्त्रमभेदपरमिति भाषन्ते। अपरेतु शिवस्य सर्वोत्कर्षादि प्रतिपादयन्त इदं शास्त्रं भेदपरमिति वदन्ति। एकेतु—नारायणः सर्वाध्यक्षः परा देवता सर्वजगत्कारणत्वादिना इदमादिसर्वशास्त्रप्रतिपाद्यश्चेति सप्रमाणं वर्णयन्त इदं शास्त्रं भेदपरमिति संगिरन्ते। इतरेतु-कंचित्कंचिद्विषयविशेषं दर्शयन्तः स्वस्वाभिमतभेदाभेदादिपरमिदं शास्त्रमित्याहुः।

इदमेवंविधमपि नाऽसहायं वेदार्थं निर्णेतुं क्षमते, अपितु—उपबृंहणसहितमेव, किंतदुपबृंहणमिति चेत्, इतिहासपुराणानि। उक्तंहि भगवता व्यासेन 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति'(भार. १-१-२९३)इति। अतएव 'स्मृतेश्चे' त्यादीनि स्मृतिपदघटितानि बहूनि सूत्राणि प्रणीतानि भगवता व्यासेन। अत्र वेदेत्युपलक्षणं तदनुसारिणोऽस्य शास्त्रस्यापि। ततश्च—एतदर्थनिर्णयोपि इतिहास-पुराणोपबृंहणेनैव कार्यः। अतएव—श्रीशङ्कराचार्यादयो भाष्यकाराः महाभारतादि-गतवचनानि अधिकरणार्थं निर्णेतु मुपोद्बलकतयोपन्यस्यन्ति। तत्र—श्रीशाङ्करभाष्ये स्मृत्यधिकरणे (ब्र. सू. २-१-१) श्रीमद्रामानुजश्रीमत्पूर्णप्रज्ञविज्ञानभिक्षुभास्कराचार्यैः भाष्येषु तत्र, अन्यत्रचाऽधिकरणे उदाहृतानि बहूनि पुराणवचनानि।

ननु—तत्तद्भाष्यकारैरुदाहृतेषु पुराणवचनेषु कानिचिदुपलभ्यन्ते आकरे, कानिचिन्नोपलभ्यन्ते, अतोऽत्र विश्वासः कथंभवेत्, शृणु—आकरेऽद्यत्वे ऽनुपलम्भे भाष्यकाराः किंकुर्युः, तेतु तदात्वे पुराणादावुपलब्धान्येव वचनानि सूत्रकृदभिमतानि उदाजहुः, अतस्ते विश्वसनीयवचना एव। संप्रत्यनुपलम्भस्तु-लेखने शोधनेच कर्मणि लब्धाधिकाराणां विदुषां स्वस्वाऽभिमतमताऽभिनिवेशमूलकः, तेतु—तत्रतत्रविद्यमानानि वचनानि स्वस्वाभिमतमताननुकूलानि इतिमत्वा तानि प्रच्याव्य, अनुकूलानि वचनानि कानिचिद्रचयित्वा प्रक्षिपन्ति। क्वचिद्विद्यमानानि प्रच्यावयन्ति, क्वचिदधिकानि योजयन्ति, अतएव भारतरामायणादिग्रन्थेषु क्वचित्पाठभेदः, क्वचित् ग्रन्थपातः, क्वचित् अधिक-पाठश्च दृश्यते। अतएवोक्तमभियुक्तैः—'क्वचिद्ग्रन्थान्प्रक्षिपन्ति क्वचिदन्तरितानपी'ति। इदमत्र प्रथममुदाहरणम्—श्रीमन्महाभारते आदिपर्वणि द्वितीये (२) अध्याये आश्वमेधिकपर्वसंग्रहे—'सुदर्शनं तथाख्यानं वैष्णवं धर्ममेवच' इति कुंभघोणनगरवासिना टि. आर्. कृष्णाचार्येण निर्णयसागरमुद्रणालये मुद्रापिते भारतपुस्तके पाठः, तथा

तत्रैवपुस्तके—अध्यायादिसंख्याबोधकः 'अध्यायानांशतंचैव त्रयोऽध्यायाश्च कीर्तिताः। त्रीणि श्लोकसहस्राणि तावन्त्येव शतानिच। विंशतिश्च तथा श्लोकाः संख्याता स्तत्त्वदर्शिना' (भार. १—२—३४५) इति अध्यर्धश्लोको दृश्यते। तत्रैव पुस्तके आश्वमेधिके पर्वणितु अष्टादशाधिकशताध्याया (११८) दृश्यन्ते। पर्वसंग्रहे निर्दिष्टसंख्यातःपञ्चदश अध्याया (१५) अधिकाः सन्ति। अन्येन केनचिद्दाक्षिणात्येन देवनागरलिपिभि र्मुद्रापिते भारतपुस्तके—'मणिदर्शनं तथाख्यानं वै....' अश्वमेधे मरुद्दर्शनमत्रैव वै.... 'अत्राऽध्यायशतं त्रिंशत् त्रयोऽध्यायाश्च शब्दिताः। चत्वारिंशत्सहस्राणि तावंत्येव शतानिच' इति विषयसंग्रहः, अध्यायादि संख्याबोधक श्लोकाश्च दृश्यन्ते। एवमेव कुंभघोणनगरसमीपस्थतिरुनागेश्वरनामकग्रामवास्तव्येन नवनीतं कृष्णाचार्येण ग्रन्थाक्षरैर्मुद्रापिते भारतपुस्तकेपि पाठः। एतत्कोशानुसारेण आश्वमेधिकपर्वणि अध्यायानां त्रयस्त्रिंशदधिकशतेन भाव्यम् (१३३) संपूर्णतद्भारतकोशस्यानुपलंभादध्यायानां न्यूनाधिकभावो न प्रदर्शितः। मुंबय्यानगरस्थगणपतिमुद्रालये मुद्रितनीलकण्ठीयव्याख्या सहितभारतकोशेतु—सुदर्शनमित्यादि श्लोकार्धं नास्त्येव एतदर्थक श्लोकान्तरमपि नास्ति, प्रथममुदाहृतभारतपुस्तकइव—'अध्यायाना'मित्याद्यध्यर्धश्लोकः पर्वसंग्रहे वर्तते। आश्वमेधिकपर्वणितु—नकुलोपाख्यानपर्यन्तःकथाभागः, द्विनवतिरध्यायाश्च (९२) दृश्यन्ते, तस्मिन्नेव कोशे पर्वसंग्रहप्रकरणपठिताऽध्यर्धश्लोकरीत्या एकादश (११) अध्याया न्यूनाः। ननु--तत्रपर्वणि स भागो नेत्येवेतिब्रूम इतिवचनंतु न श्रद्धेयम् यतस्तत्रत्यानि वचनानि प्रमाणतयोदाहरन्ति अभियुक्ताः। तस्मात् संप्रति आकरेष्वदर्शनमात्रेण नाविश्वासःकार्यो भाष्यकारोदाहृतवचनेषु। अतएव-महाभाष्ये पस्पशान्हिके 'एवंहिंश्रूयत' इत्युपक्रम्य 'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम' इत्युदाहृते, तत्रैवषष्ठे 'एकःपूर्वपरयो'रिति सूत्रे 'एकःशब्दः सम्यक्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः, स्वर्गेलोके कामधुग्भवति' इत्युदाहृते, विद्या हवै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टे ऽहमस्मि। असूयकायाऽनृजवे ऽयताय न मा ब्रूया वीर्यवती तथा स्याम्' इति यास्कोदाहृते च प्रमाणे कश्चिदपि विपश्चित् सन्दिहानः क्वास्ति प्रमाणमिदमिति न पृच्छति, आकरेषु अनुपलम्भादप्रमाणमिदमितिच न ब्रूते। ननु-पतञ्जलिप्रभृतयो महर्षयो बहुज्ञा नाऽविद्यमानं ब्रूयुरिति निर्धारयाम इतिचेत्, हन्त तर्हि ब्रह्ममीमांसाभाष्यकाराः परापरतत्वज्ञशिरोमणयो

बहुज्ञतमाः चतुर्विधपुरुषार्थसाधनं अध्यात्मशास्त्रं व्याख्याय परतत्वस्वरूपमुपदेष्टारो नाऽविद्यमानं ब्रूयुरिति सुदृढं निर्धार्यताम् । अलमनेन प्रासंगिकेन ।

महाभारतं गीताच भगवतोवासुदेवस्य महिमानमाचष्ट इति पुरस्तादवोचाम । महिमाच विचित्रतर विविधप्रपञ्चनिर्माणसंरक्षणादिसामर्थ्याऽपरपर्यायाऽनन्यसाधारणी शक्तिः। तदिदं महाभारतादि केचिदर्वाचीना ध्वनिमार्गमवलम्बमाना वासुदेवादन्यपरं मन्यन्ते। ध्वनिमार्गं स्थापयितारो हि चिरन्तनाःपण्डितप्रवरास्तु वासुदेवपरमिति सिद्धान्तयन्ति । तत्र-आनन्दवर्धनाचार्यो ध्वन्यालोके चतुर्थोद्योते सविमर्शमित्थमभिहितवान्। तथाहि – 'प्रबन्धेऽङ्गी रस एको निबध्यमानोऽर्थविशेषलाभं छायातिशयंच पुष्णाति रामायणे भारतइवच, रामायणे करुणो रसः, महाभारते शान्तो रसो मुख्यः, मोक्षलक्षणपुरुषार्थश्च सर्वपुरुषार्थेभ्यः प्रधानः, वासुदेवो भगवान् प्राधान्येन प्रतिपाद्यते, वासुदेवादिपदाऽभिधेयंच अपरिमितशक्त्यास्पदं परं ब्रह्मैव, एतच्च गीतादि प्रदेशान्तरे व्यवस्थापितम्। अतः संसाराऽतीते परमेश्वरे तस्मिन्नेव भगवति वासुदेवे भवत भावितचेतसः, मा भूत विभूतिषु निःसारासु, निर्णीतश्चाऽयमंशः शब्दतत्त्वविद्भि र्व्याख्याविधायिभिरन्यैश्च, पाण्डवचरितोपवर्णनात्, 'वासुदेवश्च भगवान् कीर्त्यते त्रऽ सनातनः ' इत्युक्तेश्चे ' ति ।

एवं श्रीरामायणभारतभावं प्रपञ्चयन् एष आनन्दवर्धनः तदुभयं वैष्णवं मोक्षशास्त्र मित्यभिप्रैति । 'निर्णीतश्चायमंशः शब्दतत्वविद्भि' रितिवदन् वासुदेव-एव परंतत्वं परंब्रह्म 'ब्रह्मविदाप्नोतिपर' मित्यादि श्रुतितदनुसारिशास्त्रप्रतिपाद्यइत्यर्थः शब्दार्थतत्वज्ञानिभि स्सुधीभिः पूर्वपूर्वतरैः सिद्धान्तितः, ममापि सएवाभिमत इति यथामति निरूपितोऽयमर्थ इति बोधयन् , वैदिकविद्वज्जनसंप्रदायसिद्धोप्ययमेवार्थ इति ध्वनयति । एतेन – रामायणं भारतंच व्यङ्ग्यमर्यादया शिवपारम्यपरमिति यत्कैश्चिदर्वाचीनतमैरुक्तं तच्चिन्त्यम् , पुरातनैर्विद्वज्जनैरेव वासुदेवपरत्वस्य व्यवस्थापितत्वात् , 'वासुदेवः प्रतिपाद्यत' इति भारतकृतैव महर्षिणो क्तत्वाच्चेति सङ्क्षेपः (१)

---

१: नश्वरेषु पशुपुत्रादिषु ।  २. अप्पय्यदीक्षितादिभिः ।

(२) अथश्लोकार्थ उच्यते —

'बहूनां जन्मना मन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' ( गी०.७-१९)

तत्र भगवानुबादरायणः—कुरुक्षेत्रं संग्रामसमुचितंदेशं मन्वानाः कौरवाः, पांडवाश्च, योद्धुकामा अष्टादशभिरक्षौहिणीभिः सह तत्र समवयन्ति स्म तत्राऽऽगतेषु के समानाः, केऽसमानाः, केवा गुणोत्तराः, अथवा – पूर्वं परिगणितेषु के समागताः, के नाऽऽगताइति ज्ञात्वा, तत्तदुचितसमरसामग्रीसंपादनसौकर्याय समागतान् द्रष्टुकामः सेनाद्वयमध्ये स्वं रथं स्थापयित्वा, तत्र स्थितएव सर्वानपश्यत् । दृष्ट्वातु तत्र समवेतान् आचार्यबन्धुमित्रादीन् संजातकरुणो विलक्षणबन्धुस्नेहपरवशः कथं हन्यामिमान् बान्धवादीन् किमनेन बन्धुजननिधनमात्रप्रयोजनेन ऐहिकामुष्मिकाऽभिमतफलविधुरेण पापमूलेनाऽऽयोधनेन, अतो न चिकीर्षामि कलहमिममफलम् । इत्थमुक्त्वा विसृज्य सशरं शरासनं तूष्णीमासांचक्रे । ततो भगवता सामवचनैः सान्त्वितोऽपि धनंजयो बन्धुस्नेहाद्विषीदन्नितिकर्तव्यताविमूढः श्रीकृष्णं पुनरित्थमभाषत । भगवन् कथं हन्यामिमानाचार्यादीन्, न जाने ऽहं धर्ममधर्मंच, अथापि नाहं पश्यामि इदमायोधनं श्रेयःसाधनम्, यदस्माकं श्रेयः पश्यति भवान् तच्छास्तु भवानेव, शिष्योऽहं तव, भवतश्चरणं शरणं प्रपद्य इति । एवं ब्रुवते प्रपन्नाय पार्थाय जिज्ञासवे श्रेयोऽर्थिने परमार्थंसर्वशास्त्रार्थं संक्षेपेणोपदिशति भगवान् 'अशोच्यानन्वशोचस्त्वम्(गी०.२:११)इत्यारभ्य 'सर्वधर्मान् परित्यज्य मामेकंशरणंव्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यमि मा शुच' (गी०. १८ - ६६) इत्यन्तेन – इत्याह ।

अत्रषट्कत्रयम् । तत्र प्रथमेषट्के ज्ञानयोगः, द्विविधकर्मयोगः, भगवत्साक्षात्काराङ्गभूतध्यानयोगश्च उपदिष्टः, द्वितीये – भक्तियोगः तस्यहेतुभूतोभगवतो महिमा, निरन्तरप्रेमप्रवाहरूपभक्तेः विषयगताऽतिशयितगुणनिबन्धनत्वात् । अत एवोक्तमाचार्यैरन्यत्र 'भक्त्यर्थं भगवन्महिमोक्ति'रिति । तृतीये – पूर्वषट्कद्वयो-

---

१. अयमपिश्लोकउपोद्घातघटकइतिकेचित् । २. स्वोत्तमविषयविजातीयचित्तवृत्तेरेवएवंव्यवहारःशास्त्रे । ३. श्रीपूर्णप्रज्ञीयब्रह्मसूत्रभाष्ये (३-२-१)

क्तार्थस्त्रीकारः, पदार्थानामवश्यज्ञातव्यसात्विकादि निरूपणंच ।

तत्रापि — 'अशोच्यानन्वशोचस्त्व' (गी०. २ - ११) मित्यादिना 'एषातेऽभिहितासांख्ये बुद्धि' (गी०. २ - १९) रित्यन्तेन ज्ञानयोगमुपदिश्य, 'योगेत्विमांश्रृणु' (गी०. २ - ३९) इत्यादिना आपञ्चमपरिसमाप्ति ज्ञानस्य बहिरङ्गकारणं द्विविधंकर्मयोगं संक्षेपविस्तराभ्यामुपदिश्य, 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति (२९) इति पञ्चमस्य अन्तिमश्लोके 'ज्ञात्वा मां शान्तिमृच्छती' त्यनेन परमात्मज्ञानमपवर्ग-साधनमित्युक्तया प्रसक्तं ज्ञानान्तरङ्गसाधनं ध्यानयोगं षष्ठ उपदिश्य, तत्राऽन्तिमश्लोके 'योगिनामपि सर्वेषां मद्गतेना ऽन्तरात्मना । श्रद्धावान् लभते यो मां स मे युक्ततमो मतः' (४७) इत्यत्र 'मद्गतेनान्तरात्मना, श्रद्धावा' नित्युक्तया ध्यानाङ्गतया प्रसक्तभक्तयर्थं भगवन्महिमप्रतिपादनाय प्रवृत्तेऽत्र षट्के ज्ञानविज्ञानपदवाच्यसामान्यविशेषरूपभगवन्माहिमानिरूपणपरे ऽत्र सप्तमेऽध्याये'ज्ञानंतेऽहंसविज्ञान' (गी०. ७ - २) मित्युभयाविधमाहिमोपदेशं प्रतिश्रुत्य, 'मनुष्याणां सहस्त्रेषु' (गी०, ७ - ३) इति ज्ञानं प्रशस्य, भूमिरापोऽनलो वायुः' (गी०. ७ - ४) इत्यादिना, 'मत्तः परतरंनान्यत्' (गी०. ७ - ७) इत्यन्तेन श्लोकचतुष्टयेन ज्ञानपदवाच्यसामान्यमहिमानम्, 'रसोहमप्सुकौन्तेय' (गी०. ७ - ८) इत्यादिना 'यच्चैवसात्विकाभावा' (१९) इत्यन्तेन श्लोकपञ्चकेन विज्ञानपदवाच्य-विशेषमहिमानं चोपदिश्य एवंविधंज्ञानं संपादयितुं न सर्वेलोकाः प्रभवन्ति, अपितु त्रिगुणादिकार्यकर्तापि परमात्मा न त्रिगुणबद्धोऽत उत्तमः पुरुषः सर्वशरण्य इतिधिया भगवच्चरणं शरणं गता भगवदनुग्रहेण दूरीकृतदुर्गाभिमन्यमान-मदीयमायाकृतमोहाः सुकृतिनः, तत्रापि – कश्चिदेव ज्ञानी भगवता क्रियमाणम् आत्मेतिव्यपदेशमर्हति, यथा—लोकेकश्चित्कस्यचिदति प्रेमभाजनं जनः 'अहंस-इति व्यपदेशमर्हति, इति 'त्रिभिर्गुणमयैर्भावैः' (गी०. ७ - १३)' उदाराः सर्वएवैतेज्ञानी' (१८) इति षड्भिः श्लोकैरुपदिश्य, एतादृशव्यपदेशहेतुभूतपरमात्म दयारूपभगवत्प्रसादस्यकारणं भगवज्ज्ञानं न सर्वैःसुलभमिति ज्ञानिस्तुतिद्वारा ज्ञानं

१. इदंसर्वेषां समानम् । २. अव्यवधानेन साक्षात्कारजनकत्वेनतत्त्वम् ।

स्तौति भगवान्वासुदेवः — **बहूनामिति** ॥ **इयमत्रयोजना** – बहूनांजन्मनाम्= 'आचतुर्दशमा*द्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्यसौ ' इति प्रमाणसिद्धबहुजन्मनाम् । अन्ते= अन्तिमे जन्मनि, वासुदेवः सर्वमिति = सर्वंचराऽचरप्रपञ्चजातम्, वासुदेवः = तदायत्तम्, अथवा — सर्वम् = पूर्णवस्तु, वासुदेवः = हरिरेव, यद्वासर्वं= सर्वव्यापिवस्तु, वासुदेवः, यद्वा – 'पिताऽहमस्य जगतो माता धाता पितामह' (९ - १७)इति वक्ष्यमाण सर्वविश्वबन्धुजनः वासुदेवः, अथवा – सर्वं – सर्वस्य उत्पत्तिलयस्थानं – वासुदेवः । यद्वा — सर्वं – सदासर्वविषयकज्ञानवद्वस्तु – वासुदेव एव, इति ज्ञानावान् = एवं रूपज्ञानवान् मुक्तियोग्यः सन्, माम् = मदभिन्नपरमात्मानम् (नारायणम्) प्रपद्यते = प्राप्नोति, सः =ईदृशज्ञानवान्, हेतुगर्भं विशेषणम्; अत एव–महात्मा= पूजनीयः, 'यंयं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् । तंतं लोकं जयते तांश्च कामान्, तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' (आथ०. १-१-१०) इति आत्मज्ञानिनः पूज्यतोक्तेः, सुदुर्लभः = नोपलभ्यत इति । अत्र – दुर्लभत्वोक्तेरीदृशब्रह्मज्ञानिनोविरलाएव – अत एवोक्तं 'कश्चिन्मांवेत्तितत्वत' (गी०.७ - ३) इति । सर्वशब्दस्यपूर्णार्थकत्वम् 'इदं ब्रह्मातिसामीप्यात्सर्वपूर्णगुणत्वतः। तच्च ब्रह्म जलान्साक्षाद्योसौ विष्णुर्जला' निति छान्दोग्यपूर्णप्रज्ञमुनिभाष्यानुसारेण, ' सर्वंसमाप्नोषि ततोऽसिसर्व (गी. ११-४०) इति वक्ष्यमाणदिशा सर्वव्यापित्वार्थकत्वं बोध्यम् । 'तद्वा अस्यैतदितिछन्द' (बृ. ६-३ : २१) इत्युपनिषद्व्याख्यानपरस्य 'अविद्याया यदा प्रविभक्तोभवति तदा सर्वेणैकत्वमेवाऽस्य भवती' ति श्रीशङ्करभाष्यस्य व्याख्याने 'सर्वेण पूर्णेन परमात्मना सहेत्यर्थ' इत्यानन्दगिरिणा व्याख्यानात् सर्वशब्दः पूर्णार्थकोपि संप्रतिपन्नः। अयं

---

१-२. 'असतश्चसतश्चैव सर्वस्यप्रभवाप्ययात् । सर्वस्यचसदाज्ञानात् सर्वमेतं (नं) प्रचक्षते' (भार, उद्यो. ६९-११) इति प्रमाणमत्रार्थे । असतः=अव्यक्तस्य कारणस्य, सतः=व्यक्तस्य कार्यस्य, ३. (३-१४-१) * आर्षोमद्र

भावः—ज्ञानंतु बहुजन्मसाध्यम् ,इदंचगीतायांषष्ठेपि 'अयतिःश्रद्धयोपेत'इत्यादिना' (१७) 'अनेकजन्मसंसिद्ध' (४५) इत्यन्तेन प्रश्नोतराभ्यां विवृतम् भगवता। फलप्राप्ति स्तत्र जन्मान्तरेपि प्रतिपादितत्वात् । भगवत्प्राप्तिमोक्षस्तु ज्ञानावच्छेदकदेहावसानएव असतिप्रतिबन्धके, सतितु तस्मिन् कालान्तरे 'ऐहिकमप्रस्तुत प्रतिबन्धे तद्दर्शनात्' (ब्र०.सू०. ३ ४-५०) एवंमुक्तिफलाऽनियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः' (ब्र०. ३-४-५१) इति सूत्राभ्यां सूत्रकृता सिद्धान्तितत्वात् । प्रारब्धरूपप्रतिबन्धकाभावे तत्=ज्ञानं=अपरोक्षज्ञानम् ,ऐहिकं=साधनसंपत्तिजन्मन्येव भवति, तथादर्शनात्, 'श्रुत्वात्मान' मिति श्रुतावुक्तत्वात् इत्याद्यस्यार्थः । ज्ञानमित्यध्याहारलब्धम् । असतिप्रतिबन्धके ऽस्मिन्नेव जन्मनि ज्ञानोत्पत्तिः, सतितु तस्मिन् जन्मान्तरे सेति तात्पर्यम् । शाङ्करेपि भाष्ये ऽस्यैवमेवार्थो वर्णितः ।

एवम्=ज्ञानवदेव, मुक्तिफलाऽनियमः=मुक्तिफलस्यापि, अनियमः, ज्ञानोत्पत्तिदेहावसाने प्रतिबंधकाभावे मुक्तिर्भवति, सतितस्मिन् जन्मान्तरे! एवंच—ज्ञानोत्पत्तिजन्मन्येव भवतीतिनियमो नेति द्वितीयस्याऽर्थः । शिष्टंस्पष्टम् । ज्ञानजन्मन्येव मुक्तिरिति शाङ्करे । श्रीरामानुजीयभाष्येतु 'मोक्षातिरिक्ताऽभ्युदयफलं तत्साधनोत्तरमेव भवतीति न नियमः, मुक्तिफलमपि तत्साधनोत्तरमेव भवतीति न नियम इतिसूत्रद्वस्यार्थ उपवर्णितः । एवंच — यत्र जन्मनि साधनं संपूर्णं भवति, ज्ञानंच जायते, तदवसानएव ज्ञानमोक्षौ भवतइति न नियमः, प्रतिबन्धकश्च प्रारब्धंकर्म । ज्ञानिनो दौर्लभ्यनिरूपणेन आत्मत्वव्यपदेशहेतुभूतभगवत्प्रीत्यतिशयकारणं ज्ञान मतिदुर्लभमिति ज्ञानमेव स्तुतं भवतीति ।

एतेन—'ज्ञानी त्वात्मैवे' तिव्यपदेशः, 'वासुदेवःसर्व'मित्युक्तिश्च जीवेशयोरभेदे, सर्वस्य वासुदेवस्वरूपत्वेच तात्पर्यंबोधयतीति न सर्वथा मन्तव्यम् । तथासति- 'ज्ञानवान्मां प्रपद्यते' 'ये भजन्ति तु मां नित्यं मायामेतां तरन्ति ते' इत्यादिभिर्ब्रह्मजीवयो रुपास्योपासकभावस्य, प्राप्य प्रापकभावस्यचाऽभिधानाऽयोगात् । तयोर्भेदायत्तत्वात् ।

ननु—स्वात्मैव स्वस्य प्रियो भवति न त्वन्य आत्मेतिहि सर्वेषामनुभवः,

ततश्च ज्ञानिनोऽन्यत्वे प्रीतिविषयत्वमेव न स्यादिति तदुक्तिरेव तयोरभेदे तात्पर्यं-ग्राहयतीतिचेत्, उच्यते — 'प्रिय' इति व्यपदेशंप्रति न स्वाभेदःकारणम्, किंतु- वस्तुगतगुणातिशयः, लोकेपि एकैकस्मिन्वस्तुनि विद्यमान एकैकोऽतिशयितो गुणः परचित्तमावर्जयतीतिहि सहृदयहृदयैकसाक्षिको ऽनुभवः। लौकिकोहि गुणो न भगवतश्चित्तस्याकर्षकः 'न वेदयज्ञाध्ययनैर्नदानैर्नचक्रियाभिर्नतपोभिरुग्रैः। एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर' (गी. ११-४८) भक्त्या-त्वनन्यया शक्य अहमेवंविधो ऽर्जुन। ज्ञातुं द्रष्टुंच तत्वेन प्रवेष्टुंच परंतप' (गी. ११-५४)इति केवल वेदाध्ययनादीनां ज्ञानसाधनतां निषिध्य, भक्तेरेव तत्साधन-तावोधनात्। किंतु — भगवद्विषयकं सर्वोत्तमत्वप्रकारकं शास्त्रसिद्धम् ज्ञानम्, तन्मूलकं स्वविषयनिरवच्छिन्नपरमप्रेमप्रवाहरूपभक्तिश्चेति अनुत्तमगुणद्वयम्'प्रियोहि ज्ञानिनो ऽत्यर्थ महं सच मम प्रियः, भक्त्यात्वनन्यये' त्याद्युक्तेः अतएव - "तएवंविद्वान्, (तै. आ. १३) आत्मावाअरे (बृ. ४-१४) अथातो-ब्रह्मजिज्ञासा" (ब्र. सू. १-१-१) इत्यादिश्रुतिः सूत्रंच ज्ञानं पुरुषार्थसाधनमाह। ततश्च - भगवत्प्रीतिहेतुः 'भक्तिमान्यः स मे प्रियः' इत्युक्ता भक्तिः, उक्तं विलक्षणं ज्ञानंच, न त्वात्मस्वरूपत्वम्। अस्ति ज्ञानिन इदमितरवैलक्षण्यमिति बोधनायैव आत्मैवेत्युक्तिः, नतु आत्मस्वरूपत्वबोधनाय। अन्यथा - स्वस्य स्वस्वरूपं प्रियमे-वेति सर्वविदितत्वात्, तद्बोधनं विफलं स्यात्। किंच-आत्मैकत्ववादिनो मंजूषाकृतो मते सर्वेषांजीवानां ब्रह्माभेदस्यस्वतःसिद्धत्वेन, ज्ञानिनां विशिष्य तत्कथनमनर्थकम्।

किंच - अत्रैवोपक्रमे —

'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासू नगतासूंश्च नानुशोचन्ति पण्डिताः (२-११)
नत्वेवाहं जातु नासं नत्वंनेमे जनाधिपाः।
नचैव नभविष्यामः सर्वे वयमतः परम्' (२-१२)

इति 'अशोच्यान् जनाधिपा' इति बहुवचनप्रयोगेण, तेषां नित्यत्वसाधनानुमाने आत्मनो दृष्टान्तत्वकथनेनच, आत्मभेदो निरूपितः, उपसंहारेपि —

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।

मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे (गी. १८-६५)
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" (गी. १८-६६)

इति द्वाभ्यां श्रीकृष्णाख्यपरब्रह्मण उपास्यत्वम्, अर्जुनोपलक्षितसर्वमनुजादीनामुपासकत्वं बोधयतातन्मूलभूतात्मभेदोऽपिनिरूपितः। अतस्तदुभयानुरोधेन 'आत्मैवेत्यस्य अस्मदुक्तार्थएव युक्तः। तस्मात् अत्र ज्ञानिनो वासुदेवस्वरूपत्ववर्णनम्, एतन्मूलकं जीवब्रह्मणोरभेदे शास्त्राणां तात्पर्यवर्णनंचेत्युभयमुपक्रमादिन्यायविदो न न्याय्यमित्याहुः ।

ननु — उपक्रमोपसंहारयो र्निरूपितो भेदोऽपारमार्थिक (काल्पनिक) इति 'तदुभयानुरोधे'त्याद्ययुक्त मितिचेत्,न-शास्त्रादौ अवास्तवार्थकथनस्याऽन्याय्यत्वात्। 'शिष्य-स्तेहं शाधि मां त्वां प्रपन्न' (गी. २-८) मित्यनेन तत्त्वबुभुत्सया भगवन्तं शरणागतः पार्थइति ज्ञायते, तस्मात् प्रपन्नाय शिष्यांय आदावन्तेच वास्तवस्यैवाऽर्थस्योपदेशेन समीचीनज्ञानोत्पदानमाचार्यस्य मुख्यो धर्मइति उभयत्रांऽवास्तवएवाऽर्थ उपदिष्ट इत्यस्याऽयोगात् । एतेन—यदत्र मञ्जूषायाम् 'अहंममेत्यध्यास एवाऽविद्या, 'वासुदेवःसर्व'मितिविद्यायाः तस्यैव विरोधित्वात्' इत्यनेन सर्वंवासुदेवात्मकं (वासुदेवस्वरूपम्) इति श्लोकतात्पर्यवर्णनं, यच्चा ऽसकृदात्मैकत्वानिरूपणं तदुभय मुभयोरप्याचार्ययो रनभिमतमिति बोध्यम् । उक्तादिशा श्लोकस्य तथार्थकत्वाभावेन 'अध्येष्यतेच य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टःस्यामिति मे मतिः (७०) श्रद्धावाननसूयश्च श्रृणुयादपि योनरः । सोपि मुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्मणाम्' (७१) इति श्लोकाभ्यां शास्त्रमिदमुपदेष्टृणां श्रोतृणांच उत्तमलोकावाप्तेरेव फलत्वप्रतिपादनेनच तदुभयस्य श्रीव्यासमहर्ष्येनभिमतत्वाऽवगमात् (२)

(३) 'वासुदेवार्जुनाभ्यांवुन् (पा०. सू०. ४-३-९८) अं अं' (पा०. सू०. ८-४-६८) इति सूत्रयतः पाणिनेरप्याचार्यस्य भगवतिवासुदेवे परमात्मत्वसर्वाध्यक्षत्वाऽध्यवसायः, अतएवच सर्वतोऽभ्यर्हितत्वसर्वान्यत्वाऽध्यवसायश्चा ऽस्तीत्यवगमेन तदनभिमतत्वावगमाच्च । ततश्च — 'वैयाकरणसिद्धान्ते' ति प्रतिज्ञाय त-

दनभिमतार्थवर्णनमयुक्तम् ।

ननु — तथासूत्रप्रणयनेन कथमुक्तोऽर्थस्तदाभिमत इति निर्णय इति चेत्, उच्यते — षडङ्गेषुव्याकरणं प्रधानं, तत्त्वंच — परंपरया वेदार्थनिर्णयोपयोगित्वमित्यवोचाम । यथा — इदंसूत्रं शब्दसाधुत्वानुशासकं, तथा तच्चेष्टितमपि अर्थविशेषव्यवस्थापकमिति 'इहेङ्गितेन चेष्टितेन निमिषितेन महता सूत्रप्र(नि)बन्धेनाऽऽचार्याणामभिप्रायो गम्यते (लक्ष्यते) इति 'न संप्रसारणे संप्रसारणम्' (पा.सू. ६-१-३७) नमुने' (पा.सू. ८-२-३) इति सूत्रयोर्वदता भाष्यकृता व्यवस्थापितम् । इङ्गितं = मानसोव्यापारः, चेष्टितं = कायिकोव्यापारः प्रकृते उच्चारणम्, निमिषितं नेत्रव्यापारः । तत्र कचिदाचार्यो विशिष्टेन सूत्रेणस्वाशयमाविष्करोति, यथा— यून इत्यादौ संप्रसारणयोग्ययणद्वयादिसमावेशस्थले पूर्वस्य यणः पूर्वं न संप्रसारणमिति स्वाशयं 'नसंप्रे' ति विशिष्टवचनेन । कचित्तु— कार्यभूतस्य यत्किंचिच्छब्दस्वरूपस्य निमित्तत्वादिनोपादानेन स्वाशयमाविष्करोति, यथा — 'नमुने' इत्यनेन नाभावसिद्धं नशब्दं निमित्तमादाय विहितो मुत्वासिद्धत्वाभावः, निमित्तत्वेनाश्रितनाभावे कर्तव्येपि मुत्वं नासिद्धमिति स्वाभिप्रायंस्मारयत्यनुमानविधया । यद्येवं न कल्प्यते तदा नाभावे कर्तव्ये मुत्वस्याऽसिद्धत्वेन नशब्दस्यैवाभावेन हेत्वप्रसिद्धिरिति सूत्रं निर्विषयं स्यात् । प्रकृतेपि वासुदेवशब्दस्य पूर्वनिपातकरणं चेष्टितं (द्वन्दे पूर्वप्रयोगरूपम्) वासुदेवपदवाच्यस्य देवताविशेषत्वं, सर्वान्यत्वं, सर्वोत्तमत्व, मत एव सर्वतोऽभ्यर्हितत्वंचाचार्योऽभिप्रैतीति बोधयति । अन्यथा—अर्जुनशब्दस्य अजाद्यदन्ताऽल्पाचूतरत्वसत्त्वेन 'अजाद्यदन्तम् (पा०. सू०. १-४-१०५) अल्पाचूतरम्' (पा०. सू०, १-४-१०६) इतिस्वकृतां व्यवस्था मनुसृत्य अर्जुनशब्दस्य पूर्वनिपाते कर्तव्ये अतथाभूतस्य वासुदेवशब्दस्य पूर्वप्रयोगो ऽनुपपन्नः स्यात् । तेन जानीमो वासुदेवे ऽभ्यर्हितत्वप्रयोजकं परमात्मत्वादिकमस्तीति स्वसिद्धान्तः सूचित इति । अतएव प्रदर्शितां स्वीयामपि व्यवस्था मुल्लङ्घ्य प्रथमं वासुदेवशब्दं प्रायुङ्क्त । उक्ताभ्यर्हितत्वादिषु उत्तरोत्तरंप्रति पूर्वपूर्वस्य हेतुत्वं द्रष्टव्यम् । ननु — समभिव्याहृतपदार्थापेक्षयोत्तमत्वाभ्यर्हितत्वकल्पनं न्याय्यं नत्वेवंकल्पनमिति चेत्, शृणु —

स्पष्टीकृतश्चायमर्थो भाष्यकैयटाभ्या मत्रैवमूत्रे – तथाहि — अथवा – नैषाक्षत्रि-याख्या, संज्ञैषा तत्रभगवत ' इति भाष्यम् , ' संज्ञैषेति ॥ नित्यःपरमात्मा देवता-विशेष इह वासुदेवो गृह्यत इत्यर्थ ' इति कैयटः । अत्र — भाष्ये वासुदेव-पदस्य भगवत्पदेन व्याख्यानात्

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ' ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयगुणादिभिः ' इति प्रमाणसिद्धहेयगुणाऽभावसमानाधिकरणाऽनन्यसाधारण-जगन्नियमनादिगुणवान् ' एतावता ऽलं ननु सूचितेन गुणै रसाम्यानतिशायनस्य । हित्वेतरान्प्रार्थयतो विभूति र्यस्यांऽङ्घ्रिरेणुं जुषते ऽनभीप्सोः (भाग.प्र.१८-२०) अथापि यत्पादनखावसृष्टं जग द्विरिञ्चोपहृताऽर्हणाऽम्भः। सेशं पुना त्यन्यतमो मुकु-न्दात् को नाम लोके भगवत्पदार्थः (२१) अहंपृष्टो ऽर्यमणो भवद्भि राचक्ष आत्माव-गमो ऽत्र यावान् । नभः पतन्त्यात्मसमं पतत्रिणः तथा समं विष्णुगतिं विपश्चितः ' ( भाग. प्र. १८-२३ ) इति भागवते भगवत्पदवाच्यतया निर्णीतो विष्णुमुकु-न्दादिपदवाच्यो ब्रह्मेशानादिसर्वदेवसमाराध्यो लक्ष्मीपति र्देवताविशेषः ' भगवा-निितिशब्दो ऽयं तथा पुरुषइत्यपि । वर्तेते तावुभौ नित्यं वासुदेवे सनातने ' इति प्रमाणेन भगवच्छब्दस्य मुख्यवाच्यतया निर्णीतो वासुदेवो ग्राह्य इति बोधितम् । देवताविशेष इति कैयटस्यदेवतोत्तम इत्यर्थः । यतः हर्यादि पदान्तरं विहाय भगवत्पदं प्रायुङ्क्त भगवान्भाष्यकारः अतउक्तार्थो भाष्यादिसंमतः, अतः कस्य-चिदपि चोद्यस्य ना वकाशः । विभूतिः = लक्ष्मीः, अन्यतमः = अन्यः, अर्यमणः = हेवेदमूर्तयो महर्षयः, अत्र = भगवद्गुणेषु, यावान् आत्मावगमः= मम यावत् ज्ञानम् , पक्षिणो यावद्दूरं नभसि गन्तुंशक्ताः, तावदेव

---

१. एतानि वचनानि विष्णुपुराणस्थानि । २. एतेन– प्रकृतपूर्वनिपातप्रयोजकमभ्यर्हि-तत्वमात्रस्यकल्पनं युक्तं न सर्वोत्तमत्वादेरिति , ' गोत्रक्षत्रियाख्येभ्यो बहुलंवु ' (पा०. सू०. ४-३-९९) ञिति वुञासिद्धे रूपेस्वरेचाऽविशेषात् ' वासुदेवग्रहणंव्यर्थमिति चापास्तम् । इदंसूत्रं ' भक्ति' (४-३-९५) रित्यधिकारे पठ्यते, भक्तिरिति कर्मणिक्तिन्नन्तम्– सोऽस्येति वर्तते । अयमर्थः – वासुदेवार्जुनौ भक्ती भजनीयौ अस्येत्यर्थे प्रथमान्ताभ्यामाभ्यांवुन्निति ॥

गच्छन्ति, विष्णुगतिः = तल्लीलाः, तन्महिमान इति यावत्। ब्रह्मादिदेवाराध्यत्वात् सर्वेश्वरत्वं भगवतो लक्ष्मीपतेरिति श्रीधरीये।

एवंच— सूत्रे वासुदेवपदं कर्तरि, अधिकरणे च औणादिकोण् प्रत्ययान्तवासुपदस्य देवशब्देन कर्मधारये सर्वाश्रयस्य सर्वान्तर्यामिणः श्रियःपत्यु र्नारायणस्य वाचकम्। 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव, (गी०. ७-७) ईश्वरः सर्वभूतानाम् (गी०. १८-६९) 'सर्वत्राऽसौ समस्तं च वसत्यत्रेति वै यतः। ततो ऽसौ वासुदेवेति विद्वद्भिः परिगीयते॥ वासनाद्वासुदेवः स्या वासितं ते जगत्रयम्। सर्वभूतनिवासोऽसि वासुदेव नमो ऽस्तु ते (सहस्रनामफल) छादयामि जग द्विश्वं भूत्वा सूर्यइवांऽशुभिः सर्वभूताऽधिवासश्च वासुदेव स्ततो ह्यहम्' (भार०. शा०. ३५० - ४१) इति स्मृतिभिः तस्यैव सर्वान्तर्यामित्वसर्वाधारत्वगुणविशिष्टत्वबोधनात्। शङ्कराचार्यैरपि 'एषत आत्माऽन्तर्याम्यमृत' (बृ. उ. ५ - ) इति श्रुतिवाक्यव्याख्याने ऽन्तर्यामित्वं नारायणस्यैवोक्तत्वाच्च। अथवा— इदं वासुदेवशब्दस्य पूर्वप्रयोगरूपं पाणिनीयमुच्चारणं 'पुत्रा मे बहुक्षीरघृतमोदनंकांस्यपात्र्यांभुञ्जीर' न्निति 'नमुन' इति सूत्रभाष्योक्तवृद्धकुमारीवचनवत् निरूपितयावदर्थगर्भम् वृद्धकुमारीवचनंतु पतिपुत्रधनधान्यादियावत्संपत्कामनागर्भमिति व्याख्यातारः।

(४) शब्दसंस्कारोपयोग्यर्थानुगुण्येन 'अस्य अ' इति वक्तव्ये 'अअ' इति निर्विभक्तिकं निर्देशं कुर्वन् तत्रभवान् पाणिनिः यदवश्यकर्तव्यं शास्त्रान्ते शास्त्रसमापनद्योतकं संप्रदायसिद्धमभ्यासरूपं द्विर्वचनम्, यच्च 'मङ्गलान्तानि प्रथन्त' इति प्रमाणसिद्धं शास्त्रान्ते कर्तव्यतया प्राप्तं स्वेष्टदेवतास्मरणरूपं मङ्गलम्, यच्च स्वकृतेर्भगवत्समर्पणाय कर्तव्यं भगवत्संबोधनम्, यच्च — स्वस्य वासुदेवे भगवति इष्टदेवतात्वादिज्ञानमस्तीति श्रोतॄणांबोधनेन तेषामपि तादृशज्ञानोत्पादनम्, तत्सर्वं कृतं भमतीति मन्यते। तत्राऽभ्यासः स्पष्टः। 'अकारोवासुदेवःस्यात्, अ-

१. सर्वत्रवसतीति विग्रहः। २. सर्वंवसति अत्रेति विग्रहः। ३. इयं मनोरमादावुदाहृता। ४. परिपठ्यत इति शाङ्कारसहस्रनामभाष्ये पाठः। 'वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः। वासुदेवस्ततोवेद्य' (भार०. उद्यो०. ६९ - ३) इति निरुक्तम्।

कारोभगवान्विष्णुः ' इति वचनात् , 'अ इति ब्रह्मे'(ऐ.आ.२-३-८)ति श्रुतेश्च, अन्तेऽपिमङ्गलार्थं वासुदेववाचकाऽशब्दप्रयोग इति सांप्रदायिकवचनाच्च, अशब्दवाच्ये वासुदेवत्वोत्तमत्वेष्टदेवतात्व बुद्धिरस्तीति सिद्धम् । 'अ' इत्यस्यसंबोधनान्तत्वसंभवेन भगवति स्वकृतेः समर्पणाय तत्संबोधनंच कृतं भवति । अत्रपक्षे-आदरात् द्विरुक्तिः, श्रोतारोऽपि आचार्याणां भगवतिवासुदेवे सर्वोत्तत्वेष्टदेवतात्वाऽध्यवसायसद्भावेन अस्माभिरपि ईदृशाऽध्यवसायवद्भिस्तदुपासकैश्च भवितव्यमिति दृढाऽध्यवसाया भवेयु रनुतिष्ठेयुश्च तथैवेति सर्वं समञ्जसम् ।

(५) किंच — ' यदुक्तम् ' अहंममे ' त्यविद्येति, तद्युक्तम् , ' वासुदेवः सर्वमिति ( सर्ववासुदेवात्मकमिति ज्ञानं ) विद्या सैषा उक्ताऽविद्याविरोधिनीत्युक्तिस्तु न युक्ता । एतस्या अपि ' अहंममे ' ति वदविद्याविशेषत्वात् । ' अहंममे ' त्यस्य अविद्यात्वे ' वासुदेवः सर्व ' मित्यस्यच विद्यात्वे न कंचिदपि विशेषं पश्यामः अतस्मिन् तत्त्वाध्यवसायो ' हि अविद्या सचोभयत्र समानः । योहि यस्य निवर्तकः सतु तस्य विरोधी । लोकेच – इदंरजत ' मितिमिथ्याध्यवसितेः, औत्तरकालिकं ' नेदंरजत ' मिति बाधज्ञानम् , इयंशुक्तिकेति अधिष्ठानयाथात्मज्ञानंवा निवर्तकं नतु तत्समानयोगक्षेमं 'घटः पट' इत्याद्यविद्यान्तर मितिवदन्ति विद्वांसः । शास्त्रंतु — भगवदनुग्रहोहि संसारबीजम् ' अहंममे ' त्यज्ञानं निवर्तयतीत्याह ।

' येषां सएव भगवा न्दयये दनन्तः सर्वात्मना श्रितपदो यदि निर्व्यलीकम् । ते वै विदन्त्यतितरन्तिच देवमायां नैषां ममाहमितिधीः श्वसृगालभक्ष्ये ।

( भाग०. २-७-४२) दैवीह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ( गी०. ७-१४ )

ये मानवा विगतरागपरापरज्ञा नारायणं सुरगुरुं सततं स्मरन्ति । ध्यानेन तेन हतकिल्बिषचेतना स्ते मातुः पयोधररसं न पुनः पिबन्ति ' (पाण्डवगीता ) इत्यादिना ।

येतु मुमुक्षवो भगवद्भजनेनैव संसारतरणं सुकरमिति आचार्यवचने शास्त्रेच कृतविश्वासाः, परमपरंचतत्वं सम्यक् विजानन्तः पुत्रमित्रकलत्रादिविषयाभिलाषविधुराः, सन्ततं भगवन्तं स्मरन्तो निष्कपटं सेवमानाः, भगवतश्चरणार-

विन्दनिष्यन्दमानमकरन्दास्वादमत्तस्वान्ताः, भगवच्चरणं शरणं प्रपन्ना भवन्ति; ते भगवदनुग्रहेण उत्पन्नविवेका दूरीकृतसंसारबीजा 'ऽहंममे' त्यविद्याबन्धाः स्वरूपतोनिवृत्तप्रारब्धेतरपुण्यपापाश्च पुनर्जन्म नविन्दन्त इति शास्त्रविनिर्णय इत्याखण्डलार्थः। देवमाया = परमात्माधीनगुणत्रयात्मकं मोहकं (वस्तुयाथात्म्यग्रहप्रतिबन्धकं) वस्तु, दययेत् = दयांकुर्यात्; प्रसादेन अनुगृह्णीयात्। दयाशब्दात्करोतिण्यन्ताल्लिङ्। श्वसृगालभक्ष्ये = देहे, इदमुपलक्षणं = नश्वरस्य समस्त विषयस्यापि। 'प्रपद्यन्ते, तरन्ती' त्युक्तेः भगवच्चरणप्राप्तेर्मायातरणस्यच 'अष्टवर्षं ब्राह्मणमुनयीत तमध्यापयीते' त्यादौ उपनयनाध्यापनयोरिव हेतुहेतुमद्भावः सूचितः। विगतेत्यादेः= विषयवैराग्येन परापरतत्वविवेकवन्तइत्यर्थः। हतकिल्बिषेत्यादेः = हरेरनुग्रहेण विनष्टाऽविद्यादिदोषा इत्यर्थः। शुद्धात्मान इति यावत्। स्तन्यपानानिमित्तजन्मरहिता (मुक्ता) भवन्तीति। इतरत्स्पष्टम्। एतेन – यत्, स्फोटाख्यं पदार्थमपूर्व मङ्गीकृत्य तस्य ब्रह्मत्वं जगदुपादानकारणत्वं तस्यैकस्यैवसत्यत्वंच मञ्जूषायांनागशेन, अन्यैश्च वैयाकरणैः स्वस्वग्रन्थेच निरूपितं, तत्सर्वं पाणिनेरपिसंमत मिति बालानां मोहोत्पादनायैवेति मन्तव्यम्। सर्वस्यास्य सूत्रभाष्यकृदभिप्रायविरुद्धत्वात्। व्यासस्य पाणिनेश्च — वासुदेवएव परंतत्वं परंब्रह्म तत्स्मरणादिरेव पुरुषार्थप्रद इतिमुख्यंतात्पर्यम्। भाष्येपि स्फोटस्य ब्रह्मत्वादिकं क्वापि नोक्तमिति तदभिप्रायोपि व्यासपाणिनितात्पर्यानुरोधीति।

गीताश्लोकार्थविवृते र्भावो व्यासस्य दर्शितः।
'वासुदेवे' त्यादि सूत्रविवृतेः पाणिनेरपि (१)

( ६ सामानाधिकरण्यविरोधोद्धारः )

ननु – 'ज्ञानीत्वात्मैव, वासुदेवः सर्वम्' इत्यादि समानाधिकरणनिर्देशेन 'नीलोघट' इत्यादाविव अभेदबुद्धिः स्वरसत उत्पद्यत इति चेत्, अत्र ब्रूमः– सामानाधिकरण्यनिर्देशो न सर्वत्रस्वरूपैक्यप्रत्ययं जनयितुमीष्टे 'मुखंचन्द्रः, सिंहोमाणवकः, आदित्योयूप' इत्यादौ तथानिर्देशेपि अभेदबुद्धेरनुदयात्, किंतु– संज्ञाजातिगुणक्रियाभेदेन चतुर्विधेषु शब्देषु यत्र सुन्दरः पाचकोवा देवदत्तः, सुन्दरः पाचकोवा ब्राह्मणः' इत्यादौ संज्ञाजातिशब्दाभ्यां गुणक्रिययोः समभि-

व्याहार; देवदत्तोब्राह्मण ' इत्यादौ संज्ञाजात्योः, 'सुन्दरः पाचक' इत्यादौ गुण-क्रिययोः, 'नीलः सुन्दर ' इत्यादौ गुणयोः, 'पाचकः पाठक ' इत्यादौ क्रिययोः समभिव्याहारः, तत्राऽभेदधियमुत्पादयति । अतसर्वत्र धर्माणामेकस्मिन्नधिकरणे-वृत्तिसंभवात् । यत्रतु जात्योरेव, संज्ञयोरेव समभिव्याहारः, न तत्र । यथा 'क्षत्रि-योब्राह्मणः, देवदत्तोयज्ञदत्त ' इति । अत्र क्षत्रियत्वब्राह्मणत्वादीनां विरुद्धधर्मत्वेन एकाधिकरणवृत्तेरयोगात् । प्रकृतेच ' ज्ञानीत्वात्मैवे ' त्यस्य 'देवदत्तोयज्ञदत्त ' इति प्रयोगतुल्यतया नाभेदप्रत्ययः; अत्र ज्ञानिपदस्य ज्ञानिजीवपरत्वेन आत्मप-दस्य भगवत्स्वरूपपरत्वेन उभयोरेकाधिकरणवृत्तित्वासंभवात् । किन्तु–' अग्निर्मा-णवक ' इत्यादाविव आत्मसदृशइत्येव बोधः, सादृश्यप्रयोजकश्च धर्मः अतिप्रिय-त्वमपहतपाप्मत्वादिकंच, अत्राऽऽद्यउपात्तः, द्वितीयोऽनुपात्तः । एवं विलक्षण-बोधे कारणं सर्वकारणभूत ईश्वरः, शब्दार्थतत्त्वविदः सहृदया विद्वांसो वा प्रष्टव्याः ।

नन्वेवम्—'आत्मव' दिति वत्यन्तर्निर्देशेन भाव्यमिति चेत्, न– तमन्तरे-णापि सादृश्यप्रतीतेरानुभविकत्वात् । किंच – अकृत्वैव तथानिर्देशं तदर्थप्रत्यायनं शास्त्रकृच्छैली सिद्धम् । अतएव — पाणिनिः ' गाङ्कुटादिभ्यो ऽञ्णिन् ङित्, ( १ - २ - १ ) गोतो णित् ' (पा०. सू०. ७ - १ - ९० ) इत्यादौ ङिद्वत्, णिद्वदित्याद्यर्थे ' ङित् , णित् ' इत्येव प्रायुङ्क्त । तयोरेव सूत्रयोः ' नह्यन्तरेण वति मतिदेशो गम्यते, अन्तरेणापि वति मतिदेशो गम्यते, तद्यथा – ' एष-ब्रह्मदत्तः ' अ ब्रह्मदत्तं ब्रह्मदत्त इत्याह; ते मन्यामहे ब्रह्मदत्तव दयं भवतीति, एव-मिहापि अङितंङित्, अणितंणिदित्याह, ङिद्वत्, णिद्व ' दिति गम्यते ' इति भाष्येण सदृष्टान्तं वतिंविनापि वत्यर्थावगतिः भवतीति भाष्यकारा आहुः । एवं ' बहुगणवतु डति संख्या ' (पा०. सू०. १-१-२२) इति सूत्रेपि अतिदेशपक्षे– ' यदि असंख्यां संख्यामाहे ' त्युपक्रम्य एतदृष्टान्तेन ' संख्येत्युक्तेपि संख्याव-दिति गम्यत ' इत्यवोचन् । एवंविधेनैव प्रयोगेण विवक्षितार्थप्रत्यायनं कवेःकौ-शलं स्फोरयति, काव्यस्यशोभांपुष्णाति, सहृदयानां मनांसिरञ्जयति । अतएव – ईदृशानांप्रयोगाणामुपपत्तये बहूनि निमित्तानि शास्त्रकृतो दर्शयन्ति ।

तत्र महाभाष्काराः ' पुंयोगादाख्याया ' (पा०. सू०. ४ - १ - ४८)

मिति सूत्रे प्रष्ठशब्दस्य स्त्रियांवर्तमानत्वे हेतुनिरूपणावसरे 'चतुर्भिःप्रकारैः 'अतस्मिन् स' इत्येतत् तात्स्थ्यात्; ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्, मञ्चा हसन्ति, जटीदेवदत्तः, गङ्गायांघोषः, कुन्तान् प्रवेशय' इति अतस्मिन् तच्छब्दप्रयोगे निमित्तोदाहरणे आहुः । 'इग्यणः संप्रसारणम्' (पा०. सू०.- १ - १ - ४५) इत्यत्र वाक्यस्यसंज्ञापक्षे 'संप्रसारणस्य' (पा०.सू०. ६ - ३ - १३९) इत्यादौ वर्णग्रहणंकथमित्याशङ्क्य यथा काकाज्जातः काकः, तथा – संप्रसारणपदं संप्रसारणसंज्ञकवाक्यात् जातवर्णपर' मिति तज्जन्यत्वमपि अतस्मिन् तच्छब्दप्रयोगे निमित्तमित्यभ्यधुः ।

**गौतमोपि** न्यायसूत्रे – सहचरण स्थान तादर्थ्य वृत्त मान धारण सामीप्य योग साधनाऽऽधिपत्येभ्यः, ब्राह्मण बाल कट राज सक्तु चन्दन गङ्गा शकटा (शाटका) न्न पुरुषेषु अतद्भावेपि तदुपचारः (न्या. सू. २-२-६४) इति लक्षणानिमित्तान्याह । सहचरणादिधर्मेण अतच्छब्दस्य तेनशब्देना ऽभिधानमित्यर्थ इति तद्भाष्यकारः । **मंजूषाकारस्तु** – तद्धर्माभावेपि तच्छब्दव्यवहारः सच तद्धर्मारोपेण आरोपनिमित्तानिच सहचरणादीनि इति सूत्रार्थमाह । अत्रारोपेणेत्युक्तिश्चिन्त्या, गौतमीयैर्लक्षणास्थले आरोपानङ्गीकारात्, तद्भाष्यानुक्तत्वाच्च । यद्यपि–नागेशकृत 'तत्रसंयुक्तसमवेतांजातिं ब्राह्मणेसमवायेनाऽध्यारोप्यब्राह्मणंयष्टिकेत्याहे' ति न्यायवार्तिकमतानुवादेन वार्तिककारमते आरोपोऽस्तीति प्रतीयते । तथापि – लक्षणास्थले नारोप इति तदीयानांबहूनांवादः अतश्चिन्त्यमिदम् ।

सहचरणम्=अविनाभावः, स्थानम्=आश्रयः, तादर्थ्यम्=तत्प्रयोजनकत्वम्, वृत्तम् = आचारः (व्यापारः) मानं = प्रमाणम्, धारणम् = आश्रयविशेषः, सामीप्यं = सन्निधिः, साधनं = हेतुः, आधिपत्यम् = प्रभुत्वम्, उदाहरणानि तद्भाष्ये द्रष्टव्यानि ।

**जैमिनिरपि** – यजमानः प्रस्तरः, अग्निर्वै ब्राह्मणः, आदित्यो यूपः, इत्यादौ अभेदस्यबाधितत्वात् सामानाधिकरण्यनिर्देशो ऽनुपपन्न इति प्राप्ते तत्सिद्धिः, जातिः, सारूप्यात् ' इत्यादीनि निमित्तान्याह, प्रथमस्य तुरीयेपादे । इयंच तदीयानां संग्रहकारिका – 'तत्सिद्धि जाति सारूप्य प्रशंसा लिङ्ग भूमभिः ।

षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पिता ' इति । इयंच — लिङ्गसमवाया (जै०. सू०. १ - ४ - १८ ) दित्यधिकरणे शास्त्रदीपिकायाम् ।

**ब्रह्मसूत्रकृतोपि** — ' स्याच्चैकस्य ब्रह्मशब्दवत् ' ( ब्र०. सू०. २ - ३ - ५ ) इति ब्रह्मशब्दवदितिदृष्टान्तं वदन्तः परमात्मनि मुख्यस्या ऽस्यशब्दस्या ऽन्यत्र प्रयोगो गौणइति मन्यन्ते । ताद्धर्म्यादिकं तत्रनिमित्तमिति तद्भावः । एकस्मिन्नर्थे मुख्यस्यैकस्य शब्दस्य अन्यस्मिन्नर्थे ब्रह्मशब्दवत् ब्रह्मशब्दस्येव गौणःप्रयोगः स्यादिति सूत्रार्थः । अयमर्थोभाष्यत्रयसंमतः । शङ्कररामानुजभाष्यरीत्या पूर्वपक्षसूत्रमिदम् । एतद्भाष्यद्वयेपि ' आत्मनआकाशः संभूत ' इति श्रुतिस्थः संभूतशब्दो दार्ष्टान्तिकः, पूर्णप्रज्ञभाष्यरीत्यातु ' अनादिर्वा अयमाकाश ' इति श्रुतिस्था ऽनादिशब्दः । ' तपो ब्रह्मे ' ( तै०. उ०. ३ - २ ) त्यधिकारेऽन्नादिषु ब्रह्मज्ञानसाधने तपसि च ब्रह्मशब्दोगौणः ( शं ) ' तस्मादेतद्ब्रह्मनामरूप ' ( आ. १-११ ) इत्यत्र प्रधाने ब्रह्मशब्दोगौणः,( रामा ) तत्रैवश्रुतौ कार्यब्रह्माणि चतुर्मुखे ब्रह्मशब्दोगौणः ( पूर्ण ) इति वदन्तः त्रयोपिभाष्यकारा अतदर्थकस्य शब्दस्य अतस्मिन्नर्थे, सामानाधिकरणप्रयोगेच तादर्थ्यतदधीनत्वादिच निमित्तमिति मन्यन्ते । आकाशस्य ब्रह्मकार्यत्वं प्रसाध्य ' आकाश आत्मे ' ति तु गौण इति शङ्कराचार्याः ' वियदधिकरणे यावद्विकार ' ( ब्र. सू. २ - ३ - ७ ) मिति सूत्रशेषे ब्रुवन्ति । सदृशगुणवत्त्वेन, तज्जन्यत्वे न च—समानाधिकरणप्रयोग इति तद्भावः ।

एतेन — ' रसोहमप्सुकौन्तेय ( गी०. ७ - ८ ) अहंक्रतुरहंयज्ञः ( गी०. ९ ) आदित्यानामहंविष्णुः' ( गी०. १० - २१ ) इत्यादिविभूति निरूपणप्रकरणस्थ ' रसोऽह ' मित्यादिसामानाधिकरण्यनिर्देशस्य न रसाद्यभेदेतात्पर्यम् , किंतु — रसादीनां रसत्वादिप्रदत्वेन, सजातीयेषूत्कर्षाधायकत्वेन वा, तदभिमानिदेवतानियामकत्वेन वा ' यदधीनोगुणो यस्य तद्गुणीसोऽभिधीयते ' इति न्यायात् रसादिपदवाच्यत्वात् । रसः — रसत्वादिप्रदः, रसादिनिष्ठोत्कर्षाधायक इत्यादिरर्थः । परमात्मनः सर्वशरीरकत्वात् रसादिशरीरकतया तथा व्यवहार इति केचित् ।

अतएव — ' मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ( गी०. ७ - ७ )

याभिर्विभूतिभि र्लोका निमां स्त्वं व्याप्यतिष्ठसि (गी०. १० - १३) केषुकेषुच भावेषु चिन्त्योऽसि भगवन्मया (गी. १०-१७) सर्वस्यचाहं हृदि संनिविष्टो मत्तः स्मृति र्ज्ञानमपोहनंच (गी०. १५ - १५) सर्वभूताशयस्थितः (गी० - १० - १९) ईश्वरः सर्वभूत्वानां हृद्देशे ऽर्जुन तिष्ठति' (गी०. १८-६१) इत्यादिभेदनिबन्धना व्यवहाराः संगच्छन्छन्ते ।

अत्र 'मयिसर्व' मित्येतत्, सूत्रमणिदृष्टान्तेन हरौ प्रोतत्वरूपसंयोगविशेषमात्रमभिधत्ते, 'याभि' रित्येतत् सर्वलोकेषु भगवतो व्याप्तिमाह । 'केषुके' ष्वितितु उपासनाधिष्ठानप्रश्नमुखेन किंचिदधिष्ठानं परिकल्प्य तत्र भगवदुपास्तिः कर्तव्या इत्याचष्टे । अतएव — तत्रतत्र — 'सालग्रामादौहरिपूजनव' दित्यादिशङ्कराचार्या आहुः । सूत्रकारोपि 'न प्रतीके न हि सः' (ब्र. सू. ४ - १ - ४) इति सूत्रेण प्रतीकेऽधिष्ठाने आत्मत्वबुद्धिः (प्रतीकब्रह्मणोरभेदबुद्धिः) नकार्येत्याह । एतेन—ब्रह्मकार्येषु सर्वत्र ब्रह्मत्वबुद्धिर्नकार्येति स्वाशयमाविष्करोति । 'अहमात्मागुडाकेशसर्वभूते' त्येतच्च 'केषुके' ष्विति अर्जुनकृतप्रश्नस्य प्रतिवचनं कृष्णस्य हरेः सर्वप्राणिहृदिस्थितिं कथयति, 'सर्वस्ये' ति वचनं हरेः सर्वहृदयवर्तित्वं, स्मृत्यादिहेतुत्वंच वक्ति, 'ईश्वरः सर्वे' तितु भगवतः सर्वान्तर्यामित्वेन सर्वनियामकत्वं प्रतिपादयति।यदिप्रपञ्चपरमात्मनोर्भेदो न स्यात् तदा सर्व एतेव्यवहाराअनुपपन्नाः स्युः ! एतेन—वासुदेवः सर्व ' मित्यनेन सर्वस्य वासुदेवात्मकत्वं (तदभेदः) उच्यत इति परास्तम् ! सर्वशब्देन — असंकुचितवृत्त्याबोधित चराचरात्मकजगतः वासुदेवस्यच स्वरूपैक्यायोगात् ।

किंच — जीवपरयोर्भेदाभावे 'मद्भक्ता यान्ति मामपि (गी०. ०-२३) मामेवैष्यस्यसंशयः (गी०. ८ - ७) मामुपेत्यपुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः (गी०. ८ - १५) मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्तैव मात्मानं मत्परायणः (गी०. ९ - ३४) मन्मनाः – सत्यं ते प्रतिजाने प्रियोऽसि मे' (गी०. १८ - ६५) इत्यादिना प्रतिपादित आराध्याराधकभावादिः कथमुपपद्येत तस्यभेदनिबन्धनत्वात्।

किंच — 'अहं सर्वस्यजगतः प्रभवः प्रलयस्तथा (गी०. ७ - ६ -)

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ' ( गी०. १० - ८ ) इति सप्तमदशमयो विभूतिनिरूपणोपक्रमात्पूर्वम् ,नवमे–'पिता ऽह मस्यजगतो माता धाता पितामहः' ( १७ ) इति विभूतिनिरूपणात्परं हरेर्जगत्कारणत्वोक्तिरपि विभूतिप्रकरणस्य नाऽभेदे तात्पर्यमिति ज्ञापयन्ती रसादीनां परमात्मकार्यत्वात् तदधीनत्वेन ' योय-दधीनः, स तदधीनसत्ताक इति न्यायात् , तदधीनसत्ताकत्वात् ' राजाराष्ट्र' मि-तिवत् सामानाधिकरण्येन व्यपदेश इति बोधयति । श्लोकमन्यथाव्याकुर्वभ्द्यो भगवान् क्रुध्येत् द्रुह्येच्च । लोकेहि 'पाषाणसमो ' ऽयमिति केनचिदुक्तः कश्चित् पृथग्जनोपि तथाब्रुवते कुप्यति द्रुह्यति च ।

किंच – ' बहुनाऽत्र किमुक्तेन किं ज्ञातेन तवाऽर्जुन । विष्टभ्याऽह मिदं कृत्स्न मेकांशेन स्थितो जगत् ' ( गी०. १० - ४२ ) इति विभूति प्रकरणो-पसंहारश्लोकेन सर्वजगद्धारकत्वेन सर्वत्र सन्निहितत्वमेव मम विभूतिरिति विभूति-प्रकरणतात्पर्यस्य भगवतैवनिरूपितत्वेन तत्तादात्म्यपरतया योजना गीताचार्यस्य न हृदयंगमेति विभाव्यताम् । तत्र धारकत्वम् — तत्तद्वस्तुसमवेतसत्तानुकूलो-व्यापारः सच पालनान्तर्भूतः पालनस्य स्थित्याद्यनेकव्यापारसमुदायरूपत्वात् , ततश्च भगवदधीनसत्ताकत्वं रसादीनामिति विभूत्यध्यायतात्पर्यं वेदितव्यम् । सर्वेषां भगवदधीनसत्ताकत्वंच, ' नत्वहं तेषु ते मयि ' ( गी०, ७ - १२ ) इति भगवतैवोक्तम् । नाहं तदधीनः, सर्वेभावाः मयि मदधीना इत्यर्थ इति सर्वे-भाष्यकारा व्याख्यातारश्च । इदमत्रतत्त्वम् – विभूतिप्रकरणपठिता विष्ण्वाद्यास्तु भगवद्रूपाण्येव तद्व्यतिरिक्ता रसादयस्तु तत्कार्यभूता स्तदधीना इति ।

' सर्वं खल्विदं ब्रह्म तज्जलान् शान्त उपासीत ' (छा०. ३ - १४ - १) इति श्रुतावपि सर्वं ब्रह्मेति व्यपदेशोपि सर्वस्यब्रह्मकार्यत्वात् तदधीनत्वेनैव राजा-राष्ट्रमितिवत् इतिज्ञेयम् । श्रुत्यर्थस्तु – इदं = परिदृश्यमानं, सर्वम् = समस्तं-वस्तु, ब्रह्मखलु = ब्रह्मैव । कुतोब्रह्मत्वव्यपदेश इत्यत आह—तज्जेति॥ यतः त-ज्जलान् ततो ब्रह्मैवेति अन्वयः । ततो जातं, तत्रलीनं तेन अन्यमान ( रक्ष्य-माण ) मिति । सर्वस्य ब्रह्मत्वव्यपदेशो तज्जातत्वादि निमित्तमिति श्रुतितात्पर्यम् । व्याख्यातमिदमेवमेव शङ्कराचार्यैः छान्दोग्यभाष्ये ' सर्वत्रप्रसिद्धोपदेशात् ' ( ब्र०-

सू०. १-२-१ ) इति सूत्रभाष्येच । तज्जत्वात्, तल्लीनत्वात्, तदनत्वादिति तत्रत्यं भाष्यम् । पूर्णप्रज्ञास्तु – इदंब्रह्म, सर्वम् = पूर्णम्, (सर्वगुणपूर्णमितियावत्) तत् ब्रह्म, जलान् = जले अनिति चेष्टते (प्रलयार्णशायी, क्षीरसमुद्रशायीचेतियावत्) एवंजानन् शान्तः = शमादिगुणवान्भूत्वा उपासीतपूर्णत्वादिना ध्यायेदिति श्रुतेरर्थंवर्णयन्ति । 'आत्मैवेदं सर्वम्' (छा०. ७-२५-२) ब्रह्मैवेदंसर्वम् (विश्वम्) (मु०.२-२-१) इति छान्दोग्यमुण्डकवाक्ययोरपि तज्जत्वादिनापि सामानाधिकरण्यव्यपदेश इति तात्पर्यम् वर्णनीयम् । यद्यपि उभयत्र 'आत्मैवाधस्तात्, पुरस्तात् ब्रह्म' इत्यादि सर्वव्याप्ति हेतुरुपदिष्टः सर्वस्य आत्मत्वव्यपदेशे । अथापि — तत्र तेनायमपिहेतुः समुच्चेयः । इदंबोध्यम् = शास्त्रेषु यत्रक्वापि सामानाधिकरण्येन निर्देशे हेतुरुपदिष्टः, तत्रतेनसह तज्जत्वादि हेतुरपिसमुच्चेतव्यः । यत्रतुनोपदिष्टः तत्राऽयमेवहेतु र्बोध्यः । श्रुत्यादिबोधितहेतुपरित्यागे कारणाभावात्, तत्यागस्याऽयुक्तत्वाच्च, स्वरूपाभेदे तात्पर्यंतु न कल्पनीयमिति । अस्तिचात्रैवार्थेविष्णुपुराणवचनमुपब्रूहरणम् – तथाहि–तत्र— 'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽतो जगच्च सः' (१-भा०. १-अं०. १-अ० ३५) इत्युक्तम् । तस्यायमर्थः — जगत् = समस्तः प्रपञ्चः, विष्णोः सकाशात् = नारायणात्, उत्पन्नम् = उदभूत्, तत्रैव = विष्णावेव, स्थितंच = प्रलये लीनश्च, च = यतः, असौ = विष्णुः, जगतः = प्रपञ्चस्य, स्थितिसंयमकर्ता = संयमो लयः, इदमुपलक्षणं जन्मनोपि, जन्मस्थितिलयकर्ता, अतः; जगत् सः = तदधीनम् । अत — जगतो हरेःसकाशात् जन्मादिकंभवतीतिनिरूप्य 'जगच्चस' इति सामानाधिकरण्येन व्यवहारकरणात्, तादृशव्यवहारंप्रति तज्जत्वादिर्हेतुरिति स्पष्टमुक्तं भवति ।

केचित्तु — खलुशब्दो निषेधे 'अलंखल्वोः प्रतिषेधयोः प्राचांक्त्वा' (पा०.सू०.३-४) इति सूत्रे सूत्रकृता तस्य प्रतिषेधार्थकत्वोक्तेः । अयमर्थः— इदंसर्वं ब्रह्मखलु = ब्रह्म न । किंतर्हि इत्यत आह — तज्जलानिति ॥ तज्जं तल्लीनं तदनमिति । अयमाशयः — इदंसर्वं ब्रह्मकार्यमेव नतु ब्रह्मवत् स्वतन्त्रं

वयंसर्वे कार्यकोटिप्रविष्टा एवेति तदधीना एवेति ज्ञात्वा स्वातन्त्र्याभिमानं परित्यज्य शान्तःसन् सर्वकारणत्वेन ब्रह्मोपासीतेति वदन्ति ।

एतेन — 'आत्मैवेदंसर्व' मिति श्रुते रात्मनः सर्वतादात्म्यमर्थ इतिकृत्वा, 'द्रव्यंहि नित्य माकृतिरनित्ये' ति पस्पशाह्निकस्थमहाभाष्यस्य 'असत्योपाध्यवच्छिन्नं ब्रह्मतत्वं द्रव्यपदवाच्यम्, ब्रह्मदर्शनेन गोत्वजातेरपि असत्त्वात् अनित्यत्वम्. 'आत्मैवेद' मिति श्रुते' रिति कैयटकृतव्याख्यानं चिन्त्यम् । तच्छ्रुतेस्तथार्थकत्वाभावात् । तद्भाष्यस्य ब्रह्मतदितरयोर्नित्यत्वाऽसत्यत्वप्रतिपिपादयिषयाऽप्रवृत्तेः । तथाहि — 'अथगौरित्यत्रकः शब्द' इत्यादिभाष्ये शब्दार्थत्वेन प्रसक्तेषु चतुर्पुजात्यादिषु किं जातिः पदार्थ इति दर्शनाश्रयणेन 'सिद्धे, शब्दे अर्थे संबन्धे' इति विग्रहः क्रियते, 'उत व्यक्तिः पदार्थ' इति दर्शनाश्रयेणेति प्रश्ने 'जातिः पदार्थ' इति पक्षाश्रयणेनायं विग्रह इत्यभिप्रायेण 'आकृतिमित्याहे' त्युक्त्वा सैवनित्येत्युक्तम्, ततः— 'द्रव्यंपदार्थ' इति पक्षेपि द्रव्यस्यनित्यत्वं सुसाधमिति 'अथवा — द्रव्य एवपदार्थ' इति भाष्यं प्रवृत्तम्; अत्रमते काष्ठामलभमानो भाष्यकारः पूर्वंप्रक्रान्तं 'जातिः पदार्थ' इतिपक्षमाश्रित्य 'आकृतावपी' ति आह — तस्या नित्यत्वं कथमिति प्रश्ने 'यस्मिन् तत्त्वं नविहन्यते तन्नित्य'मिति नित्यलक्षणमभिधाय, 'तद्भावस्तत्त्वम्, आकृतावपि तत्त्वं नविहन्यते' इति आकृतेरपि नित्यत्वंसाधितम् । तस्यायंभावः — आश्रयव्यक्ति (द्रव्य) नाशः सर्वप्रत्यक्षसिद्धः तदाश्रितजातिनाशस्तु दुर्निरूपः प्रत्यक्षसिद्धेद्रव्यान्तरे तस्याः सद्भावात् इति। यद्यपि—आकृतिपदं जातिव्यञ्जकावयवसंस्थानविशेषवाचि, अथापि — अत्र तद्व्यङ्ग्यजातिपरं बोध्यम् । एवंपक्षद्वयमुपपाद्य किमेतेनाऽप्रसक्तविचारेण नाऽस्माकं प्रकृते नित्याऽनित्यवस्तुविवेकेनसाध्यं किमपि । जातिद्रव्ययो (व्यक्तयो) र्मध्ये यन्नित्यं मन्यसे तदाश्रयणेन एषविग्रह इति वदाम इत्यभिप्रायकेण 'अथवा—किं न' इत्यादिभाष्येण पूर्वभाष्येऽनास्था सूचनात्, भाष्ये ब्रह्मजगतोः प्रसक्तेरेवाऽभावात् 'ब्रह्म तत्वं ब्रह्मदर्शनेन गोत्वादि जाते रसत्त्वादानित्यत्वम्' इत्यादिव्याख्यानमयुक्तम् । किंच— उपक्रमोपसंहारयोराकृतेर्नित्यत्वमभिप्रेतं भाष्यकृता । अतःकैयटेन — जातेरनित्यत्वा-

मिधानंभाष्यविरुद्धम् । किंच — ' अथवा द्रव्यपरत्र पदार्थ ' इत्यादि भाष्यं न सिद्धान्तिनः अतः तद्भाष्यस्यतथाऽर्थवर्णनंकुतोहेतोः कृतमितिचिन्त्यम् ।

किंच — यदीदंभाष्यकारसंमतं तर्हि – अस्यभाष्यस्य कैयटकृतव्याख्यादिशा ' ब्रह्मैकमेवनित्य ' मिति सिद्धान्तिसंमतप्रमेयप्रतिपादनपरत्वं वक्तव्यम् । ततश्च — वस्तुविशेषस्य नित्यानित्यत्वसाधनेन किमस्माकं प्रकृतेभविष्यति इत्याशयेन पूर्वभाष्येऽनास्थासूचनाय प्रवृत्तस्य 'किंन एतेने ' त्याद्युत्तरभाष्यस्यानुत्थितिः स्यात् । सिद्धान्तप्रमेयबोधकभाष्ये ऽनास्थासूचनायोगात्। किंच — कैयटरीत्या ब्रह्मातिरिक्तस्याऽसत्त्वे शब्दस्य, तत्संबन्धस्यच शशविषाणवदसत्त्वेन ब्रह्मणः शब्देन संबन्धस्य दुर्निरूपत्वात् , शब्दार्थसंबन्धस्यैवासंभवापत्त्या तन्मूलकविचारोऽपि असंभवदुक्तिकः स्यादिति कैयटव्याख्यानं वार्तिकभाष्यविरुद्ध मिति चिन्त्यमेव । किंच — जातिस्फोटमेव सिद्धान्तयद्भिः कैयटादिभि र्जाते र्ब्रह्मरूपतास्वीकारात् तस्या अनित्यत्वोक्तिरयुक्ता । नागेशस्तु – परमार्थदृष्ट्या सर्वमवास्तवमेव यावद्व्यवहारं वर्तमानत्वेनतु नित्यत्वव्यवहारः । एवंच—व्यावहारिकनित्यत्वं ब्रह्मेतरस्येति भाष्यतात्पर्यमित्याह, तन्न – एवंकल्पनेसूत्रेभाष्येच प्रमाणानुपलम्भात् , परेषांप्रक्रियावलम्बनेन विषयविचारस्य पदार्थस्वीकारस्य परसिद्धान्तस्य एतच्छास्त्रकृत्सिद्धान्तत्वेन व्यवस्थायाश्चा, ऽनुचितत्वात् । ' भेदस्वरूपमेव दुर्निरूप ' मिति नञर्थवादे सिद्धान्तयिष्यन् अयं भेदनिबन्धनपारमार्थिकव्यावहारिकावस्थाद्वयं कल्पयितुं कथं शक्नोतीति विभाव्यम् ।

'वासुदेवार्जुनाभ्यांवु ' न्निति सूत्रभाष्याभ्यां वासुदेवस्य सर्वोत्तमत्वतात्पर्यकाभ्यां सर्वस्य भगवत्स्वरूपत्वकल्पनं, भगवतो वा सर्वरूपत्वकल्पनमयुक्तमिति सिद्धत्वेन तन्मूलकसर्वाऽसत्त्वस्य ( मिथ्यात्वस्य ) सूत्रकाराद्यभिप्रायविरूद्धत्वावगमात् कैयटकृतव्याख्यानमनादरणीयमेव । एतेन— ' अप्रतिषिद्धमनुमतंभवती ' ति न्यायेन कैयटाद्युक्त माचार्यसंमतमिति कल्पनंतु कुकल्पनम् – वासुदेवस्योत्तमत्वमभिप्रयता पाणिना वासुदेवस्यसर्वोत्तमत्वविरोधि सर्वात्मत्वं प्रतिषिद्धमेवेति उक्तन्यायानवतारात् । किंच– उक्तन्यायेन आचार्यपाणिनिसमकालर्षिसिद्धान्तस्य, तत्पूर्वकालाचार्यकृतसिद्धान्तस्य वा आचार्यसंमतत्वकल्पनं युक्तम् , नतु — औ-

त्तरकालिकपुरुष कृतसिद्धान्तस्य। अतएव–पाणिनेःव्यासोक्तंसर्वं संमतं तस्य पाणिनेः पूर्वत्वात् तेन व्यासोक्तस्याऽप्रतिषिद्धत्वात्। न चैवं कात्यायनीयसिद्धान्तस्य न पाणिनिसंमतता स्यादिति प्रयोगविशेषस्यमतभेदेन साधुत्वाऽसाधुत्वे स्यातामिति वाच्यम्–इष्टापत्तेः। अतएव– 'नक्वादेः' (पा.सू.७-३-५९) इति सूत्रे 'यद्यपि सूत्रमतेविपरीतंप्राप्त' मित्युक्तं कौमुद्याम्! 'यथोत्तरंमुनीनांप्रामाण्य' मिति पूर्वमुनिवचनस्योऽप्रामाण्यकल्पनंतु इष्टयादेः प्रामाण्यव्यवस्थापनाय अर्वाचीनवैयाकरणगोष्ठीनिष्ठविनोदमात्रफलकम्। अतएव–कात्यायनोक्तेषु भाष्यकाराः सूत्रकाराणामनुग्रहोऽस्तीति तत्रतत्र सौत्रं ज्ञापकमुपन्यस्यन्ति। एवंच - मुनिवचनानां विसंवादे दर्शनभेद एव न्याय्य' इति वेदितव्यम्। एतेन– 'शब्दज्ञानानुपातीवस्तुशून्योविकल्पः (पा.यो. १-९) इति पातञ्जलयोगसूत्रेण यत्र वस्तुनोऽभावेपि ज्ञानमात्रं जायते तत्र विकल्पाख्यवृत्तिरित्यङ्गीकार्यम् — तेन पदार्थस्य मिथ्यात्वं सिध्यतीति मञ्जूषादौ नागेशोक्तिः परास्ता। पतञ्जलेः पाणिन्याचार्यादर्वाचीनत्वात्। नच—व्यासोक्तस्य पाणिनिसंमतत्वनिरूपणेन योगसूत्रभाष्यस्य व्यासकृतत्वात् पातञ्जलंप्रमेयं सर्वं पाणिनिसंमतमिति उक्तं भवतीति वाच्यम् — पतञ्जालिमते जगतोमिथ्यात्वाभावात्। व्यासपदेन पराशरसूनोरेव विवक्षितत्वेन योगसूत्रभाष्यकृतो व्यासस्य पाराशर्यादन्यत्वाच्च। पराशरसुतो व्यासएव योगसूत्रभाष्यकार इति तु भ्रान्तप्रलापः। अतएव–पतञ्जलि महाभाष्ये स्वप्रणीत मपि इदं सूत्रं क्वापि नोदाजहार। एतेन–शेखरे 'अचोऽन्त्यादिटि' (पा.सू.१-१-६४) इति सूत्रे 'वस्तुत' इत्यारभ्य 'शब्दज्ञाने' ति योगसूत्रोपन्यासेन कृतं विषयव्यवस्थापनं चिन्त्यम्। समुदायाऽभावस्थले टिसंज्ञातु व्यपदेशिवद्भावेन, इत्थं सूत्रयोजनया वा, भवतीतिज्ञेयम्। योजनातु — अन्त्यादीत्यत्र अन्त्येतिभिन्नंचपदंलुप्तप्रथमाकम्। अचांमध्येयोऽन्त्यः तदादिसमुदायः सोऽन्त्यश्चवर्णः टिसंज्ञ इति। एवंच - शकन्धुरित्यादौ-शकेति ककारोत्तरस्य केवलाकारस्यापि सा संज्ञा सिध्यति। अधिकमुपरिष्टात् वक्ष्यामः।

ईशजीवजडानां च ना भेदस्तस्यासिध्यति।
सामानाधिकरण्येन निर्देशेपीति भाषितम् (१)

( ७ वासुदेवस्यैव सर्वशास्त्रविषयता )

ननु — श्रुतौ, सूत्रेच ब्रह्म प्रतिपाद्यते अत एवोक्तमभियुक्तैः 'ब्रह्मेति-वेदान्तिन' इति । गीतायांतुवासुदेवः सर्वैः तीर्थकरैस्तथाव्याख्यातत्वात् । तस्मात् श्रुत्यादौ सर्वत्र वासुदेवः प्रतिपाद्यत इति कथमुच्यत इति चेत् — अत्र वदन्ति 'अधर्मेण परिभूयमानेधर्मे, प्रवर्धमानेचाऽधर्मे, जगतःस्थितिं परिपिपालयिषु रादिकर्ता नारायणाख्यो विष्णु र्भौमस्य ब्रह्मणो, ब्राह्मणत्वस्य च रक्षणार्थं देवक्यां वसुदेवा दंशेन कृष्णः किल संबभूव तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूत मिमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं, परमार्थतत्वंच वासुदेवाख्यं परब्रह्माभिधेयभूतं व्यञ्जयत्........गीतशास्त्र' मिति गीताऽवतरण शाङ्करभाष्यग्रन्थेन, पञ्चदशेऽध्याये ' सर्वोपि गीताशास्त्रार्थो ऽस्मिन्नध्याये समासेनोक्तः, न केवलं गीताशास्त्रार्थएव किन्तु – सर्वश्चवेदार्थ इह परिसमाप्त ' इति —

' इति गुह्यतमं शास्त्र मिदमुक्तं मया ऽनघ ।
एत द्बुध्वा बुद्धिमा न्स्या त्कृतकृत्य श्च भारत ' (गी.२०)

इति श्लोकीयशाङ्करभाष्येण, गीतास्थेश्वरादिपदानां ' नारायणोवासुदेवोविष्णु ' रिति व्याख्यानपरशाङ्करभाष्येण, ' ईश्वरः सर्वभूताना ' मितिश्लोके 'सर्वप्राणिना मीशनशीलो नारायण ' इति ईश्वरपदव्याख्यानपरशाङ्करभाष्येण, ईदृशार्थकेन तदीयानां मधुसूदनसरस्वतीप्रभृतीनां व्याख्याग्रन्थेन, अन्येषांचतीर्थकराणां भाष्यादिग्रन्थेनच, गीतायां वासुदेवः प्रतिपाद्यते गीतार्थएव सर्ववेदार्थइति सर्वसंप्रतिपन्नम् । नच –- व्याख्यानमात्रेण कथमेवं निर्णय इति वाच्यम् — व्याख्यानतोविशेष प्रतिपत्ति ' रिति न्यायेन महतां व्याख्यानस्यैव प्रमेयनिर्णायकत्वात् । ततश्च—' सर्ववेदार्थसारसंग्रहभूतमित्यादिशाङ्करभाष्यादितः, ' ॐ मित्येकाक्षरं ब्रह्म ( गी०.८ - १३ ) परं ब्रह्मपरंधाम ( गी०. १० - १२) अनादिमत्परंब्रह्म '(गी०. १३ -१२) इत्यादौ भगवता व्यासेन ब्रह्मशब्देन गीताप्रतिपाद्यस्य व्यपदेशात्, ' वेदैश्चसर्वैरहमेववेद्य ' ( गी०. १५ - १५ ) इति गीताचार्योक्तेश्च, वासुदेवस्य ब्रह्मानन्यत्वेन श्रुतिसूत्रगीताना मेकविषयकत्वसिध्या वासुदेवाभिधो नारायणः सर्वशास्त्रविषय इति तत्त्वं सुस्थमिति।

किंच – सूत्रकारो भगवान् बादरायणः ' ब्रह्मविदाप्नोति परम्, ( तै०. उ०. २ - १ ) तमेवं विद्वानमृत इह भवति ( तै०. आ०. १३ ) तरति शोक आत्मवित् ( छा०. ७ - १ - ३ ) इत्यादि श्रुति बोधितं ब्रह्मज्ञानं निःश्रेयसस्य परमंसाधनमिति मत्वा ब्रह्ममीमांसायां पुरुषार्थहेतुभूतात्मसाक्षात्कारसाधनब्रह्मविचाररूपजिज्ञासायाः कर्तव्यताम्. ' अथाऽतोब्रह्मजिज्ञासे (ब्र०.सू०. १ - १ - १) त्यादिमेन सूत्रेण विधाय, किं तद्ब्रह्मे ' ति तत्स्वरूपजिज्ञासायां शृंगेकर्णेवा गृहीत्वा निर्देष्टुमशक्यतया लक्षणमुखेन तत्स्वरूपं बुबोधयिषुः, 'परिदृश्यमानस्य समस्तस्यजगतः यस्मात् सृष्टिस्थितिलयादि भवति तत् ब्रह्मे ' त्यर्थकेन ' जन्माद्यस्ययत ' ( ब्र०. सू०. १ - १ - २ ) इति द्वितीयेनसूत्रेण जगत्कारणं ब्रह्मेति तल्लक्षणमभिधाय, स्थितेः पालनाद्यनेकव्यापाररूपत्वेन तत्र नियमनस्याप्यन्तर्भावात् तस्य ' यः पृथिव्यांतिष्ठन् ' ( बृ०. ५ - ७ - ३ ) इत्याद्यन्तर्यामिब्राह्मणे सूत्रनामकवायुनिष्ठतया श्रवणात्, पालनं न ब्रह्मणोलक्षणंभवितुमर्हतीति आक्षेपं परिहरन् ' अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ' (ब्र०.सू०. १ - २ - २२) इति सूत्रेण वाजसनेयके पृथिव्याद्यन्तर्यामितयोक्तं वस्तु जगत्कारणत्वेनोक्तं ब्रह्मैवेति सिद्धान्तितवान् । सूत्रार्थस्तु तत्तुइतिवर्तते — अधिदैवादिषु पृथिव्याद्यभिमानिदेवतासु, अन्तर्यामी अन्तस्थित्वानियामकत्वेन उक्त आत्मा, तत्तु = ब्रह्मैव, तद्धर्मव्यपदेशात् ' एषत आत्मे ' ति श्रुतौ ब्रह्मधर्मस्य सर्वनियमनस्य उक्तत्वात् इति । इदं बोध्यम् – अत्र कारणत्वेननिर्णीतं ब्रह्मैव अन्तर्यामिब्राह्मणवाक्यपठितात्मपदवाच्यम् अतः = पालनं ब्रह्मनिष्ठमिति तस्यतल्लक्षणत्वमिति नकश्चिद्दोषः । तत्रोपनिषदि वायुपदेन आत्मैवोच्यते वायुपदवाच्यस्यसर्वलोकाधारत्वोक्तेः तच्च — परमात्मनएव संभवति नान्यस्येति सूत्रकृदाशय इति । अतएव त्रयोऽपि भाष्यकारा अस्याऽधिकरणस्य 'एषत' इति वाक्यं विषयवाक्यतयोदाहृत्य एतच्छ्रुत्युक्तोऽन्तर्यामी जगत्कारणं ब्रह्मैवेति सूत्रकृता निर्धारितमिति एककण्ठावदन्ति । तत्र — शंकराचार्या उपनिषद्भाष्ये — 'एषत ' इति श्रुतेः ' एष आत्मा = नारायणः ते मम सर्वेषांच अन्तर्यामीति अक्षरार्थमवर्णयन् ।

किंच – ' उत्पत्त्यसंभवात् ' ( ब्र०.सू०. २ - २ - ४२ ) इति सूत्रे

'भगवानेवैको वासुदेवो निरञ्जनो ज्ञानस्वरूपः परमार्थतत्वम्, तत्र यत्तावदुच्यते योऽसौ नारायणः परो ऽव्यक्तात् प्रसिद्धः परमात्मा इति....तत् न निराक्रियत' इत्याहुः शङ्कराचार्याः।

किंच — प्रथमेनाध्यायेन सर्वज्ञस्यभगवतः परमात्मनः समन्वयमुखेन जगत्कारणत्वादिके प्रतिपादिते तदसहमानैः सांख्यादिभिः कापिलस्मृत्यादिविरोधात् उक्तमसंगतमिति प्रत्यवस्थाने तत्परिहाराय प्रवृत्तेद्वितीयस्मिन्नध्याये आद्येपादे कापिलस्मृतिविरोधपरिहाराय प्रवृत्तम्—स्मृत्यनवकाशदोषप्रसंगादिति चेन्नाऽन्यस्मृत्यनवकाशदोष प्रसंगात्' (ब्र०. सू०. २ - १ - १) इति प्रथममधिकरणं व्याकुर्वाणाः शङ्कराचार्याः श्रुत्यनुसारिप्रबलस्मृतिबलात् नारायणएव जगत्कारणमिति सिद्धान्तयन्ति। इदंतदीयतत्सूत्रभाष्यम् — ब्रह्मणः कारणतास्वीकारे प्राधान्येन मोक्षसाधनमधिकृत्य प्रणीताना मनन्यप्रयोजनतया निरवकाशानां कापिलस्मृतीना मानर्थक्यप्रसंगः अत स्तदविरोधेन वेदान्तवाक्यानि व्याख्येयानि तत्रहि — प्रधानं जगतः कारणमित्युक्तम्, अतः प्रधानमेवजगतः कर्तृ न ब्रह्मेति सांख्यानामाक्षेपे, तस्याऽयंसमाधिः — नतद्युक्तम्, अन्यस्मृत्यनवकाशदोष प्रसंगात्, ईश्वरकारणतावादिन्यः श्रुत्यनुसारिण्यो बह्व्यः स्मृतय उपलभ्यन्ते, प्रधानस्यकारणत्वे तासामानर्थक्यं प्रसज्जेत, विप्रतिपत्तौ श्रुत्यनुसारिण्यएव प्रमाणं ताश्चोदाहरिष्यामः........

'अतश्च संक्षेप मिमं शृणुध्वं नारायणः सर्वमिदं पुराणः।
स सर्गकालेच करोति सर्वं प्रयाणकालेच तदत्तिभूयः'॥

इति पुराणे, गीतायां च — अहंकृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति, परमात्मानमेवच प्रकृत्य आपस्तम्वः पठति—तस्मात्काया: (जीवाः) प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्य' (ध०. सू०. १ - ८ २३ - २) इतीति।

अयमत्र भाष्यतात्पर्यसारः — श्रुतिसूत्रादीनामर्थसंशये इतिहासपुराणानुसारेणैव तदर्थो निर्णेतव्यः, तत्रश्रुत्यनुसारि इतिहासपुराणवचनं प्रबलं प्रमाणम्, 'अतश्चसंक्षेप' मित्यादितु तादृशंप्रमाणम्। अत्रच— संक्षेपमित्युक्त्वा समस्तशास्त्रार्थः क्रोडीकृतः, अतः सर्वेषां कारणवाक्याना मेतदनुसारेणार्थोवाच्यः ततश्च

यतोत्राइमानि' इत्यादिकारणवाक्यानां नारायणस्यैव समस्तजगत्कारणत्वे तात्पर्यम्, तत्रत्यात्मब्रह्मादिपदानां नारायणपरत्वमेव, प्रधानादीनां कारणतावादस्तु श्रुत्यादिविरुद्धः, ततश्च नारायणएव परतत्वमिति ।

परमार्थसारकृतः शेषनागाचार्यस्य, अणुभाष्यकाराणां वल्लभाचार्याणां, श्रीरामानुजमुनिवर्याणां श्रीमत्पूर्णप्रज्ञमुनिवर्याणांच वासुदेवएवपरतत्वं, जगत्कारणंचेति सिद्धान्त इत्यत्र न काचिद्विप्रतिपत्तिः ।

'अतश्चसंक्षेप' मितिश्लोकस्यतु अयमर्थः - अतः = अनन्तत्वाच्छास्त्राणां पुरुषायुषश्च परिमितत्वाचहेतोः, 'अनन्तशास्त्रं बहुवेदितव्य मल्पश्चकालो बहवश्च विघ्नाः । यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाऽम्बुमिश्रम्' इत्युक्तेः, संक्षेपम = समस्तशास्त्रार्थसारसंग्रहम्, इमं = वक्ष्यमाणम्, शृणुध्वम् = शृणुत, आर्षमात्मनेपदं नारायणः=मध्येक्षीरसमुद्रं भुजङ्गभोगतल्प मधिशयानःश्रियःपतिः, पुराणः=आदिपुरुषः, सः=नारायणः=सर्गे=सृष्टिकाले, इदंसर्वम् = परिदृश्यमानं समस्तंजगत्, करोति=सृजति, इदमुपलक्षणं स्थितेरपि, प्रयाणकाले=प्रलयसमयेच, तत्सर्वम्=सृष्टंसमस्तंजगत्, अत्ति=नाशयति, भूयः=पुनरपि, एवमितिशेषः। पुनः एवमेवकरोति प्रतिकल्पम् 'धाता यथा पूर्व मकल्पय' (ऋ. सं ८-८-४८) दितिश्रुतेरिति । तात्पर्यंसुव्यक्तम । इदंज्ञेयम्—अत्राऽन्यत्रच सूत्रे 'स्मृती'त्युक्तेः, शंकरभाष्येपुराणवचनोपन्यासात्, अधिकरण पूर्वपक्षसिद्धान्तयोः उपबृंहणं पुराणवचनमुपन्यसनीयमिति सूत्रभाष्यकारणामाशयः । नच— स्मृतिपदघटिते सूत्रेतदुपन्यासो युक्तः, अतादृशेसूत्रे तदुपन्यासो न न्याय्य इति वाच्यम्—श्रुतेस्तुशब्दमूलत्वात्' (ब्र.२-१-२८) इतिसूत्रे स्मृतिपदाघटिते तथाचाहुः पौराणीकाः 'अचिन्त्याः खलु ये भावा न तास्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्' इति शाङ्करभाष्ये पुराणवचनोपन्यासेन तथाकल्पनायोगात् । नच—अमा-

१. प्रत्यधिकरणमुदाहर्तव्यानि उपबृंहणानि शिष्याएव तत्र समर्थाभविष्यन्तीति नोदाहृतान्यस्माभिरिति तद्भावः । एतेन — येतु आत्मनः शङ्कराचार्य मतानुयायितां प्रख्यापयन्तोऽर्वाचीनतमाः पण्डितंमन्याः स्पष्टप्रतिपत्तये उपबृंहणवचनान्युदाहरतोऽवजानन्ति ते प्रथमं स्वाचार्यानेव परिभावयन्तीति विभाव्यम् ।

त्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः, एवमोङ्कारआत्मैवसंविशत्यात्मनाऽऽत्मानं, यएवंवेद' (मा० १२) इतितुरीयस्यात्मनःशिवइतिविशेषणात्, 'नान्तः प्रज्ञं न बहिः प्रज्ञं........शान्तंशिवमद्वैतंचतुर्थंमन्यन्ते' (मा० ८) इति मन्त्रेचशिवमित्युक्तेश्च, शिवस्यैवशास्त्रविषयत्वं युक्तमितिवाच्यम्— द्वादशेमन्त्रे शिवइत्यस्य मङ्गलकरइति श्रीशङ्कराचार्यैर्व्याख्यातत्वात्, सप्तमे शिवमित्यस्य परिशुद्धमितिआनन्दगिरीये व्याख्यतत्वात् तस्यरुद्रपरत्वाभावेन शिवस्यशास्त्रविषयत्वकल्पकत्वाभावात्।

गीतायांविश्वरूपाध्याये 'ऐश्वरंरूप' मितिवाक्यश्रवणमपि न गीतादीनां शिवपरत्वसाधकं तथाहि —

'एवमेतद्यथऽऽत्थत्वमात्मानं परमेश्वर। 'द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम' (११३) इति बिश्वरूपदर्शनप्रार्थनाश्लोके 'ऐश्वरंरूप' मित्यस्य 'ज्ञानैश्वर्यबलशक्तिवीर्यतेजोभिः संपन्नं वैष्णवंरूप' मिति शङ्कराचार्यैर्व्याख्यानात् प्रार्थनावाक्यस्य वैष्णवरूपदिदृक्षाविषयकत्वसिध्द्या —

एव मुक्त्वा ततोराजन् महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम्' (११-९)

इति 'प्रार्थितमर्थमपूरय' दित्यर्थक श्लोकस्थस्य 'ऐश्वरंरूप' मित्यस्यापि प्रश्नवाक्यव्याख्यानुरोधेन ज्ञानैश्वर्यादिविशिष्टं वैष्णवंरूप मित्यर्थस्यैव युक्तत्वात्। किंच 'पश्य मे पार्थ रूपाणि, (गी०. ११-५) नतु मां शक्यसे द्रष्टुम्' (गी०. ११-५) इति दर्शयिष्यमाणरूपस्यभगवताकृष्णेन स्वीयत्वस्वाभिन्नत्वनिरूपणात् विश्वरूपस्य वैष्णवत्वसिद्धिरितिज्ञेयम्। एतेन — ऐश्वरमितिपदं शैवमितिव्याख्याय विश्वरूपाध्यायस्य शिवपरत्वंप्रकल्प्य, एतदुपलक्षितंशास्त्रंसर्वं शिवपरं, शिव एव परतत्वमिति रामायणभारतसारसंग्रहादौ केषांचिदद्वैतिनां शङ्कराचार्यमतानुयायिनां निरूपणं दुराग्रहमूलकं, स्वाचार्यतात्पर्याननुरोधिच। शिव एव परंतत्व मिति शैवानां वादस्तु शंङ्करभाष्यादित एव समाहितः। भारतादीनां वासुदेवपरत्वे उपक्रमोक्तं कारणमत्राप्यनुसन्धेयम्। एवंच — जगत्कारणं वस्तु

नारायणाभिधं परतत्वमितिसर्वशास्त्रतात्पर्यम् । विस्तरस्तु — श्रीविजयीन्द्रयतीन्द्रप्रणीतायां परतत्प्रकाशिकायाम्।

'दासभूताः स्वतः सर्वेप्यात्मानः परमात्मनः ।
अतो ऽहमपि ते दास इतिमत्वा नमाम्यहम्,

इत्यादिशिववाक्योदाहरणेन वासुदेवस्य परत्वं व्यवस्थापकैः श्रीवेदान्तदेशिकैः प्रणीत रहस्यत्रयसारे (६) अधिकारे च द्रष्टव्यः।

किंच — भगवता व्यासेन 'नतो ऽस्म्यहं त्वा ऽखिलहेतुहेतुं नारायणं पूरुष माद्य मव्ययम् । यन्नाभिजाता दरविन्दकोशा द्ब्रह्मा ऽऽविरासीद्यत एष लोकः' (भाग०. १० - ४० - १) इत्यादिना भागवतादौ प्रपञ्चितं प्रपञ्चनिर्माणचतुर चतुराननकारणतया सर्वकारणत्वंपरतत्वत्वंच नारायणस्य। ननु शिवस्य परमात्माभिन्नतयाऽस्ति जगत्कारणतेति वदाम इति चेत्, उच्यते— किमिदं मुक्तौ उत संसारित्वे । नाद्यः — तत्र परमात्मस्वरूपत्वेन तस्य निर्धर्मकत्वस्वभावात् जगद्व्यापारस्यैवा ऽसंभवेन 'जगद्व्यापारवर्जं' मिति परतन्त्रादन्यस्य अप्रसक्तजगत्सृष्ट्यादि व्यापारप्रतिषेधवचनवैयर्थ्यात्। एतेन मुक्तावपि मुक्तस्य परमात्मभेद एव सूत्रकृत्संमत इति भाति। नच स्वरूपकीर्तनपरं सूत्रमिति वाच्यम्— वर्जमित्युक्तया तद्भिन्नव्यापारान्तरास्तित्वलाभात् तथाकल्पनाऽयोगात् । द्वितीयेतु — तदा अभेदस्यैवाभावेन एवं वक्तुमशक्यम्। कैश्चिदपितीर्थकरैः शिवादेः कारणताया अनङ्गीकाराच्च नेदं युक्तम् । किंच — ब्रह्ममीमांसाकृतैव 'पत्युरसामञ्जस्या' (२ - २ - ३७) दित्यनेन पशुपतिमतनिरसनमुखेन पशुपतेरुद्रस्य जगत्कारणता प्रतिषिद्धा । नच— निमित्तकारणत्वमात्रं तेन प्रतिषिद्धम्, उभयविधकारणत्वंतु तस्यास्तीति तात्पर्यमिति वाच्यम् — 'जन्माद्यस्ययतः' (१ - १ - २) इति सूत्रेणब्रह्मणो यादृशं कारणत्वं बोधितं तत् रुद्रस्य नास्तीत्यर्थस्यैव युक्तत्वेन एवं कल्पने मानाभावात् । भगवद्गुणकीर्तनेन दुरितक्षयमपेक्षमाणामहान्तोपिकवयोऽमुमेवशास्त्रार्थं बोधयन्ति । तथाहि — तद्वाक्यम् — 'नारायणाय नलिनायतलोचनाय नामाऽवशेषित महाबलिवैभवाय । नानाचराऽचरविधायकजन्मदेशनाभीपुटाय पुरुषाय नमः परस्मै (चंपूरा १-१६) त्रिरमति महा-

कल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षण मात्मभू : । किमधिकरणं कीदृक् कस्य व्यवस्थिति रित्यसावुदर मविश दृष्टुं तस्मै जगन्निधये नमः' ( अनर्घ. २ ) इति । ननु तर्हि – रुद्रस्यकारणताबोधकवाक्यानांकागतिरिति चेत्; शृणु– तत्र रुद्रादिपदस्य तदन्तर्यामि वासुदेवपरत्वेन तान्यपिवाक्यानि नारायणस्य कारणत्व पराण्येवेति । एतेन — शब्दब्रह्मणो जगत्कारणत्वमिति मञ्जूषादौ नागेशाद्युक्तं ब्रह्मवित्सिद्धान्तविरुद्धं पाणिन्याद्यनभिमतंचेवेति वेदितव्यम् ।

श्रुत्यादिप्रतिपाद्यस्तु वासुदेवः परः पुमान् ।
इति शङ्करभाष्यादिप्रमाणै र्निर्णयः कृतः ॥

---

( ८ - निमित्तकारणत्वविचारः )

सर्वशास्त्रार्थसारसंग्राहिकायाम् ' अतश्चसंक्षेप ' मिति श्रुत्यनुसारिण्यांस्मृतौ ' स सर्गकालेपरिणाममेति, विवर्ततामेति ससर्गकाले' इति वा वक्तव्ये 'ससर्गकालेचकरोतिसर्वं' मित्युक्तयाघटादेः कुलालादिरिव भगवान्नारायणो जगतो निमित्तकारणं, नतु द्विविधमुपादानकारणमिति श्रुतिस्मृतितात्पर्यमित्यवगन्तव्यम् । एवंच — ' यतोवा ' ( तै०. उ०. ३ - १ ) इत्यादौ 'यत ' इतिपञ्चमी निमित्तार्थिकैवेति श्रुत्यादिभिर्व्याख्यातं भवति । इदमेव श्रीव्यासाभिमतं मतं, संग्रहश्लोकस्य तत्कृतत्वात् । पाणिनि पतञ्जल्योरपि इदमेवमतमभिमतम् , ताभ्यां ब्रह्मणोनिमित्तकारणताया अनिषेधात्, उपादानकारणताया अनभिधानाच्च ।

ननु — ' जनिकर्तुः प्रकृति ' (पा०. सू०. १-४-३०) रित्यत्र प्रकृतिपदं प्रयुञ्जानः पाणिनि र्ब्रह्मण उपादानत्वमभिप्रैतीति चेत् , न— वासुदेवस्यसर्वोत्तमत्वमभिप्रयतः प्रकृतिपदप्रयोगमात्रेण एवमभिप्रायवर्णनायोगात् । एवंकल्पनस्योत्तमत्वविरोधित्वात् । उभयविधकारणसंग्रहाय तत्पदप्रयोग इति वक्तुं शक्यत्वात् । एतेन—येतु वैयाकरणा ब्रह्मण उपादानत्वंवदन्ति ते पाणिनेराशयमननुरुन्धाना एव । पाणिनेस्तु अयमाशयः — ' यतोवा इमानिभूतानिजायन्त ( तै०. उ०. ३-१) आत्मन आकाशः संभूतः (तै०.उ०. २-१) सर्वाणिहवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते (छा०. १९१ ) तस्मादेतद्ब्रह्म नामरूपमन्नं च

जायते ' ( मु०. १ - १ ९ ) इत्यादिसृष्टिवाक्येषुकातिपयेषु 'यत' इत्यादिकारणवाचकस्य पञ्चम्यन्तत्वश्रवणेपि, नैतान्येव सृष्टिवाक्यानि शास्त्रेषु, अपितु — 'सोऽकामयत बहुस्यां प्रजायेयेति सतपोऽतप्यत सतपस्तप्त्वा इदंसर्वमसृजत यदिदं किंच ( तै०. उ०. २ - ६ ) स ईक्षांचक्रे कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तोभविष्यामि कस्मिन् न्वहंप्रतिष्ठिते प्रतिष्ठास्यामि सप्राणमसृजत् प्राणाच्छ्रद्धाम् ( ष०. प्र०. ६ - ३ ) आत्मावा इदमेकएवाऽग्र आसीत् नान्यत्किंचनमिषत् स ऐक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत ( ऐ०. उ०. १ - १ - ३ ) तदैक्षत बहुस्यांप्रजायेयेति तत्तेजोऽसृजत, तत्तेज ऐक्षत बहुस्यांप्रजायेयेति तदपोऽसृजत ता आपऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त ( छा०. ६ - २ - ४ ) सेयंदेवताऐक्षत हन्ताऽहमिमास्तिस्रोदेवता अनेनजीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरवाणि ( छा०. ६ - ३ - २ ) यो ब्रह्माणं विदधातिपूर्वं यो वैवेदांश्च प्रहिणोति तस्मै । तंह देवमात्मबुद्धिप्रकाशं मुमुक्षु वैं शरणमहं प्रपद्ये ( श्वे०. उ०. ६ - १८ ) सविश्वकृत् विश्वविदात्मयोनिः ( श्वे.उ. ६-१६ ) असृजत्सलिलंपूर्वं सच नारायणः प्रभुः । ततस्तु भगवान् तोये ब्रह्माण मसृजत्स्वयम् ( भार०. सभा०. ४३ - ३ ) सर्वभूतानिकौन्तेय प्रकृतिंयान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ( गी०. ९ - ७ ) प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।भूतग्राममिमंकृत्स्नमवशं प्रकृतेर्वशात् (गी. ९-८ ) चातुर्वर्ण्यं मयासृष्टं गुणकर्मविभागशः ' ( गी०. ४-१३ ) इत्यादीनि कारणवाचक प्रथमान्ततृतीयान्तपदघटितानि सृष्टिवाक्यानि बहुलमुपलभ्यन्ते सर्वेषा मपि सृष्टिवाक्यानां भगवान् वासुदेव एव कारणमित्यत्र तात्पर्यम् । तच्च निमित्तं वा उपादानंवेति विशयस्तु वस्तुस्वभावंविज्ञाय परिहर्तव्यः । यदि वस्तु परिणामि कार्यात्मना तर्हि उपादानकारणं मृद्घटस्येव, यदिकारणभूतं वस्तु कार्याऽऽत्मना अपरिणामि तदा निमित्तकारणमेव, यथा — दण्डोघटस्य । वासुदेवस्य तु अचेतनात्मना वा अन्यचेतनात्मना वा परिणामं नाभ्युपैति कश्चिदपि तथापरिणामस्य उत्तमत्वविरोधित्वात् अतोनिमित्तकारणमेव वासुदेवो जगतः । 'यतोवे' त्यादि पञ्चमीतु 'दण्डाद्घटोजायते पुत्रात्प्रमोदोजायत' इत्यादाविव

निमित्तकारणवाचिकैव सूत्रप्रकृतिपदं कारणपरमिति ।

वृत्तिकृत्तुजानन्नेवामुमाशयमाचार्याणां 'जनिकर्तुः प्रकृति' (पा० १-४-३०) रितिसूत्रे प्रकृतिपदं हेतुपरमिति व्याचष्टे । जनिकर्तुः जायमानस्य, प्रकृतिः हेतुः अपादानमितिसूत्रार्थः । हरदत्तोपि मञ्जर्याम् 'अन्ये' त्वित्यादिना प्रकृतिपदस्य कारणमात्रपरत्वादेव 'पुत्रात्प्रमोदोजायते' इत्यादौ पुत्रपदोत्तर मनेन पञ्चमीत्याह । पुत्रस्तु प्रमोदस्यनोपादान मपितु निमित्तमिति स्पष्टंसर्वेषाम् ।

ननु — मनोरमायां 'जनिकर्तु' रितिसूत्रव्याख्यावसरे 'प्रकृतिपदमुपादानमात्रपरमिति भाष्यकैयटमतमित्युक्तम्, तत्र भाष्यकैयटे' तिप्रतीकमादाय 'इदमेवन्याय्य' मित्यादिना प्रकृतिपदस्य तत्रैवप्रासिद्धेः, प्रत्याख्यानभाष्याच्च, किंच — वृत्तिकृन्मते कारकइत्यस्या ऽधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्या ऽन्वयोऽसंभवी, नहिकारणानां मध्यउपादानकारणमितिवत्, कारणानांमध्य कारणमितिसंभवति' इत्यन्तेन ग्रन्थेन हेतुपरं प्रकृतिपदमितिवृत्तिकृन्मतं दूषितं हरिदीक्षितेन शब्दरत्ने । ततश्चप्रकृतिर्हेतुरितिव्याख्यानं लोकप्रसिद्धिविरोधभाष्यविरोधाऽन्वयानुपपत्तिरूपदोषत्रयग्रस्तमितिचेत्, शृणु – 'प्रधानंप्रकृतिः स्त्रीयाम्, संसिद्धिप्रकृतीत्विमे, राज्याङ्गानि प्रकृतयः, प्रकृतिर्योनिलिङ्गेचे' त्यमरात्, प्रकृतिर्गुणसाम्येचामात्यादिस्वभावयोः । योनौलिङ्गेपौर-वर्गे इतिमेदिनीकोशात्, प्रकृत्यानियताःस्वया (गी० ७-२०) इत्यादौ स्वभावे, प्रकृतिंस्वाम धिष्ठाय (गी.४-६) वैष्णवशक्तौ, 'भिन्नाप्रकृतिरष्टधा (गी० ८-४) अपरेयमितस्त्वन्यां प्रकृतिंविद्धि मे पराम्' (गी० ८-५) इत्यादौ प्रधानतदभिमानदेवतयोः, भरतःप्रार्थयामास प्राञ्जलिः प्रकृतीःकृती, (अयो.८२) तिचंपूरामायणे राज्याङ्गामात्यादिषु, न केवलाप्रकृतिः प्रयोक्तव्यानापिकेवलः प्रत्यय' इत्यादिषु प्रत्ययप्राग्वृत्तिशब्देषु, प्रयोगदर्शनात् 'तत्रैवप्रासिद्धे' रितिप्रथमोहेतुर्व्यभिचरितः । ततश्च – प्रकृतिपदस्य नानार्थकत्वेन अवधारणाऽयोगः । ननु – तत्रसूत्रे प्रकृतिपदं हेतुसामान्यपरं वा विशेषकारणपरंवेतिसंभावितकल्पयोर्मध्ये विशेषकारणपरमेव प्रसिद्धेरित्युक्त्या कारणसामान्यपरत्वं व्यावर्त्यते अवधारणेनेतिचेदुच्यते — तदर्थंविकृतेः प्रकृतौ' (पा० सू० ५ १-१२)

१. शाङ्करभाष्यरीत्या इदम् ।

इतिसूत्रस्थेन 'विकृतिपदसमभिव्याहारात् प्रकृतिपदमुपादानकारणपर' मितिवृत्तिग्रन्थेन, प्रकृतिविकृतिशब्दौ परस्परसमभिव्याहारात् उपादानतत्कार्यपरा' विति तत्सूत्रस्थशेखरग्रन्थेनच पदान्तरसमभिव्याहारएव प्रकृतिपदस्यकारणविशेषपरत्वावगमात् । प्रकृतेचतथाविधसमभिव्याहाराऽभावेन तथावक्तुमशक्यमिति ।

'प्रत्याख्याने' तिद्वितीयोऽपिहेतुः परेषां नार्थसाधकः, तद्भाष्यत स्तदभिमतार्थालाभात् । तथाहि—'जनिकर्तु' रितिसूत्रेहि "अयमपि योगःशक्योवक्तुं कथंगोमयाद्वृश्चिको जायते गोलोमाविलोमभ्योदूर्वा जायन्ते' इति, अपक्रामन्तिताः, स्तेभ्यः, यद्यपक्रामन्ति किंनात्यन्तायाऽपक्रमन्ति सतन्तत्वात् । अथवाअन्याश्चान्याश्च प्रादुर्भवन्ति" 'इत्युक्तंभाष्ये । 'लोकप्रसिद्धिमाश्रित्य तदुच्यते, लोकेहि यद्यस्माज्जायते इत्यादिना कारणात्कार्यस्य निर्गमे वृक्षजन्यफलस्ये' वेति दृष्टान्तंदर्शयित्वा 'वैशेषिकसांख्यमतयो र्नोपादानकारणात्कार्यस्यनिर्गम' इत्याहकैयटः । अत्रभाष्यकैय्ययोः सौत्रप्रकृतिपदमुपादानकारणपरमित्यत्र न किंचिदपि गमकमुपलभ्यते । ननु – गोमयाद्वृश्चिकोजायते, गोलोमभ्योदूर्वाजायन्त' इत्युदाहरणमेव गमकमिति चेत्, न—'पुत्रात्प्रमोदोजायते' इत्यादीनामपि अनेनोपलक्षणात् । 'न चोदाहरणमादरणीय'मिति न्यायात्' अतएवतत्रतत्र उदाहरणभाष्यं न परिगणनपरं किंतु उदाहरणप्रदर्शनमात्रपरमितिवदन्ति । ननु— तर्हि तदेवभाष्यकृतोदाहर्तव्यमिति चेत्, न – स्वतन्त्राणामाचार्याणां तथापर्यनुयोगायोगात् । अत्रोदाहरणे बोधनीयविशेषांशसद्भावेनैतदुदाहरणाच्च पुत्रेकारणे प्रमोदस्याऽदर्शनेन पित्रादावेव तद्दर्शनेनच तत्रबौद्धस्याऽपक्रमणस्य स्पष्टमुपलंभेन, दूर्वाणां सन्ततत्वात्. (अविच्छिन्नत्वात्) विश्लेषसद्भावेपि कारणान्निर्गमस्य स्पष्टमनुपलम्भेन 'ध्रुव' मित्यनेन कथं गोमलोमादेरपादानता स्यादिति संभवन्तं संशयं निवर्तयितुं 'गोलोमभ्य' इत्याद्युदाहरणम् । ननु— तर्हि 'गोमयात्' इत्याद्यु दाहरणं व्यर्थमितिचेत्, न – खट्वेन्द्रोमालेन्द्र' इत्यादिभाष्यविमर्शने द्वयोर्द्वयोरेवोदाहरणयोः प्रदर्शनं भाष्यकृच्छैलीसिद्धमित्यवगमात् । एतेन – 'गोमयाद्वृश्चिकोजायते' इत्यत्र वृश्चिकशरीरोपादानभूतो यावान् गोमयभागः स कार्यरूपेण परिणतः सन् कारणभूतमहागोमयराशे रपक्रान्त (निर्गत) इति अपक्रमस्य तत्र स्पष्टमुपलम्भात्

तदुदाहरणं व्यर्थमितिपरास्तम् । यथागोमयराशेः वृश्चिकशरीररूपेण परिणतो गोमयभागो ऽपक्रान्तः, न तथागोलोमकार्यदूर्वाणां तेभ्योऽपक्रम इति व्यतिरेकदृष्टान्तप्रदर्शनार्थं तदुदाहरणात् । अतएव–' अपक्रामन्ति तास्तेभ्य नात्यन्ताय अपक्रामन्ति' इत्यादिना दूर्वाविषयएव अपक्रमणमुपपादितम् । अस्त्यत्रापक्रमः अथापि वृश्चिकशरीवत् न स्पष्टंपृथगुपलभ्यते कारणसंबन्धस्यापि सद्भावात्, कारणसंबन्धे कारणन्तु अविच्छेदः, यथा बिलान्निःसरतो दीर्घभोगभोगिनो बिलेप्युपलब्धौ अविच्छेदोहेतुरितिभावः । ननु–' तास्तेभ्य ' इतिअपक्रमणोपपादनमुभयसाधारणमितिचेत्, न–तथासति ' त्यदादितःशेषेपुन्नपुंसकतोलिङ्गवचनानी ' ति पुंल्लिङ्गनिर्देशस्य भाव्यत्वात् । ततश्च – अत्रत्यभाष्यकैयटाभ्यां सौत्रंप्रकृतिपद मुपादानकारणपरमिति न सुकरं निर्धारणम् ।

किंच – ' प्रत्याख्यानपरभाष्यमंमत ' मित्युक्तया सूत्रकृतो नेदंसंमतमित्युक्तंभवति। एवंच सूत्रकृन्मते प्रकृतिपदस्य कारणमात्रपरत्वं ' पुत्रात्प्रमोदो जायते, गोमयाद्वृश्चिको जायते, दण्डाद्घटोजायत' इत्यादिसर्वं सूत्रोदाहरणमेव । नच–फलभेदे प्रत्याख्यानायोगः, प्रारम्भे प्रकृतिपदं कारणसामान्यपरं प्रत्याख्याने उपादानकारणपरमिति ' पुत्रात्प्रमोदोजायत इत्यत्रपञ्चमीप्रवृत्त्यप्रवृत्तिभ्यां फलभेदस्य स्पष्टत्वादितिवाच्यम् – ' नबहुव्रीहौ, नकादे ' रित्यादीनां फलभेदेपि प्रत्याख्यानवत् तत्संभवात् । वस्तुतः उक्तदिशा भाष्यतः प्रकृतिपदमुपादानकारणपरमित्यलाभात् भाष्यमतेऽपि कारणसामान्यपरमेव प्रकृतिपदमिति न फलभेदः ।

ननु – ' पुत्रात्प्रमोदोजायत ' इत्यत्र ' विभाषागुणेऽस्त्रियां ' (पा०सू०. २-३-२५) मित्यत्र विभाषेतियोगविभागात् पुत्रपदोत्तरं हेत्वर्थे पञ्चमीतिचेत्, न – योगविभागस्य भाष्येऽदर्शनात् । ' यतोवे ' त्यादावपि योगविभागेनैवहेतौपञ्चमीति निमित्तकरणतावादिनापि वक्तुं शक्यम् । कारकविभक्ति प्रयुक्तकार्यविशेषस्तु उभयत्र मृग्यः । परिणामिकारणस्थले विश्लेषाभावं मन्यमानंप्रति विश्लेषोऽस्तीतिबोधनाय भाष्यंप्रवृत्तम् । ततश्च–प्रत्याख्यानभाष्येण प्रकृतिपदमुपादानकारणपरमितिकल्पनंदुःशकम् । तद्विनापिभाष्यस्योपपद्यमानत्वात् । यत् येनविनाऽनुपपन्नं तद्धि तस्य कल्पकमिति ।

एतत्सर्वमभिप्रेत्य 'प्रकृतिपदस्य नानार्थकत्वेन अन्यत्राप्यर्थे प्रयोगदर्शनेन प्रथमसमाधौ अरुच्या, प्रत्याख्यानेति द्वितीयाश्रयणम्, तत्रापि तद्भाष्येणच — स्पष्टमुक्तार्थाऽलाभात् किं चेति तृतीयं समाधानमिति रत्नव्याख्यानकृत् वैद्यनाथ आह। इदं ज्ञेयम् — 'उक्तभाष्येणस्पष्टमुक्तार्थालाभा' दिति रत्नग्रन्थावतरणग्रन्थेन 'कारणमुपादानकारणम्' इति हरदत्तग्रन्थः, 'प्रकृतिपदमुपादानकारणपर' मिति प्राचीन नवीन वैयाकरणग्रन्थाः, अन्येषामेवंजातीयका ग्रन्थाश्च 'जनिकर्तु' रिति सूत्रप्रत्याख्यानपरभाष्यविरुद्धा इति' स्पष्टमुक्तं भवतीति।

'किंचेत्यादिनोक्तस्तृती' योपि हेतु र्न युक्तः, तथाहि — काशिकावृत्तौ कारकाधिकारपठितेषु द्वात्रिंशातिसूत्रेषु (३२) क्वापि न 'कारक' इति सप्तम्यन्तपाठस्य 'निर्धारणसप्तमी' तिवाक्यस्य वोपलम्भः, प्रत्युत 'कारक' इति सूत्रे 'कारक' इतिविशेषणमपादानादिसंज्ञाविषयमधिक्रियते इति' वाक्यमस्ति, ध्रुवादि संज्ञाविधायकप्रघट्टके प्रतिसूत्रं 'यत् ध्रुवं तत्कारकमपादानसंज्ञम्, तत्कारकंसंप्रदानसंज्ञम्, तत्कारकं कर्मसंज्ञम्, तत्कारकंकर्तृसंज्ञम्' इत्यादि तत्तत्सूत्रार्थप्रदर्शकवाक्ये 'कारक' मिति विशेषणपदं प्रथमान्तं चोपलभ्यते। एतेन — कारक इति सप्तम्यन्तं पदं प्रथमान्ततया विपरिणामितव्यम्, सूत्रेतु-प्रथमार्थेसप्तमीति तदभिप्रायोऽध्यवसीयते। अतोरत्नोक्तं न युक्तम्।

ननु — तद्व्याख्यायां पदमञ्जर्यांहरदत्तेन प्रथमान्तपाठपक्षंदूषयित्वा 'कारक' इति निर्धारणसप्तमी सामान्यापेक्षंचैकवचनं विशेषणाऽधिकारेतु कारकेषु मध्ये यदपाये ध्रुवं कारकमित्यर्थो लभ्यये' इति ग्रन्थेन विशेषणाऽधिकारपक्षे निर्धारणसप्तम्यन्ततायां मूलतात्पर्यमवधारितम्, तदवलम्ब्य रत्नकृता 'वृत्तिमतेनिर्धारणसप्तम्यन्तस्ये' त्याद्युक्तमिति चेत्, उच्यते—अस्तिकारकशब्दो हेतुवाचको रूढोयौगिकश्चेति द्विविधः! तत्र — द्वितीयः, करोतिक्रियामितिव्युत्पत्त्या कर्तरिण्वु-

१ ननु — भाष्ये — 'अपक्रामन्ती' तिअपक्रमोक्त्यैवोक्तार्थलाभः, अपक्रमो निर्गमः, सच उपादानादेव कार्यस्य लोके तथैव दर्शनादितिचेत्, न — अनुपादानाभ्यामपि उपाध्यायाहिमवद्भ्या मध्यनगङ्गयोः- 'अपक्रामतितत्तस्मादध्ययनम्. अपक्रामन्तितास्तस्मा' दिति 'आख्यातोपयोगे, भुवः प्रभवः' इतिसूत्रभाष्ये निर्गमोक्ते रुक्तनियमाभावेन तेनोक्तार्थाऽलाभात्।

न्तः क्रियायां स्वतन्त्रकर्तेत्यर्थकः, ध्रुवादीनां प्रधानक्रियायां स्वातन्त्र्याभावेन तत्रकारकेति विशेषणाऽसंभव इति निमित्तमात्रार्थकं तदितिपर्यवसातव्यम्। एवं-कल्पनापेक्षया निमित्तार्थकस्यरूढस्य ग्रहणमित्युचितम् 'कारकं निमित्त' मिति चाऽनर्थान्तरम्। ततश्चात्र कारकशब्दो निमित्तपर्यायो विशेषणबोधकः। नन्वेवं— 'माणवकस्यपितरं पन्थानंपृच्छती' त्यादौ माणवकस्य पितृनिरूपितनिमित्तत्व-सत्त्वेन कर्मसंज्ञा स्यादिति चेत्, न — 'कस्यहेतोः क्रियाया' इति प्रश्नोत्त-राभ्यां क्रियाया निमित्तमेव विवक्ष्यते। क्रियातु प्रयोगसमवेतैव ग्राह्येत्याशयात्। प्रकृते माणवकस्य पृच्छिक्रियानिरूपितत्वाभावेन न कर्मत्वम्। 'ध्रुव' मित्यदौ कारक इति विशेषणबलात् क्रियालाभः, सा सामान्या, तत्राऽपायादिः क्रिया वि-शेषः अपायरूपायाः तस्याः क्रियायामभेदेनान्वयः, सामान्यविशेषयोरभेदस्य क्लृ-प्तत्वात् इति कृत्वैव 'अपाये यत्ध्रुवं तत्कारकमपादानसंज्ञ' मित्याद्युच्यते वृत्ति-कृता। अपायरूपक्रियायां यन्निमित्तं ध्रुवं तदपादानमिति तदर्थ इति मञ्जरीतात्प-र्यम्। एवंच — वृत्तिकृदादृत प्रथमान्तपाठपक्षस्योपपत्तिचिन्तार्थं मञ्जरी प्रावर्तत, नतु — निर्धारणसप्तम्यन्तपाठे वृत्तिकृतः तात्पर्यकल्पनाय। अत एव— 'किं दोष-प्रतिविधानव्यसनेन निमित्तपर्यायस्यैव ग्रहणमस्त्विति मन्यमान आह —' इति 'कारकशब्दश्चे' ति मूलमवतारितंतेन। एतेन—निर्धारणसप्तम्यन्तपाठे अस्तिदोष-संभवः, तत्परिहारायच प्रयतितव्यम्, ततोवरं प्रथमान्तपाठाश्रयणमितिध्वन्यते। भीत्रार्थानांभयहेतुः, (पा०, सू०, १-४-२५) जनिकर्तुः प्रकृति' (पा०सू० १-४-३०) रिति सूत्रयोः हेतुपदस्य, कारणपर्यायप्रकृतिपदस्य 'भयहेतुः, उत्पत्तिकारण' मित्यर्थेन तयोर्विशेषत्वात्, अनुवृत्तप्रथमान्तकारकपदार्थस्य क्रि-याहेतुरित्यस्य सामान्यत्वात्, 'द्रव्यंघट' इत्यादाविव सामानाधिकरण्यस्य संभ-वेन भयरूपक्रियाहेतुः, जनिरूपक्रियाहेतुरित्यर्थपर्यवसानेन न काचिदनुपपत्तिः। नचैवं — हेत्वादिपदप्रयोगवैयर्थ्यं शंक्यम् — कारकमिति संज्ञाविधिपक्षज्ञाप-कत्वेन चारितार्थ्यात्। निर्धारणसप्तम्यन्तकारकपदाधिकारपक्षेपि तस्य क्रिया-जनकत्वमित्यर्थेन सामान्यत्वात्, भयजनिहेतुत्वस्य विशेषत्वात्, 'द्रव्येषुघट' इत्यादि व्यवहारवत् क्रियाकारणेषु भयहेतुः, जनिकारणमिति व्यवहारोपि उप-

पन्न एवेति नाऽन्वयाऽसंभवदोषप्रसंगः । अत एवहि — निर्धारणसप्तमीपक्षे निर्धारणस्याऽनेकाश्रयत्वात्, निर्धारणसप्तम्याऽनुपदोक्तार्थलाभा' दिति अभिद्धानौ कैयटनागेशावपि निर्देशानुपपत्तिरेव दोष इति अमंसाताम्, नाऽन्वयाऽसंभवदोषमवोचताम् । उक्तरीत्या सामान्यविशेषसद्भावेन अन्वयासंभवः सुपरिहर इति तयोर्भावः ।

किंच — 'इतरथाहि 'कारके' ष्विति ब्रूयात्' इति 'कारक' इति सूत्रभाष्यपर्यालोचनायां सूत्रभाष्यकारयो र्निर्धारणसप्तम्यन्तत्वमनभिमतमितिप्रतीतेः 'कारक इति निर्धारणसप्तमी सामान्यापेक्षंचैकवचनं, विशेषणाधिकारपक्षे कारकेषुमध्य' इत्यादिमञ्जरीग्रन्थः सूत्रभाष्यकाराऽभिप्राया ऽनभिज्ञस्य पूर्वपक्षिणः कस्याचिदुक्तेरनुवाद इति भाति ।

किंच — 'कारक' इति सूत्रभाष्यतः कारकपदं करोति क्रियामिति व्युत्पत्त्या अन्वर्थसंज्ञापरम्, कर्तृकर्मादिव्यपदेशंकरोतीति व्युत्पत्त्या क्रियापरमिति पक्षद्वयमेव लभ्यते, नतु निर्धारणसप्तमीति तृतीयःपक्षः, सतु कस्यचिदौत्प्रेक्षिक एव । अत एव — दीक्षितादयः — भाष्यासिद्धपक्षद्वयमाश्रित्य 'ध्रुव' मित्यादि सूत्राणिद्वेधायोजयन्ति । तत्र कारकपदस्य क्रियापरत्वे — 'कारकाद्दत्तश्रुतयोराशिषि' इत्यादौ कारकपदस्य कारकाधिकारविहिताऽपादानादि संज्ञापरत्वं बोध्यम् । एवंच — भाष्याऽसंमते, ग्रन्थकृताऽप्यनुक्ते पक्षे केनाचित् तदीयत्वेन आत्मनावोत्प्रेक्षिते, दोषोद्भावनं सर्वथाऽयुक्तम् ।

अत्र कश्चित् — प्रकृतिपदस्य कारणमात्रपरत्वे, निमित्तपर्यायकारकपदानुवृत्तौ उभयोरेकार्थकत्वेन घटः कलशः, घटोवट इत्यादाविव शाब्दबुद्धिर्नस्यादिति, तन्न — उभयोः सामान्यविशेषभावस्य अनुपदमेव निरूपितत्वात् । शब्दस्य प्रकारतया भानात् भेद इति तु अपेशलम् । नच—कौस्तुभादौशाब्देशब्दभानं व्यवस्थापितमिति वाच्यम् — तत्र — दृढतरमानाभावात् ।

कारकपदस्य निरुक्तव्युत्पत्त्या क्रियापरत्वमाश्रित्य विषयसप्तमीत्वंचाङ्गीकृत्य जनकत्वंचाविषयत्वं क्रियाजनकं यध्रुवादि तदपादानादिसंज्ञमित्याद्यर्थस्य नवीनप्राचीनसंमतत्वात् 'जनिकर्तु' रित्यादावपि तदनुवृत्तौ तदर्थस्य क्रियायाः सामा-

न्यत्वात् जनेर्विशेषत्वात् जनिरूपा या क्रिया तद्धेतुरपादानमित्यर्थे ऽनुपपत्तिगन्धाभावेन प्रकृतिपदस्य कारणमात्रपरत्वेपि बाधकाभावः । कारकमिति संज्ञापक्षेपि अन्वर्थसंज्ञाबलात् लब्धस्य क्रियाजनकत्वस्य जनिकारणे उपरञ्जकतया संबन्ध इति न दोष इति । एवंच – 'मृत्पिण्डाद्घटोजायते, दण्डाद्घटोजायते, पुत्रात्प्रमोदोजायये ' इत्यादिसर्वमस्यैवोदाहरणमिति सर्वेष्टसिद्धिः । एतेन — 'पुत्रात्प्रमोदः, दण्डाद्घट' इत्यादौ अनुपादाने उपादानत्वस्य, अगुणेगुणत्वस्य वाऽऽरोपेण पञ्चमीं साधयन्तो नागेशादयो निरङ्कुशाएव।

अथवा – श्रुतौ सूत्रेच 'यत' इत्यत्र तृतीयान्तात्तसिः, येन ब्रह्मणा इमानिभूतानिजायन्त इति श्रुतियोजना । येन अस्यजगतो जन्मादि भवति तद्ब्रह्मेति सूत्रयोजना दण्डेनघटोजायते' इत्यादाविव येनेतिहेतौतृतीया । अतएव भगवता 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुना ऽनेन कौन्तेय जगाद्विपरिवर्तते' (गी० ९-१०) इति गीतायां सर्वाध्यक्षस्य सर्वस्वामिनो हरेः कटाक्षवीक्षणेन प्रेरिता प्रकृतिः चराऽचरजगन्ति सृजतीतिवदता ईश्वरस्य प्रेरकत्वेन निमित्तकारणतैव व्यवस्थापिता । **श्लोकार्थस्तु** – अध्यक्षेण सर्वस्वामिना मया ईक्षणेनप्रेरिताप्रकृतिः प्रधानं, सचराऽचरं जगत्, सूयते = जनयति, हेकौन्तेय जगत्, अनेनहेतुना = तत्तत्प्राणिकार्मानुगुणेनेक्षणेन हेतुना, विपरिवर्तते=पुनःपुनःजायते, विविधवस्तुरूपेणपरिणमिति (ते) इति । **अयंभावः**– लोके यथा राजाधीनो ऽमात्यादिःकदाचित् प्रभोरीक्षणमात्रेणेङ्गितेन मामयमस्मिन्कर्माणि प्रवर्तयतीति जानन् तत्कर्मकुरुते तथा इयमपि प्रकृति र्भगवदधीना सर्वस्वामिनोहरेरीक्षणमात्रेण प्रभोर्हरेरभिप्रायं जानती सृजति चराचरात्मकंजगदिति । नच — अचेतनस्यप्रधानस्यकथमीदृशंज्ञानमितिवाच्यम् — तदभिमानिदेवताविवक्षया तथोक्तेः ।

गदाधरोपि–व्युत्पत्तिवादे पञ्चमीकारकनिरूपणाऽवसरे 'मृत्पिण्डात् घटोजायते' इत्यादौ 'जनिकर्तुरितिअपादानत्वम्, तत्र प्रकृतित्वं न विकारित्वं प्रकृतिविकृतिभावाऽभावेपि 'प्राक्केकयीतो भरत स्ततो ऽभूत्, वायोर्जात' इत्यादौ पञ्चमीदर्शनात्....तस्मात्करणत्वमेव प्रकृतित्वं 'दण्डाद्घटोजायत' इत्यादि-

प्रयोगाइष्यन्नएव' इत्यादिग्रन्थेन जनिकर्तुःप्रकृति' रितिसूत्रे प्रकृतिपदं कारण-परमित्यभिप्रयन् द्रव्याद्यचेतनोपादानकारणत्वं ब्रह्मणो न संभवतिइति 'यतोद्रव्यं गुणाः कर्मेत्यादौ पञ्चम्युपपत्तिः प्रकृतिपदस्य कारणमात्रपरत्वएव भवतीत्यभिधत्ते।

इदंबोध्यम् — ब्रह्मजगदुपादानमितिवदन्तः त्रिचतुराएव, तत्रकेचिद्वैया-करणाः सूत्रभाष्यकृदन्ये शब्दब्रह्मजगतोविवर्त्तोपादानं नतु परिणाम्युपादानं यतो-ब्रह्मनिर्विकारम्। 'अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम्। विवर्तते ऽर्थभावेन प्रक्रिया जगतो यतः' इतिहर्युक्तेश्चेतिवदन्ति। शब्दब्रह्मणि सर्वमिदंजगत् आ-रोपितम्, (अध्यस्तम्) इति तेषामाशयः। अत्रमते 'यतोवे' तिश्रुतौ, यत-इतिसप्तम्यन्तात्सार्वविभक्तिकस्तसिः यस्मिन्नित्यर्थकमितियुक्तम्, नतु पंचम्यन्ता-त्तसिरिति! नच — 'जायन्त' इतिश्रवणात्पञ्चमीत्युच्यतइतिवाच्यम् – 'तत्र-जात' (पा०सू० ४-३-२५) इति सप्तमीसमर्थात् जातइत्यर्थे अणादिप्रत्य-यविधानेन, 'सप्तम्यांजनेर्ड' (पा० सू० ३-२-९८) इति सप्तम्यन्तेउपपदे जनेर्डप्रत्ययविधानेन, मन्दुरायांजात इति विग्रहवाक्यप्रयोगेणच, जनिधातुसम-भिव्याहारे सप्तम्याअपि युक्तत्वात्, शब्दब्रह्मण आरोपाऽधिष्ठानतावादिनावैया-करणेन तत्र अधिष्ठानत्वमस्तीतिबोधनाय सप्तम्यन्तत्वस्यैवाऽऽश्रयणीयत्वात्, विवक्षितार्थबोधकविभक्त्यन्तशब्दप्रयोगस्यैव न्याय्यत्वाच्च। अन्यथा लक्षणादिक-माश्रयणीयंभवेत्। यद्यपि— अत्रमते किंपरावाचः ब्रह्मत्वम्, उत मध्यमावाच इति द्वैतम्, तथापि — मञ्जूषातः पराख्यवाचएवतत्त्वमितिनिश्चेतव्यम्।

अन्येतु — शब्दातिरिक्तं ब्रह्म जगदुपादानकारणं मन्यन्ते। शिष्टंसर्वं-पूर्वमतवत्। अत्रापिपञ्चमीनिर्देश श्चिन्त्यप्रयोजनः, सप्तमीनिर्देशो न्याय्यइतिभाति। अस्मिन्मतद्वये जगदुपादानमायाऽविद्याधिष्ठानत्वात्ब्रह्मणोजगदुपादानत्वम्।

परेतु — विकारात्मकप्रकृतिशरीरकतया, प्रकृतिनियामकत्वेनवा ब्रह्मज-गदुपादानमितिब्रुवते। अत्रमते — स्वशरीरप्रधानोपादानकत्वात्, स्वायत्तप्रधा-नोपादानकत्वाद्वा जगतःब्रह्मोपादानकत्वम्। श्रुतिसूत्रस्थस्य 'यत' इत्यस्य ब्रह्माधिष्ठि-

---

१. क्वचित्परावाचः, क्वचित्स्फोरस्यतथाव्यवहारात्संदेहः।

२. तत्र एकस्यैवस्फोटस्यशब्दब्रह्मरूपस्य... 'क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्। प्रकृतेर्बिन्दरूपिण्याः शब्दब्रह्माऽभवत्परे' इत्युक्तेः, स्फोटस्य=पराख्यवाचइतितद्व्याख्या नाच्च।

तात् प्रधानात्, प्रधानसरीरकात् ब्रह्मणइतिवाऽर्थो वाच्य इति भाति । इतरेतु— प्रधानमेव पुरुषसंनिधानेन जगदात्मना परिणमति (ते) इति वदन्ति । अपरेतु— ईश्वरप्रेरितंप्रधानं जगदात्मना परिणमति (ते) अतस्तदेवोपादानकारणमिति अहुः । केचित्तु— परमाणवः व्द्यणुकादिरूपेण जगत्कारणमिति मन्यन्ते ।

येतु मन्यन्ते ब्रह्म जगत उपादानकारणमिति ते सर्वे ब्रह्मणः परिणामं ना ऽङ्गीकुर्वन्ति ; अतस्तेषांमते ब्रह्मण उपादनत्वेक्तेः किं प्रयोजनमिति विमर्शनीयम् । एतेन — ब्रह्मोपादानकत्वेन जगतः तस्य तत्कार्यत्वात् ब्रह्मकार्यस्यच ब्रह्मातिरेकेणाऽभावात् ( असत्यत्वं ) मिथ्यात्वं 'तदनन्यत्व' मितिसूत्रात् । ततश्चव्यासस्यापिजगन्मिथ्यात्वे तात्पर्यमिति यदुक्तं मञ्जूषायां प्रथमपरिच्छेदे तत्परास्तम् । कारणाऽनन्यत्वबुद्धेः परिणामिकारणविषयएव संभवात् । ब्रह्मणस्तु अपरिणामित्वात् । वासुदेवस्य सर्वस्मादुत्तमत्वं स्वीकुर्वतां श्रीव्यासपाणिनिपतञ्जलीनां जगतो ब्रह्मोपादानकारणकत्वस्याऽनभिमतत्वेन ब्रह्मानन्यत्वमपि जगतो न संमतमित्यवगमात् । 'तदनन्यत्व' मितिसूत्रतात्पर्यंतुतदधीनत्वादिना तदनन्यत्वोक्तिरिति उपरिष्टात् निरूपयिष्यामः निरूपितंच किंचित्पूर्वमपि ।

एवंच — जगतोब्रह्मोपादानकारणकत्वं भाक्तमेवेति ।

सृष्टिवाक्यानि जगतो निमित्तं कारणं हरिः ।<br>
इति प्राहु स्तयो स्तस्मा न्नैव सिध्ये दनन्यता ॥

---

## ( ९ - अंशत्वोक्तिविरोधोद्धारः )

ननु — यदुक्तं वासुदेवो जगतोनिमित्तकारणंनोपादानम्, अतस्तस्यसर्वस्माद्भेदइति, नतद्युक्तम् ; 'ममैवांऽशो जीवलोके जीवभूतः सनातनः । मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानिकर्षति' (गी. १५-८) इतिजीवस्य तदंशत्वोक्तिविरोधात् । अंशांशिनोरभेदस्यैव दर्शनात् । सतिहि तयोर्भेदेंअंशत्वमनुपपन्नमिति, उच्यते — अंशोहि द्विविधः — भिन्नोऽभिन्नश्चेति । तत्र भिन्नांशःस्वांशसदृशः, सच जीवः, अभिन्नांशस्तु — अन्तर्यामिरूपं रामकृष्णाद्यवतारूपंच । ततश्च — 'ममैवांशः = मदंशसदृशः, नतु — मत्स्वरूपभूतः, शिष्टंस्पष्टमिति । सादृश्यंच

स्वायत्तत्वेन, यथा — स्वांशःस्वायत्तः, तथा — जीवःस्वायत्त इतिभावः । अथवा — ममैवांशः = यः, 'विष्टभ्याहमिदंकृत्स्न' मित्यत्र जगद्धारकत्वेन उक्तोंऽशः, जीवः = सः = तदधीनः न स्वतन्त्र इत्यर्थः । योयदधीनः स तच्छब्देन व्यददिश्यते 'यथा राजाराष्ट्र' मितिभावः । अतएव — सर्वशास्त्रार्थसारसंग्रहे गीतायां पञ्चपशेऽध्याये 'उत्तमः पुरुष स्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्ययमीश्वरः' (गी० १५ - १८) इतिक्षराक्षरपदवाच्यात् सर्वस्मात् प्रपञ्चा द्वासुदेवस्योत्तमत्वाद्यभिधानं संगच्छते । यदि जीवादीश्वरस्य न भेदः तर्हि तस्योक्तं सर्वोत्तमत्वं कथमुपपद्येत । अतोंऽशत्वोक्ति र्न भेदविरोधिनी । एतेन — गीतायामुपक्रमोपसंहारयो र्निरूपितो भेदो न वास्तवः अपितु औपाधिक इतिकस्यचिदुक्तिः परास्ता । सर्वशास्त्रर्थसंग्रहे (१५) अध्याये भेदोक्तेः । नच — अयमपिभेद औपाधिकइतिवाच्यम् — शास्त्रर्थसारसंग्रहेवास्तवार्थकथनस्यैव युक्तत्वेन एवंकल्पनायोगात् ।

अन्येतु — जीवशब्दस्य तच्छरीरिकपरमात्मार्थकत्वेन विशिष्टैकदेशत्वेन जीवस्य परमात्मांशत्वव्यवहारः, अथापि — स्वरूपस्वभावभेदात् जीवः परमपुरुषाद्भिन्नएवेति वदन्ति । मञ्जूषाकृतोमते ईश्वरान्यचेतनस्याभावेन ईश्वरस्यच निरंशत्वेन उपाधिसंभन्धस्य वक्तुमशक्यतया शास्त्रेषु जीवस्योक्तमंशत्वमनुपपन्नमेव स्यत् । अत्र — 'सनातन' इतिविशेषणेन जीवस्य तत्त्वमनादिइति श्रीव्यासमहर्षेराशयोऽवगम्यते । पाणिनातुजीवानादित्वं न निषिद्धमिति तस्यापितदिष्टमेव। ततश्च — तदुभयाऽसंमत मुपाधिसंबन्धस्य जीवत्वव्यवहारहेतुत्वनिरूपणमिति ।

इदमत्रावधेयम्— न केनापि जीवस्येश्वरमुख्यांशत्वं न शक्यानिरूपणम् । ईश्वरान्यचेतनं न, ईश्वरोनिरंशइतिवादीतु ईश्वरस्योपाधिसंबन्धेनां ऽशंपरिकल्प्य, तस्य जीवत्वं, तस्येश्वरांशत्वंच, निरूपयितुनप्रभवति । एवं युक्त्यसहप्रमेयकल्पनापेक्षया स्वरूपतो भिन्नस्य जीवस्य ईश्वराधीनत्वादिना तदंशत्वकल्पनं वरमिति ।

जीवस्यांऽशत्ववचनं नात्माऽभेदस्य साधकम् ।
अतः श्रीवासुदेवस्य सर्वोत्कर्षे न बाधकम् ॥

( १० गीतावचन विरोधोद्धारः )

ननु—वासुदेवस्यसर्वोत्तमत्वं भेदाधीनम् सच भेदो गीतायां प्रतिषिद्धः, यतः— 'सयोगी ब्रह्मनिर्वाणं ब्रह्मभूतो ऽधिगच्छति (५-२४) उपैति शान्तरजसं ब्रह्मभूत मकल्मषम् (६-२७) ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति' (१८-५४) इत्यत्र 'ब्रह्मभूत' इति, 'स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते (१४ २६) विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते (१८-५३) इत्यत्र 'ब्रह्मभूयाय' इति। यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः (८-५) मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते (१३-१८) गुणेभ्यश्च परं वेत्ति मद्भावं सो ऽधिगच्छति' (१४-१९) इत्यत्र मद्भावमिति च प्राहभगवान् तेषांच ब्रह्मत्वंप्राप्तः, ब्रह्मत्वाय, मत्स्वरूपमित्यर्थेन ब्रह्मभावोजीवानामस्तीति तात्पर्यमिति चेत्, अत्र ब्रूमः — 'भूसत्तायां; भूप्राप्तौ' इति धातुपाठात् ब्रह्मप्राप्तः, ब्रह्मभूयायेत्यनयोः ब्रह्मप्राप्तिमान्, ब्रह्मप्राप्तये, तत्रस्थित्यै इत्यर्थः। मद्भावम्, मद्भावायेत्यस्य मयिसत्ताम्, मयिसत्तायै इत्यर्थः। 'मद्भावमधिगच्छतीत्येतत् मोक्षप्राप्तिरिति 'गुणानेतानतीत्यत्रीन् देही देहसमुद्भवान्। जन्ममृत्युजरादुःखै र्विमुक्तो ऽमृत मश्नुते' (१४-२०) इत्युत्तरश्लोकेन भगवतेव व्याख्यातम्, अतः — एतेषां स्वरूपाऽभेदे तात्पर्यकल्पनमयुक्तम्।

ब्रह्मणिस्थितिः; ब्रह्मैवसर्वमिति निश्चयवान्, ब्रह्मप्राप्तः, ब्रह्मभवनाय (मोक्षाय) मद्भावाय इत्यस्यमोक्षायेति (शं भा.) ब्रह्मभूतः — असंकुचित ज्ञानादिस्वस्वरूपेणास्थितिः, ब्रह्मसाम्याय, असंसारित्वाय, एवमेव मद्भावपदस्य, एकत्रतु— जननादिदुःखमुक्तत्वम्' इति (रा० भा०) 'ब्रह्मभूतइत्यस्य सर्वत्र ब्रह्मणिस्थितमनस्कः, प्रीतिविषयत्वाय, तन्मनस्कत्वाय, निर्दुःखनिरतिशयानन्दात्मिकां स्थितिम्, मन्मनस्कत्वम्' इति (पू०. भा०.) व्याख्यातम्। अतोनैषांवचनानामभेदेतात्पर्यम्। एवंच — वासुदेवस्य सर्वोत्तमत्वे न गीतावचनविरोधः। भगवदुपासनायाः तन्मनस्कत्वंच प्रधानमङ्गमिति 'मन्मना भव मद्भक्तः, (गी० ९-३४, १८-६५) अनन्याश्चिन्तयन्तोमाम्। (गी०. ९-२२) इत्यादिना वारंवार शिक्षणात् बोध्यम्। अत एषां गीतावचनानां न भवदुक्तार्थे तात्पर्यम्, गीताचार्यस्य, वासुदेवस्य सर्वोत्तमत्वमभिप्रयतः पाणिनेश्चेति।

ननु – संसारिणो जीवस्य विभिन्नधर्मवत्त्वेन भेदेपि मुक्तानां समस्तपुण्य-पापविधुरतया शुद्धत्वात् विरुद्धधर्मवत्त्वाभावेन अभेदोयुज्यत इति चेत् , शृणु– 'परंभूयः प्रवक्ष्यामि ज्ञानानांज्ञानमुत्तमम्। यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः (गी. १४-१) इदं ज्ञानमुपाश्रित्य ममसाधर्म्यमागताः। सर्गेपिनोपजायन्ते प्रलये न व्यथन्तिचे' (१४-२) ति द्वाभ्यां 'ममयोनिर्महत् ब्रह्म' (गी. १४-३) त्यादिना वक्ष्यमाणज्ञानप्रशंसापूर्वं तस्य फलं सदृष्टान्तमभिधाय, तत्र मुक्तानां परमात्मना ऐक्यभ्रमवारणाय तेषां भगवत्साधर्म्यमेव प्राह भगवान्। साधर्म्यं च समता, साच जननमरणादिदोषराहित्येन, जगत्कारणत्वाद्यतिरिक्ताऽपहतपाप्मत्वादिना, नित्यसुखानुभवितृत्वेन च बोध्या। ब्रह्ममीमांसायां च मुक्तानां 'जगद्व्यापार वर्ज' (ब्र.सू.४ ४-१७) मिति जगत्कारणत्वं न, 'भोगमात्रे' ति सूत्रेण नित्यसुखानुभवमात्र मस्ति, 'मुक्तोपसृप्ये' (ब्र०. सू०. १-३-२) त्यनेन भगवत्प्राप्तिमत्त्वमास्तीत्याह सूत्रकृत्। अस्त्यत्रार्थे – 'यदापश्यःपश्यतेरुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदाविद्वान् पुण्यपापेविधूय निरञ्जनः परमंसाम्यमुपैति' (मु. ५-३) इति श्रुत्यनुग्रहोपि। पश्यः=द्रष्टा (उपासकः) निरञ्जनः=शुद्धः, साम्यम्= उपास्येनपरमात्मना साम्यम्। शिष्टं स्पष्टम्। ततश्च – मुक्तावपि भेद एवेति श्रुतिसूत्रस्मृतिसिद्धं तत्त्वम्।

**ब्रह्मभूतेत्यादि गीतावाक्यादैक्यं प्रतीयते।**
**इत्याक्षेपो निराकारि गीताश्रुतिवचोबलात् ॥**

---

## ( ११ – श्रुतिविरोधोद्धारः )

(१) ननु– 'तत्त्वमसी' ति श्रुतिरखण्डार्थं बोधयन्ती ऐक्ये प्रमाणमिति नागेशाशय इति चेत् , उच्यते – सातुश्रुतिः नात्मैक्यंब्रूते। तथाहि – 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा. ६-४-८) इति श्रूयते। सर्वस्रष्टृत्वात् सर्वस्वामित्वेन ईश्वरस्य सर्वं तन्नियम्यमिति बोधनाय प्रवृत्तमिदं वाक्यम्– अस्यायमर्शः – यः = 'सदेवसौम्य, सन्मूला'

---

१. मुक्तानां न जगत्सर्जनादि व्यापार इति सूत्रार्थः। २. निर्दुःखानन्दानुभवमात्रं समर्मिति एतदर्थः। २. परात्परं पुरुषमुपैति दिव्य ' (मु॰ ३ – २ – ८) मित्यादि श्रुतौ मुक्तानां ब्रह्मप्राप्ति श्रवणादिति सूत्रार्थः।

इत्यादौ सर्वकर्तृत्वेन पूर्वप्रसक्तः, स एषः = सच्छब्दवाच्यः, अणिमा = सूक्ष्मधियाज्ञेयत्वेन अणिमपदवाच्यः, तत्सत्यम्=सच्छब्दवाच्यं वस्तु सत्यम्, (वास्तवम्) सः = सच्छब्दवाच्यः, आत्मा = स्वामी, अत एव – इदं सर्वम् = समस्तं जगत्, ऐतदात्म्यम्= तत्स्वामिकम्, अतस्तदधीनम्। 'योयत्स्वामिकः स तदधीन' इति न्यायात्। अतः– त्वम् = जगदन्तःपाती भवानपि, तदसि, तदधीनोऽसि, 'राजाराष्ट्र' मितिवत् सामानाधिकरण्येन निर्देशः' तदधीनत्वबोधनंच अनूचानमानीत्यादिना प्राप्तसर्वज्ञत्वस्वतन्त्रत्वाद्यभिमानत्यागाय। अस्त्यस्यमहानभिमान इति एतद्विद्योपोद्घातवाक्येन 'सर्वान् वेदानधीत्य महामना'इत्यादिना ज्ञायते। सकृदुपदेशेन न त्यजेदभिमानमिति असकृदुपदिष्टम्। ततश्च नेदं वाक्यमात्मैक्यं बोधयतीति। एतच्च मुक्तौ संसारेच समम्। अथवा —'अतस्मिन् स इत्येतत् ताद्धर्म्यादिने' ति पूर्वोदाहृत 'पुंयोगा' दिति सूत्रमहाभाष्येण सिंहो-माणवक इत्यादाविव तत्सदृशोऽसीत्यर्थः। सादृश्य मपहतपाप्मत्वादिना, चित्त्वेनवा। अपहतपाप्मत्वं च 'यदापश्यः पश्यत' इत्यादि प्रमाणप्रमितं ज्ञानिनाम्, चित्त्वंतु सर्वेषामनुभवसिद्धम्।

अन्येतु – तत्, तु, अमसि, इति पदं विभज्य एवमर्थं वर्णयन्ति — अमधातुर्गत्यर्थः, 'अमगत्या' दिष्विति भ्वादौपाठात्। तुरेवार्थे, अमसीति मध्यमपुरुषप्रयोगात् त्वमितिलभ्यते। सः='सदेवे' त्यादिना प्रतिपादितजगत्कर्तृत्वादिगुणविशिष्टः, आत्मा = स्वामी सर्वाध्यक्षः, स इति पुंलिंगनिर्देश आत्मेतिविधेयानुरोधेन। हेश्वेतकेतो, त्वं, तत्= सर्वस्वामिनमात्मानम्, अमसितु =प्राप्नोष्येव, यद्वा — तत्तु = पूर्वोक्तगुणपूर्णमात्मानमेव अमसि = प्राप्नोषि। तदिति

---

१. 'यच्चाप्नोति यदादत्तेयच्चात्तिविषयानिति। यच्चास्यसन्ततोभावस्तस्मादात्मेति कथ्यते'इति आत्मशब्दनिर्वचनात्, आप्नोतेर्मनिनिपस्यतकारे आङ्पूर्वकददातेर्मनिनि आकारस्यलोपेदस्यतकारे आङ्पूर्वकादत्तेर्मनिनि दस्यतकारे आङ्पूर्वकादस्तेर्मनिनि सस्यतकारे, आत्मशब्दनिष्पत्तेः सर्वव्याप्त्यादिमत्त्वमात्मत्वमिति तदर्थलाभः तत्त्वंच सर्वस्वामिन एव संभवातीति, स्वामीत्यर्थ उक्तः। केचित्तु – धारणपोषणार्थकधाञ : आङ्पूर्वात् मनिनि आकारस्यलोपेधस्यतत्त्वेच धारणपोषणकर्तेत्यर्थलाभेन स्वामीति तदर्थः सर्वपोषणादेः सर्वस्वामिन एव संभवदिति आहुः सर्वत्र पृषोदरादित्वात्कार्यविशेषः। २. स्वार्थेष्यञ्।

लुप्तद्वितीयान्तम्, अथवा– नपुंसकं ब्रह्मेत्यर्थकम्। 'आध्यानाये'(३-३-१५) ति सूत्रेण गुणनिरूपणस्योपासनार्थतानिर्धारणात्, अत्रसद्विद्यायां निरूपितगुणस्य जगत्कर्तृत्वादेश्च तदर्थतया यदि परमात्मानं जगत्कर्तृत्वादिनोपास्ते भवान् तदा उपास्यं भगवन्तमेव प्राप्नोति, उपासनाया भगवत्प्राप्तिरेवफलं नतु-तदैक्यम्! उक्तं हि भगवतागीतायां 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसिसत्यंते प्रतिजानेप्रियोऽसि मे' (गी० १८-६५) इति उपासनया भगवत्प्राप्तिरिति।

शङ्करभाष्ये – तत्त्वमिति पदं विभज्य सः = 'सदेवे' त्यादिवाक्यप्रतिपादितगुणविशिष्टः, आत्मा, तत्त्वम् = वास्तवं वस्त्विति योजनान्तरं दर्शितम्।

केचित्तु – श्वेतकेतोरेकस्य रामकृष्णादिवदवतारस्वरूपत्वंज्ञात्वा अभेदोक्तिरितिवक्तुं शक्यमिति नानेन सर्वेषां जीवानां परमात्मैक्यं सिध्यतीति वदन्ति।

किंच — तत्र नवकृत्व उपदिष्टेषु श्रुतानां शकुनिसूत्रादिदृष्टान्तवाक्यानां भेदपरत्वेन दार्ष्टान्तिक 'तत्त्वमसी' ति वाक्यस्य भेदपरत्वेन योजनैवोचितेति जीव ईश्वरत्वबुद्धिर्नकार्येति विभाव्यम्; दृष्टान्तवाक्यानां भेदपरत्वमन्यत्रानिरूपितम्।

रङ्गरामानुजभाष्येतु — 'तत्त्वमसी' त्यस्यायमर्थः – त्वं पदं मुख्यार्थानुपपत्त्या अन्तर्यामिपरम्, तत्पदं सच्छब्दितात्मपरामर्शकम्। हे अन्तर्यामिन् सच्छब्दितात्मासीति वाक्यार्थः। त्वंपदस्याऽपर्यवसानवृत्त्या अन्तर्यामिपरत्वम्। ननु– त्वं पदस्य सर्वत्रसंबोध्यमानार्थपरामर्शकत्वस्यैव न्याय्यत्वेन प्रकृते श्वेतकेतोः संबोध्यत्वात् तत्परामर्शंविना अन्तर्यामिपरत्वकल्पनं न युक्तमिति चेत्, देवदत्तंसंबोध्य तत्पुत्राऽभिप्रायेण 'देवदत्त त्वमेवं कृतवानसो' ति वत् उपपत्तिरिति। इयान्विशेषः–दृष्टान्ते मुख्यार्थानुपपत्त्या देवदत्तपदस्य तत्पुत्रे लक्षणा त्वंपदस्यान्तर्यामिणिलक्षणे' ति इति श्रुतिरेषा व्याख्याता।

एतेन – 'तत्त्वमस्यादिवाक्यस्य अखण्डार्थेन शुद्धेनापि ब्रह्मणा ऽऽध्यासिकं तादात्म्य' (मू०. ४ - २५) मिति मंजूषोक्तं परास्तम्, तेन – भगवत्स्वरूपयोरेवैक्यबोधनात् तदैक्यस्य वास्तवत्वेन आध्यासिकत्वकथन-

---

१. उपनिषदर्थविचारग्रन्थे।

स्यायुक्तत्वात् , संबोध्यमानश्वेतकेतुपरत्वेपि तदधीनत्वतत्सादृश्यादिरेव श्वेतकेतौ बोध्यत इति तादात्म्यस्यैवाऽप्रसक्तेः । वासुदेवस्य सर्वोत्तमत्वादिकमभिप्रयतः पाणिनेराचार्यस्य श्वेतकेतूपलक्षितजीवेषु भगवत्तादात्म्यस्यानभिमतत्वाच्च ।

(२) ननु– 'गताः कलाः पञ्चदशप्रतिष्ठा देवाश्चसर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति (मु० ६-७) यथानद्यः स्यन्दमानाः समुद्रे ऽस्तंगच्छन्ति नामरूपेविहाय । तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्यम् (६-८) सयोहवैतत्परमं ब्रह्मवेद ब्रह्मैव भवति । नाऽस्याऽब्रह्मवित्कुले भवति ' ( मु०. ६ - ९ ) इत्याथर्वणे उपसंहारे ब्रह्मविदो ब्रह्मणासह एकीभावस्य, ब्रह्मभवनस्यच प्रतिपादनात् मुक्तौजीवब्रह्मणोरैक्यमेव, अत्र प्रतिपादित एकीभावो ब्रह्मभावश्च ब्रह्मत्वमेव । अन्यथा – अब्रह्मणो ब्रह्मभावायोगात् असंभावितार्थप्रतिपादिकेयं श्रुतिरप्रमाणं भवेत् । एतेन – मुक्तेःपूर्वमपि अस्तिजीवस्य ब्रह्मत्वं दोषवशात्तु अनभिव्यक्तं तत्त्वज्ञानेन दोषनिवृत्तावभिव्यज्यते, इति तादात्म्यं स्वतोवर्तते, अतो भेदस्तन्निबन्धनव्यवहारश्चौपाधिक इतियुक्तम् । एवंच — गीतायां निरूपितोभेदोऽवास्तवः, 'वासुदेवः सर्व ' मित्युक्तोऽभेदस्तु वास्तव इति ।

अत्रवदन्ति — 'द्वासुपर्णा, यदापश्यः ' इत्यादि श्रुतीनां भेदपराणां बहूनामुपलम्भात् गीतायां निरूपितो भेदोवास्तवः, तत्रनिरूपितोऽभेदोऽवास्तवइत्यपिवक्तुं शक्यम् । किंच — ' वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगा यतयःशुद्धसत्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ' (मु०. ६ - ६ ) इति पूर्वमन्त्रे — अधिकारिणो ब्रह्ममीमांसाशास्त्राभ्यासात्, वेदतदनुसारिसर्वशास्त्रार्थ निश्चयवन्तः सर्वाणिकर्माणि भगवते समर्पयन्तः, सत्यलोकं गत्वा तत्रचिरकालमुषित्वा तल्लोकाधिपतेः चतुर्मुखादुपदेशं प्राप्य, विशेषेणभगवत्स्वरूपं विज्ञाय, तदायुषोऽन्ते मुक्ता भवन्तीति श्रुतम् ।

सप्तमेन अनेनमन्त्रेण तत्प्रकारः प्रदर्श्यते । षोडशकलः पुरुषः कलानां पञ्चदशानां निवृत्तौ मुक्तोभवति,तत्र कलानाम जीवस्य शरीरधारणहेतुः प्राणादयः षोडशपदार्थाः । तेच —' सप्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापःपृथिवी-

इन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपोमन्त्राः कर्म लोका लोकेषुनामचे' (ष.प्र. ६-२) ति षट्प्रश्नोक्ताज्ञेयाः । तत्र — प्राणः = श्वासोच्छ्वासः, श्रद्धा = आस्तिक्यबुद्धिः, अन्नम् = खाद्यं वस्तु, वीर्यं = शरीरोत्पत्तिहेतुभूतं वस्तु, तपः = ज्ञानसाधनं व्रतम्, मन्त्राः=ऋगादिः, कर्म=पुण्याऽपुण्यरूपं, लोकः गोलकम् इन्द्रियाश्रयः, नाम = देवदत्तादि, प्रतिष्ठाः = शरीरधारिकाः, कलाः =प्राणादयः, तदभिमानिदेवाश्च, कर्माणि= पुण्यानि, तदभिमानीच, गताः, सर्वेदेवाः कलाभिमानिभ्य इतरेसर्वे, प्रतिदेवतासुप्रतिबिम्बभूतासुप्रजासु (जीवेषु) स्थिताः, विज्ञानमय आत्मा = जीवः सर्वेच = देवाश्च (कलाभिमानिनोऽन्येच) अव्यये = अक्षरे, परे = परमात्मनि एकीभवन्ति=यथा – अत्रकर्मणि सर्वेऽमात्यादय एकीभवन्ती' त्यादौ एकमनस्का भवन्तीत्यर्थः, यथावा—गावो गोष्ठ एकीभवन्तीत्यादौ एकस्थानगता भवन्तीत्यर्थः, तथापरमात्मविषये एकमनस्काभवन्ति, नविप्रतिपद्यन्ते इत्यर्थः । ( परमात्मा अध्यक्षः वयंसर्वे तद्दासा इति दृढमनस्काभवन्ति ) परमात्मना निर्दिष्टं कर्म एकमनस्काः सन्तः कुर्वन्तीत्यर्थोवा, परमात्मनासह एकस्थानस्थिताभवन्तीत्यर्थोवा, एवमर्थ एव च्विप्रत्यय उपपद्यते । अभूततद्भावेहि 'कृभ्वस्तियोगे संपद्यकर्तरिच्विः' ( पा० सू० ५–४–५० ) इति च्विर्विधीयते, तत्र—'अभूततद्भाव 'इति कात्यायनवचनम् । यद्वस्तु येन धर्मेणपूर्वमनुत्पन्नम्, तस्य वस्तुनः तेन धर्मेणोत्पत्तौ विवक्षितायामिति तदर्थः । ततश्च — सामानाधिकरण्यसंबन्धेन पूर्वकालावच्छिन्नस्वाभावविशिष्टधर्मवत्त्वेनोत्पत्स्यमानार्थवाचकात् स्वार्थे च्विप्रत्ययो भवतीति सूत्रार्थः ! एकमनस्कत्वादेः पूर्वमभावेन ज्ञानेनाज्ञाननिवृत्तौ वासुदेवप्रसादात् मुक्तौप्राप्तायां तद्भवतीति । एकशब्दस्या ऽविद्यमानैकमनस्कत्वादिरूपधर्मविशिष्टार्थवाचकत्वेन च्विर्भवतीति शक्यतेवक्तुं भेदवादिभिः पाणिनीयैः । एकत्ववादिनां पाणीनीयत्वेनात्मानंमन्यमानानांतु नैवं वक्तुं शक्यम् । तेषांमते ऐक्यस्य ब्रह्मत्वस्य च सदाविद्यमानत्वेन तस्य तदभावस्य च निरुक्तसामानाधिकरण्यस्य दुर्निरूपत्वात् । न च – एकत्वादेस्सदातनत्वेऽपि तदभिव्यक्तेः पूर्वमभावेन तामादायच्विः सुवचेतिवाच्यम् । यद्धर्मावच्छिन्नत्वेन वस्तुन उत्पात्तिर्विवक्ष्यते तद्रूपेण तद्धर्मोपस्थापकप्रातिपदिकात् च्विरितिसूत्रार्थात् ।

अत एव शुक्लीकरोतीत्यर्थे एकीकरोतीति न प्रयोगः । प्रकृते च एकशब्दस्य अभिव्यक्तित्वेनाभिव्यक्तिबोधकत्वाभावेन च्वेर्वक्तुमशक्यत्वात् ।

न च – 'ब्रह्मीभवतीत्यत्र मञ्जूषोद्योतयोश्छान्दसत्वात् च्वि' रित्युक्तेः तत्रेवाऽत्रापि छान्दसः स्वार्थिकःच्विरिति वाच्यम् – उक्तदिशा सूत्रेणैवोपपत्तौ छान्दसत्वादिकल्पनायोगात् । ब्रह्मीभवतीति 'कृभ्वस्तीति' ति सूत्रकौमुदीप्रतीकमादाय 'अब्रभवनकर्तृत्वं प्रकृतिभूतस्याऽब्रह्मण एव विकाराभेदेनबोध्य' मित्युक्तं शेखरे, मञ्जूषादौ स्वार्थेच्विरिति । अत्रकःसिद्धान्त इति चिन्त्यम् । न च – कौमुद्याशयवर्णनपरःशेखरः, मञ्जूषादितु स्वसिद्धान्तावेदकमिति वाच्यम्–शेखरे 'वस्तुतः, परेतुवे' त्य इत्युपक्रम्य छान्दसत्वात्च्विरित्यन्यत्रनिरूपित' मित्याद्यनुक्तेः तथाकल्पनेमानाभावात् । अविरोधसंपादनाय तथाकल्प्यत इति चेत् विनिगमनाविरहेण मञ्जूषाद्युक्तिरेव पराशयवर्णनपरेतिवक्तुं शक्यम्—किंच – अनारोपिताऽतथाभूते आरोपिततद्भावसंपत्तावेव च्विः अत एव ईश्वरप्रसादादिना ऽमहति मुख्यमहत्त्वोत्पत्तौ नच्वि' रिति शेखरोक्तदिशा अत्राप्यैक्यस्यारोपोवाच्यः, आरोपितस्यच तन्मते मिथ्यात्वेन वास्तवमैक्यं न सिध्येत् । किंच — स्वार्थेच्विप्रत्ययाङ्गीकारेपि ब्रह्मणो ब्रह्मत्वमस्तीत्यर्थस्यैवलाभेन जीवस्य ब्रह्मभावप्राप्तिरितीष्टाऽसिद्धिः ।

अष्टमेमन्त्रे 'पुरुषमुपैतिदिव्य' मिति दिव्यपुरुषप्राप्तेरेवोक्तत्वेन 'एकीभवन्ती' त्यस्य स्वरूपैक्यपरतया व्याख्यानं मन्दम् । नवमे तदुत्तरमन्त्रे 'ब्रह्मैवभवती' ति वाक्येनापि 'ब्रह्मप्राप्तिरेवोच्यते'। न च — जीवस्य ब्रह्मभाव इति तदर्थ इति वाच्यम्—तत्र भवतीत्यस्य प्राप्नोतीत्यर्थ इति तत्रैव शाङ्करभाष्योक्तेः । एवंच — पूर्वमन्त्रे पुरुषपदं ब्रह्मपरमिति बोधयित्वा पूर्वमन्त्रार्थएव नवमेन मन्त्रेण विवृत इति ज्ञायते । 'गुहाग्रन्थिभ्योविमुक्तोऽमृतोभवती' ति नवममन्त्रान्तिमवाक्योक्तममृतत्वेन भवनमपि अत्रैवार्थेऽनुकूलम् । मुक्तोभवतीतितदर्थः । अत एवच गीतायाम्— मामुपेत्यपुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमांगताः' (८-१५) आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्यतुकौन्तेय पुनर्जन्म न विद्यत' (८-१६) 'मामेवैष्यसि'

(गी०. ९, ३४, १८-६५) इति भगवदुपासकानां योगिनां परमफलतया भगवत्प्राप्तिरेवोक्ता नतु तत्तादात्म्यं प्राप्तिस्तु न तादात्म्यमिति तद्भावः।

(३) ननु – ब्रह्मैवसन् ब्रह्माप्येति' (बृ७.६-४.६) इति वाजसनेयके ब्रह्मण एव ब्रह्मप्राप्तेरभिधानात् ब्रह्मभावो मुक्तेः पूर्वमप्यस्तीत्यवगमेन मुक्तौ न भेद इति चेत्, अत्रवदन्ति – ब्रह्मशब्दस्य जीववाचित्वेन ब्रह्मैवसन् जीवत्वावच्छिन्नएवसन्. (जीवभावमविहायैवेतियावत्) ब्रह्म परमात्मानम्, अप्येति = प्राप्नोति, इति श्रुत्यर्थः। मुक्तावपि न स्वतन्त्रो-जीवः अपितु – परमात्मस्वामिकत्वेन तदधीन एव वर्तते, इदमेवमुक्तौ जीवभावाऽहानमिति तात्पर्यम्। न च – ब्रह्मशब्दो न जीववाचीति शङ्क्यम् — जिज्ञासाधिकरणे 'अतएव ब्रह्मशब्दस्य जात्याद्यर्थान्तरं माशङ्कितव्य' मिति शाङ्करभाष्यव्याख्याने 'आदिशब्देन जीवकमलासनशब्दराशीनां ग्रहण' मिति आनन्दगिरीये उक्ते जीववाचित्वे ऽविवादात्।

(४) 'ननु सर्वं खल्विदं ब्रह्मे' ति श्रुत्या ब्रह्मजगतोरैक्योक्तेरभेदो युक्त इति चेत्, न — श्रुतेरभेदे तात्पर्याभावस्य 'वासुदेव' इति श्लोकव्याख्यावसरे (२५-पु०.) निरूपितत्वात्।

(५) अहं ब्रह्मास्मी' (बृं० ३-४-१०) ति वाक्यमपि जीवब्रह्मणोरैक्यं वक्तीति न शक्यते वक्तुम्। तस्य— 'ब्रह्म वा इदमग्र आसी त्तदाऽऽत्मानमेवाऽवेत्. 'अहं ब्रह्मास्मी' ति तस्मात्तत्सर्वमभवत्' इति वाक्यघटकत्वेन तस्य न ब्रह्मवाक्यत्वेन जीवब्रह्मैक्यपरत्वाभावात्। श्रुत्यर्थस्तु — जगतोऽग्रे = पूर्वम्, ब्रह्मैवाभूत्, तत् = ब्रह्म, आत्मानम्, अहं ब्रह्मास्मीति अवेत् = अजानात्, तस्मात् = तथाज्ञानाद्धेतोः, सर्वमभवत् = पूर्णमभवदिति। सृष्टेःपूर्वं ब्रह्मण-एकस्यैवसत्त्वात् ब्रह्म स्वस्वरूपं स्वयमेवाऽजानादिति भावः। ब्रह्मणः 'अहंब्रह्मास्मी' ति ज्ञानमुदभूदित्यर्थकं वाक्यमिदं जीवेशाऽभेदे कथं प्रमाणं स्यात्।

ननु — 'योर्ह्यो देवाना' मित्याद्युत्तरवाक्येन देवादीनांमध्ये योऽधिकारी, तत् = ब्रह्म वेद, वामदेवोपि तदेतत् ब्रह्मपश्यन्, 'तदिदमप्येतर्हि' इति 'य इदं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवती' इति उपासकज्ञानानुवादेन उपा-

सकस्यसर्वसिद्धेरभिधानात् जीवेशैक्यसिद्धिरिति चेत् , न – तत्र–'अहं ब्रह्मास्मी' ति नोपासकज्ञानानुवादः, किन्तु 'तदात्मान' मित्यादिवाक्यैकदेशानुवादः । तेन 'अहंब्रह्मास्मी' ति वाक्यघटित 'ब्रह्मवा' इत्यादिक्यमुपलक्ष्यते, तादृश ज्ञानवत् , नित्यपूर्णत्वादिमच्च यत् प्रसिद्धं ब्रह्म 'ब्रह्मवाइदमग्र' इति पूर्ववाक्ये निरूपितं तत् , एतर्ह्यपि (इदानीमपि) योवेदेत्यर्थस्यैव ततः प्रतीतेः ; ततश्च— नेदमात्मैक्यं प्रतिपादयितुं प्रभवति । उपासकज्ञानानुवाद इति अभिमानेपि अहं ब्रह्मसदृशोऽस्मीत्यर्थवर्णनसंभवात् नैक्येतात्पर्यमस्य । अत्र – भवेत् , अभवदित्यादौ भूतत्वं न विवक्षितं ब्रह्मणः स्वस्वरूपवेदनस्य पूर्णत्वादेश्च सदातनत्वात् ।

(६) ननु–छान्दोग्ये चतुर्थे (११.खं) उपकोसलविद्यायां गार्हपत्यान्वाहार्याहवनीया स्त्रयोऽग्नय उपकोसलाय 'य आदित्येपुरुषः,यश्चन्द्रमसि पुरुषः, योविद्युतिपुरुषः', 'सोहमास्मि स एवाहमस्मी' ति आदित्यादिस्थपुरुषस्य आत्मनश्च एकत्वोपदेशश्रवणात् आत्मैक्यं श्रौतमिति चेत् , न – त्रिष्वपिवाक्येषु सोहमस्मीत्यादेः तदधीनः, तत्सदृशोवाऽहमस्मीत्यर्थात् । यद्यत्रात्मैक्यमभिमतं, तर्हि — त्रिष्वप्युपदेशवाक्येषु 'य आदित्येपुरुष' इत्येववक्तव्ये चन्द्रादिस्थानभेदकथनं व्यर्थं स्यात् । न च — आदित्यादिषु विद्यमानः पुरुषएकएवेति ज्ञापनाय स्थानभेदोक्तिरिति वाच्यम् — तज्ज्ञापनस्याऽप्रसक्तेः । न च — द्वैतिनांमतेपि चन्द्रादिस्थानभेदकथनं व्यर्थम् । आदित्यस्थपुरुषाधीनत्वादिकथनेनैव आत्माधीनत्वादिना भेदसिद्धेरिति वाच्यम् — सर्वान्तर्यामिणः स्वरूपतो भेदाभावः, अधिष्ठानानां नियम्यानामनेकत्वं चेति बोधनाय स्थानभेदोक्तेः । ऐक्यवादिनातु नैवं वक्तुं शक्यम् , शुद्धेनैवैक्यस्याभिमतत्वेन तस्यैव प्रतिपादनीयत्वात् । किंच ऐक्यवादी किं भवान् आदित्यपुरुषयोरैक्यमङ्गीकरोति, नवेति प्रष्टव्यः । यद्यङ्गीकरोमीति ब्रूते तदा आदित्यः पुरुष ' इति निर्देशेनभाव्यं, नतु – 'आदित्येपुरुष' इति भेदेन । यदिनेतिब्रूते, तदा अन्येषामपि पुरुषेणैक्यं नेतिसुवचं भेदवादिभिरिति वक्तव्यम् ।

(७) तैत्तिरीये तु 'ब्रह्मविदाप्नोतिपर' (तै० उ० २ - १) मिति ब्रह्मविदां परब्रह्मप्राप्तिं संक्षेपेणप्रस्तुत्य तत्र 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति

मन्त्रवर्णसंवादं दर्शयित्वा 'तस्माद्वाएतस्मादात्मन आकाशः संभूत' (तै.उ.२-१-७) इत्यादिना ब्राह्मणवाक्येन ज्ञेयतया प्राप्यतया च प्रकृतस्य ब्रह्मणो जगत्कर्तृत्वादिलक्षणम्, आनन्दे तारतम्यं च द्वितीयवल्यां निरूप्य, द्वितीयवल्युक्तमेव जगत्कारणत्वरूपब्रह्मलक्षणं भृगुवल्यां पितापुत्रसंवादेन प्रतिपाद्य, उपासनाप्रकारं च दर्शयित्वा 'सोऽश्नुते सर्वान् कामा' नितिमन्त्रवर्णगतफलवाक्यार्थं 'अस्माल्लोकात्प्रेत्ये' (तै. उ. ३ - १० - ५) त्यादिना स्पष्टयन् संक्षेपविस्तराभ्यां जीवपरयोर्भेदमेवाऽऽह वेदपुरुषः।

तत्र — 'अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुपसंक्रम्य, प्राणमयम्० मनोमयम्० विज्ञानमयम्० आनन्दमयमात्मानमुपसंक्रम्य, इमान् लोकान् कामान्नीकामरूपी अनुसंचरन् एतत्सामगायन्नास्ते' (तै०. उ०. ३-१०) इत्यादि श्रूयते। अस्य 'सयश्चायं पुरुषे, यश्चासावादित्ये, स एकः, स य एवं वि (तै.उ०. ३ - १०५) दिति पूर्ववाक्यम्। पूर्वं 'क्षेम इति वाचि (तै०. उ. ३ - १०२) तृप्तिरिति वृष्टौ' (तै. उ. ३ - १०२) इत्यादिना अध्यात्ममधिदैवंच भगवदुपासनां विधाय, उपासनाविषयतया निर्दिष्टस्य ब्रह्मणो भेदशङ्कानिवृत्तये 'यश्चे' ति वाक्यद्वये प्रसक्तं ब्रह्म अनूद्य 'स एक' इति वाक्यं पुरुषोपलक्षितसर्वमानुषान्तर्यामिणः, आदित्योपलक्षितसर्वदेवान्तर्यामिणश्च एकत्वं (अभेदं) विदधत् सर्वान्तर्यामिभगवत्स्वरूपाणां भेदाभावं बोधयति। पूर्वोक्तोपासनाया अन्तर्यामिरूपतद्भेदाभावज्ञानस्यच फलमाह — स एवं विदित्यादि॥ अयमर्थः-यः=अधिकारी, एवम्=उक्तप्रकारेण, वित्=भगवन्तमुपास्य, अन्तर्यामिणोऽभेदं जानाति, सः = ज्ञानी, अस्मात्लोकात्=एतस्मात्शरीरात्, प्रेत्य = ऊर्ध्वंगत्वा, अन्नमयमित्यादेः = तत्तत्कोशगतत्वेन तत्तत्पदवाच्यमित्यर्थः।

---

१. 'प्राणं देवा अनुप्राणन्ति' (तै०. ३ - ३ - ) इत्यनुवाकीय 'स्वाभाविकेनाप्याकाशादिकारणेन नित्येनाऽविकृतेन सर्वगतेन सत्यज्ञानानन्तलक्षणेन, पञ्चकोशादिगतेन सर्वात्मना आत्मवन्तः, सहि परमार्थत आत्मासर्वेषा' मिति शाङ्करभाष्यात्, 'अतः सर्वकोशाध्यासाधिष्ठानभूतश्चिदात्मैव अत्र आत्मशब्देन विवक्षित इति तात्पर्यमाहे' ति तद्भाष्यीयानन्दगिरीयग्रन्थात्, 'आकाशादिशब्दैरपि आकाशावच्छिन्नब्रह्मण एव लक्षणया-

तन्त्र इति यावत् । य एवमिति ॥ योविरिंचः, एवं वेद = परतन्त्रोऽहं हरेरनुग्रहात् पूर्वनिरूपितभाग्यवानभवमिति जानाति सः 'सामगायन्नास्त' इति पूर्वेण संबन्धः ।

चतुर्मुखस्य मुख्याधिकारित्वेन तदनुभवं निरूपयन् वेदपुरुषः एतद्दृष्टान्तेन सर्वेपिमुक्ताः स्वस्वयोग्यतानुसारेण मुक्तौ सुखमनुभवितु मर्हन्तीति बोधयतीति ।

अत्र ब्रह्मप्राप्तितत्स्तुतिसामगानादेर्निरूपणात् मुक्तौ भेद एवेति श्रुतितात्पर्यम्, 'तद्ब्रह्मेत्युपासीत ब्रह्मवान् भवति' (तै०. उ०. ३ - १०) इति वाक्यबोधितब्रह्मत्वोपास्तिफलं ब्रह्मवत्त्वमपि ब्रह्मगुणवत्त्वमेव नतु तत्तादात्म्यम् । इत्थमेव अभियुक्तैः शङ्कराचार्यप्रभृतिभि रिदं वाक्यं व्याख्यातम् । ननु – श्रौतोप्ययं मौक्तिकोभेदः काल्पनिक इति चेत्, न – मुक्तौमायानुवृत्तेरभावेन अन्यस्य च तत्कल्पकस्याभावेन तत्र तस्यतत्त्वे मानाभावात् । ननु–अस्ति मुक्तौगौणमुख्यभेदः फलश्रुतेश्च गौणमुक्तिविषयकत्वमित्यादि स्वोत्प्रेक्षितं वैयाकरणैरादरणीयमित्यत्र न कश्चिन्निर्बन्धः । 'त इमे सत्याः कामा अनृतापिधाना' (छा.८ - ३ - १) इत्यादिना संसारेऽज्ञानादिना ऽऽवृतं सत्यकामादिक मज्ञाननिवृत्तौ मुक्तावाविर्भवतीति प्रतिपादनात् मुक्तौ कामादीनां सत्यत्वमेव नतुमायिकत्वम् ।

ननु – अस्यामेवोपनिषदि 'सोऽकामयत बहुस्यांप्रजायेये' (तै०. उ०. २ - ६) ति ब्रह्मण एव बहुभावोक्तेः 'तदेवानुप्राविश' (तै०. उ०. २ - ६) दिति तस्यैव सर्वत्रप्रवेशोक्तेश्च, तदतिरिक्तात्मनोऽभावेन अभेद एव युक्त इति चेत्, उच्यते – भगवत एव नियामकबहुरूपेण सर्वत्र प्रवेश इति तदर्थात्, जीवनियामकतया जीवान्तर्यामित्वस्य वाजसनेये अन्तर्यामिब्राह्मणे (५) उक्तेश्च भगवद्रूपाणामभेद इति तात्पर्येण भगवदतिरिक्तात्माऽभावेमानाभावात् जीवपरयोरभेदासिद्धिरित्यादि अन्यत्र विस्तरेणानिरूपितमिति ।

(८) ननु–बृहदारण्यके चतुर्थस्यतुर्ये, षष्ठस्यपञ्चमे च 'यत्र द्वैतमिवभवति' तदितर इतरं जिघ्रति,पश्यति (बृ. ४-४-६४, ६-५-१५) इत्यादिना भेदं

प्रतिषिध्य,'यत्र वा आत्मैवाभूत् तत्केन कं जिघ्रेत् पश्येत्'इति मुक्तौ आत्ममात्राव-शेषबोधकेनवाक्येन आत्मातिरिक्तवस्तुसामान्याभावं बोधयित्वा, 'न प्रेत्य सं-ज्ञाऽस्ती'ति मुक्तानांज्ञानाभावः प्रतिपादितः, स च विषयाभावप्रयोज्य एव अतो ज्ञायते मुक्तौ आत्मैकत्वमेवेति चेत्, ब्रूमः — उदाहृतेन तेन श्रुतिवाक्येन, न मुक्तौभेदाभावः, स्वरूपमात्रावशेषः, ज्ञानाभावश्चबोध्यते। यदितेन ज्ञानाभावः प्रतिपाद्येत, तर्हि — आत्माभाव एव बोधितोभवेत् ज्ञानस्वरूपत्वादात्मनः। ततश्च आत्मज्ञानस्य आत्मनाश एव फलमिति जानन् तत्साधनश्रवणादौ न कोऽपि प्रेक्षावान् प्रवर्तेत अप्रवृत्तौच तद्विधेः वैयर्थ्यमापद्येतेति सर्वं शास्त्रमपार्थकं-भवेत्। संज्ञानास्तीत्यस्य तु अयमर्थः — संज्ञापदम् 'आतश्चोपसर्गे' (पा० सू०. ३-३-१०६) इति कर्मणि अङन्तं ज्ञानविषय इत्यर्थकम्। प्रेत्यस्थितः पुरुषः, मुक्तः सन्, संज्ञा = अमुक्तैः ज्ञेयो न भवतीति। अमुक्तो मुक्तजीवं न पश्यतीति भावः।

'यत्र हि द्वैतमिवे'त्यस्यचायमर्थः— द्वैतपदं द्वाभ्यांप्रकाराभ्यामितं द्वीतं प्रकारद्वयविशिष्टं द्वित्वविशिष्टमिति वा (भेदवदिति यावत्) ततः तस्यभाव इत्यर्थे 'हायनान्तयुवादिभ्योऽ' (पा०.सू०.५-१-१३)णित्यनेन युवादित्वादणि भेद इत्यर्थकम्, यत्र=यदा, द्वैतं भेदः, भवति=अस्ति, तदा इतरः इतरं जिघ्रति, पश्यतीति। एवंच-घ्राणदर्शनादिकं भेदव्याप्तमित्युक्तं भवति। अत्रोक्तं घ्राणादिकं 'जक्षन् क्रीडन्रममाण' (छा. ८-१२३) इत्यादावुक्तजक्षणादेरप्युपलक्षणम्। हिशब्दः प्रमाणप्रसिद्धिं बोधयति[2]। ननु — सिद्धायांव्याप्तौ किं साध्यमित्यत आह—यत्र वा आत्मेति॥ मुक्तौ ज्ञानानङ्गीकारेऽतिप्रसंगमाह अनेन वेद पुरुषः। अक्षरार्थस्तु—यत्र=यदा,आत्मैवाभूत्, तत्=तदाकेन कं जिघ्रेत्, पश्येत्,न कमपि, जिघ्रति, पश्यति च, 'जक्षत्क्रीडन्रममाण' इत्याद्युक्तेः। ततश्च—मुक्तावात्ममात्रा-ऽवशेषे तत्र जक्षणादिबोधकश्रुतिरप्रमाणं भवेदिति। एतेन— 'संज्ञानास्ती'त्यस्य ज्ञानाऽविषय इत्येवार्थोन्याय्यः। यथा मुद्गराशौ प्रक्षिप्तोमुद्गः समानाभिहारात्

१. इवशब्दमहिम्ना एतल्लाभः। २. इवशब्दः द्वैतस्यपारतन्त्र्यं स्वभाव इति बोधयति अभावार्थकत्वेतु एतस्योत्तरस्य च वाक्यस्य न वैलक्षण्यं। विस्तरस्तु अन्यत्र द्रष्टव्यः।

आत्मानम् = परमात्मनम् , उपसंक्रम्य = प्राप्य, (मुक्तोभूत्वेतियावत्) कामान्नी = काम्यमानविषयभोगवान् ,¹ अन्नशब्दोविषयसामान्यपरः, कामशब्दः काम्यमानपरः कर्मधारयान्मत्वर्थीयेनिः । कामरूपी=अभिमतरूपवान् । अत्रापि पूर्ववदिनिः ; इमान् लोकान् = भूरादीन् लोकान् । अनुसंचरन् = गच्छन् । एतत् = वक्ष्यमाणम् , साम = 'हाहुवे' त्यादि सामविशेषम् । यद्वा—एतत्=शास्त्रेषु प्रतिपादितम् , साम=ब्रह्म । गायन्=गानंकुर्वन् स्तुवन्, आस्ते = यत्र रुचिः तत्रास्ते । सामदर्शयति — हाहुवेति ॥ अयं परमानन्दावाप्तिजनितानन्दविशेष (सन्तोषातिशय) द्योतकः अतो नाऽस्यार्थविशेषचिन्ता । अहमन्नम्=स्वावराणामहमुपजीव्योऽस्मि । अहमन्नादः = विषयभोगशीलः; 'जक्षन् क्रीडन्रममाण' (छा. ८ - १२ - ३) इत्याद्युक्तेः, अहं श्लोककृत् = हरेःकीर्तिं सर्वत्रप्रकाशमानां कुर्वन् । सर्वत्र त्रिरुच्चारणं सामत्वात्, अतिशयितसुखास्वादजन्यसंभ्रमाद्वा । हरेरनुग्रहान्ममेदृशं भाग्यमिति भावः । सर्वमिदं मुक्तस्य चतुर्मुखस्येत्याह — अहमस्मि प्रथमजा इति ॥ ऋतस्य = ज्ञानरूपस्य सत्यस्य वा भगवतो हरेः, अहं प्रथमजोऽस्मि ; कस्मात्प्रथमत्वमित्यत आह — पूर्वं देवेभ्य इति ॥ रुद्रादिसर्वदेवेभ्यःपूर्वंजातः । 'ब्रह्माजातानां प्रथमः संबभूव' (मु. १ - १ - १) यो ब्रह्माणं विदधातिपूर्वं योवैवेदांश्च प्रहिणोतितस्मै ; तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये (श्वे. ६ - १८) हिरण्यगर्भः समवर्तताऽग्रे भूतस्यजातः पतिरेक आसीत् । स दधार पृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम' (ऋ. सं. ८ - ७ - ३) इत्यादौ चतुर्मुखस्यप्रथमोत्पन्नत्वश्रवणात् । किंच — अमृतस्य = मुक्तवर्गस्य, नाभिः = आश्रयः, 'अरा इवरथनाभा' वित्यादौ नाभिपदस्य आश्रयार्थकत्वं प्रसिद्धम् । 'कार्यं-

---

प्रतिपादना' दिति 'समाकर्षात्' (ब्र०. सू०. १–४–१५) इति सूत्रीयसुरेश्वराचार्यवृत्तिग्रन्थाच्च, सृष्टिवाक्यगताऽन्नरसमयादिशब्दानां तत्तत्कोशाध्यासाधिष्ठानपरत्वावगमेन, अत्रापि वाक्ये अन्नमयादिपदानां तत्तत्कोशाध्यासाधिष्ठानभूतमित्यर्थो न्याय्यः । आत्मशब्दसामानाधिकरण्याच्च न केवलं कोशपरत्वम् । तादृशमात्मानं प्राप्येति वाक्यार्थः ।

१. शाङ्करभाष्यटीत्या इदम् । २. 'नञ् घटितमानित्य' मिति न्यायेन 'नाभ्यस्ताच्छतु' (पा. सू. ७–१–७८) रिति सूत्रस्यानित्यत्वात् नुम् , जक्षदित्येवकैश्चित्पठ्यते ।

बादरिरस्यगत्युपपत्तेः (ब्र. सू. ४ - ३ - ७) कार्यात्ययेतदध्यक्षेणसहातःपर-माभिधानात्' (ब्र. सू. ४ - ३ - १०) ब्रह्मणामहते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्तेपरात्मानः प्रविशन्तिपरंपदम्' इत्यादौकार्यब्रह्म (चतुर्मुख) प्राप्तेः, तेन सहपरमपदप्रवेशस्यचाभिधानात् तस्यमुक्ताश्रयत्वम्, परस्यान्ते तेन सह परमपद-प्रवेशकथनात् परब्रह्मप्रापयितृत्वंचेति ज्ञायते। स एनान् ब्रह्मगमयती'(छा.४ १५) त्यस्य, सः = अमानवःपुरुषः, एनान् = मुक्तान् ब्रह्म = कार्यब्रह्म, परं ब्रह्मच, नयति=प्रापयतीत्यर्थः। तत्र अमानवः पुरुषः, वायुः चतुर्मुखश्च। वायुः कार्य-ब्रह्मनयति, चतुर्मुखःपरंब्रह्मेति विवेकः। 'अमृतस्यैषसेतु' (मु. २-१-५) रिति श्रुतिस्तु हरेःसर्वमुक्ताश्रयत्वमाह। एवं शास्त्राभ्यासप्रवचनाभ्यां प्राप्तंस्ववैभवं प्र-काश्य, अन्यस्यापि उपदेष्टुस्तत्तद्योग्यसुखं भविष्यतीत्याह – य इति॥ यः = अधिकारी, माः = प्रमाणानि, विष्णूत्कर्षप्रतिपादकानि शास्त्राणि, ददाति = अन्येभ्योयोग्येभ्य उपदिशति। सः अधिकारी, इत् = एव, एवमेव, स्वयोग्यं यावत्सुखमनुभवति। (प्रथमजत्वंतु न भवति) ददातीत्युपलक्षणं स्वस्वयोग्य-श्रवणादेरपि। मा = माम्, अवाः = प्राप्नुयात्, छान्दसत्वात् व्यत्ययेन मध्य-मपुरुषः। 'अवरक्षणे' त्यादिदण्डके 'दीप्त्यवाप्त्यालिङ्गने' ति पाठात् प्राप्त्यर्थ-कत्वं धातोः। 'अध्येष्यतेचयइमं धर्म्यं संवादमावयोः। ज्ञानयज्ञेनतेनाह मिष्टः-स्यामिति मेमतिः' (गी०. १८-७०) श्रद्धावाननसूयश्च शृणुयादपि योनरः। सोऽपिमुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्मणाम्' (गी. १८-७१) इति उपदेष्टुः श्रोतुश्चशुभलोकावाप्तेः फलत्वेन भगवतोक्तेः। श्लोके स इति उपदेष्टृपरामर्श-कम्, अपिः श्रोतृसमुच्चायकः। अहमन्नम् = सर्वेषामहमुपजीव्यः। अन्नम् = हरेरन्नम्। अत्र अन्नत्वं नाश्यत्वम्। अदन्तम् = कर्मफलभोक्तारम्। अद्मि = उपसंहरामि हरेराज्ञयासर्वमुपसंहरामि। सर्वेषामीश्वराधीनत्वेन तदादिष्टकार्य-कारित्वं धर्म इति भावः। अहम्, विश्वं भुवनम् = सर्वजगत्, अभि अभ-वम् = गुणैः तिरस्कुर्वाणोऽभवम्, गुणैः श्रेष्ठोहमस्मीतियावत्। तर्हि किं-स्वतन्त्रोभवानित्यत आह – सुवर्णज्योतिरिति॥ सुवर्णःपरमात्मा ज्योतिः प्रे-रकः[1] यस्यसः, अहमिति वर्तते। अहं निर्दुष्टपरमानन्दपरमात्मप्रेरितः तत्पर-

१. ज्योतिषस्तमोनिवृत्तिपूर्वं पुरुषप्रवर्तकत्वदर्शनात् प्रेरक इति व्याख्यातम्।

अतोऽस्मिल्लोकेवेदे च प्रथितः पुरुषोत्तमः (१८)
योमामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत (१९)
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुध्द्वाबुद्धिमान् स्या त्कृतकृत्यश्च भारत ' (२०)

इति । श्लोकार्थस्तु— ' क्षरः, अक्षरः, ईश्वर ' इतित्रयः पदार्थाः, तत्र-क्षरपदेन ' क्षरः सर्वाणिभूतानी ' ति अत्रैवोक्तेः क्षरणधर्मचेतनाऽचेतनपदार्थ-सामान्यं ग्राह्यम्, अक्षरपदेन क्षरणधर्मशून्यं नित्यं वस्तु ' कूटस्थ ' इत्युक्तेः । कूटस्थपदस्य 'कूटस्थैरविचालिभि ' रिति पस्पशाह्निकमहाभाष्यदिशा नित्यार्थकत्वं संप्रतिपन्नम् । तादृशं वस्तु लक्ष्मीः, चेतनस्य क्षरणधर्मत्वंतु प्रकृतिकार्यदेहादि-द्वारा पुरुषपदमेतदुभयार्थकम् । ततश्च—लक्ष्मीतदितरचेतनाऽचेतनवर्गाभ्याम्; अन्यः पुरुषः यः स उत्तमः, स क इति चेदाह — परमात्मेति ॥ यः शास्त्रे तथा उदाहृतः स इत्यर्थः । तस्याऽसाधारणधर्ममाह – य इति ॥ यः परमात्मा, लोकत्रयधारणपोषणादिकर्ता ईश्वरः सर्वस्वामी अव्यय इति चोदाहृतः । पुरुषो-त्तमपदप्रवृत्तिनिमित्तं स्पष्टमाह – यस्मादिति ॥ उक्तशास्त्रार्थे ऽसंमूढः व्यामोह-रहितः सन् मां पुरुषोत्तमम् एवम् उक्तप्रकारेण जानाति, स सर्ववित् = सर्वशा-स्त्रार्थवित्, सर्वशास्त्रे एवमेवोक्तेः, सर्वभावेन = पूर्वोक्तसर्वप्रकारेण (पुरुषोत्तम-त्वादिना) भजति = सेवते (एवं भजनीयमिति यावत्) इदमतिरहस्यं शा-स्त्रम् अवश्यकर्तव्यधर्मप्रतिपादकं शास्त्रं, शास्त्रशिष्टोधर्मोवा । एतत् = उपदिष्टं शास्त्रं, बुद्ध्वा = ज्ञात्वा बुद्धिमान्, कर्तव्येषु प्रतिभावान् अतएव कृतकृत्यः कर्त-व्यं कृतवान् सच्छास्त्रश्रवणं तदर्थानुष्ठानं च कृतवान् स्यादितिसंबन्धः स्पष्टम-न्यत् । चराचरप्रपञ्चजातात् भिन्नः पुरुषोत्तमपदवाच्यः परमात्मा शास्त्रप्रति-पाद्यः, तं तथाजानतोभजतश्च जन्मसफलमिति भावः । सर्वभावेनेति कर्मधारयः भावशब्दउक्तपुरुषोत्तमत्वादिप्रकारवाची । अतएव पूर्वंभगवतः सर्वोत्तमत्वादिनि-रूपणं सार्थकम् । यद्येवं न भजते मुमुक्षुः शास्त्रे तन्निरूपणं निरर्थकं, गुणनि-रूपणस्य ज्ञानोपासनफलकत्वात् । अथवा – सर्वभावेन = पितृत्वादिना

'पिताऽहमस्यजगत' ( गी०. ९ - १७ ) इत्युक्तेः, संपूर्णप्रेम्णा परमभक्त्येतियावदितिवार्थः । यत्तु सर्वस्यभाव इति षष्ठीसमासः सर्वत्वमिति तदर्थः सर्वरूपेणभजतीति वाक्यार्थ इति नागेशीयपक्षपातिनां व्याख्यानं तत् नादर्तव्यम् । तथासति पूर्वं सर्वरूपत्वमेव निरूपणीयं नतु पुरुषोत्तमत्वादिनिरूपणम् एवंच — जीवेशयोर्भेदः सर्वशास्त्रार्थ इति गीताचार्याणामाशयः । पाणिनेरपि अयमेवाशय इति पूर्वं निरूपितम् ।

रामानुजीये — क्षराक्षरपदे मुक्ताऽमुक्तवर्गपरे इति व्याख्यातम् ।

शाङ्करे — क्षरपदं विकारजातपरम् , अक्षरपदन्तु क्षरपदवाच्यस्य पुरुषस्य उत्पत्तिबीजपरमिति ।

एवमन्यान्यपि अभेदपरतया प्रतीयमानानि श्रुतिस्मृतिवचनानि भेदपरतया योज्यानि, योजितानि च बहुप्रमाणोपन्यासेन भेदपरतया ब्रह्मवादिमिरन्यत्र । किं च प्रतिवेदान्तं प्रतिविधं सृष्ट्यादिनिरूपणं, ब्रह्मजीवयोरुपास्योपासकभावादिनिरूपणं च वासुदेवस्योत्कर्षाधायकं ब्रह्मजीवभेदतात्पर्यकंचेति प्रपञ्चितं विस्तरेण तैरेव

एतेन — 'प्रतिवेदान्तं सृष्ट्यादिनिरूपणमात्मैकत्वव्युत्पादनायेति मञ्जूषोक्तम् , 'तत्त्वमस्यादिवाक्य मुखण्डार्थेन शुद्धेनापि ब्रह्मणा आध्यासिकं तादात्म्य' मिति तत्रोक्तम्, 'चत्वारिशृङ्गे' ( ऋ०. ३ - ८ - १० ) ति ऋगर्थनिरूपणपरभाष्यकैयटव्याख्यावसरे 'शब्दः स्वाभेदमाविष्कृतवान् , 'सक्तुमिवे' ति ऋगर्थविचारे मार्गो ब्रह्मरूपः तत्र आत्मना सह समानख्यातयः त्यक्तभेदभावाना' इति परपशोद्योतोक्तम् , तथा — 'सक्तुमिवे' ति श्रुतितात्पर्यनिरूपणावसरे समानख्यातयः भेदग्रहस्यानिवृत्तत्वात् सर्वमेकमिति मन्यन्ते' इति कैयटकृतसखायपदव्याख्यानं च सर्वप्रमाणविरुद्धम् , व्यासपाणिनिपतञ्जलीनामसंमतं च , सृष्ट्यादिनिरूपणस्य हरावुपास्यत्वप्रयोजकोत्कर्षव्युत्पादकत्वादित्युक्तत्वात् । अत एव भगवान् व्यासः 'जन्माद्यस्ययत' ( ब्रह्म०.सू०. १ - १ - २ ) इति नये जिज्ञास्यस्य ब्रह्मणः सृष्ट्यादिकर्तृत्वं लक्षणमभिधाय- ततएव उत्कर्षसद्भावात् , ब्रह्म चेतनाऽचेतनजगद्विलक्षणमित्यसूचयत् । अनेन

सूचितमेव वैलक्षण्यं प्रायेण प्रत्यधिकरणं जीवावृत्तिगुणवत्त्वबोधक 'भेदव्यपदेशा' दित्यादिना स्पष्टीकरोति । 'महतादेवेन नः साम्यं यथास्या'दित्यध्येयं व्याकरण' मित्यध्येतृणां भगवत्साम्यमेव फलमिति कण्ठतो 'भाष्यकारैः 'चत्वारी' ति श्रुते रभिप्रायवर्णनात् , सखायः सख्यानीत्यनयोः त्यक्तभेदभावनाः, सायुज्यानीति भाष्यकारैरव्याख्यातत्वेन कैयटादौ तथा व्याख्यानं चिन्त्यम् । सायुज्यमित्यर्थेपि नात्मैक्यलाभः अतिसूक्ष्मदर्शिभिरपि विभागेन दर्शनाऽयोग्यसंयोगविशेषस्यैव सायुज्यपदार्थत्वात् । एवंच – 'सर्वमेकमितिकैयटः, आत्मनासहत्यक्तभेदभावना' इति नागेशश्च चिन्त्यः । तदुक्तार्थस्याक्षरमर्यादयाऽलाभात् , भाष्यानुक्तेश्च । भाष्याक्षरार्थस्तु – अत्रेति विषयसप्तमी, षष्ठ्यर्थेवा सा । अत्र = ब्रह्मणिविषये, ब्रह्मण इति वार्थः, सखायः = मित्राणि, ब्रह्मसख्यस्यफलमाह—सख्यानीति॥ 'सख्युर्य' (पा. सू. ५-१-१२६) इति भावे कर्माणि वा यप्रत्ययान्तं सख्यपदम् । वासुदेवकानामिति शेषः । वासुदेवभक्तानां मैत्राणि, जानते = प्राप्नुवन्ति । वासुदेवभक्तानामपि मित्राणि भवन्तीति यावत् । अत्रपदं व्याख्याति – य एष इति ॥ दुर्गः = गुरुकुलवासशास्त्राभ्यासादिना गम्य इति दुर्गः, मार्गः = अन्वेषणीयः, 'सोन्वेष्टव्य' इति श्रुतेः मार्ग अन्वेषण इति चौरादिकात्कर्मणि घञ् । एकगम्यः = मुख्यत्वेन (प्राधान्येन) गम्यः, वाग्विषयः = श्रुतिप्रतिपाद्यः, प्रश्नप्रतिवचनाभ्यामधिकारिणमाह – के इत्यादि ॥ तेषामधिकारित्वे हेतुं पृच्छति – कुत इति ॥ हेतुमेवाह — भद्रेति ॥ एषाम् = वैया-

१. तन्त्रवार्तिके च इयमृक् तत्तत्तन्त्रकृद्भिः स्वस्वतन्त्राध्ययनप्रयोजनपरतया व्याख्यातुशक्येति बहुधाव्याख्याता, 'नमोद्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे । सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः'(भाग.८-१६-३१) इति भगवत्परतया व्याख्याता व्यासेन, श्रीधरादिभिरस्याविष्णुपरतास्पष्टीकृता, 'चत्वारिशृङ्गे'ति 'वेदावा एते' इत्यादिना यज्ञपरत्वेन यास्कोक्तयोजनापि भगवतो यज्ञरूपत्वनिरूपिकैव, विजयध्वजीयादावपि मन्त्रश्लोकावित्थमेवव्याख्यातौ ।

न च — मन्त्रे 'मर्त्यानाविवेशे' ति आवेशनमेवोक्तं तत् कथं 'साम्यं यथास्या' दिति भाष्योक्तं संगच्छत इति वाच्यम् – तत्सृष्ट्वातदेवानुप्राविश' दिति कार्यसामान्ये भगवदनुप्रवेशस्योक्तत्वेन तस्य सर्वसाधारण्यात् न अध्ययनासाधारणफलत्वमिति साम्य एव प्रवेशोक्तेस्तात्पर्य' मिति भाष्याशयात् ।

करणानाम्, अधिवाचि = वागिन्द्रिये, भद्रा = मोक्षलक्षणशाश्वतिकसंपत्करी, लक्ष्मीः = मोक्षसाधनवासुदेवोत्तमत्वज्ञानसाधनप्रकृतिप्रत्ययादिविभागपूर्वकश्रुत्यर्थसंवित्पूर्वकप्रवक्तृत्वरूपा संपत्, निहिता = स्थापिता। यद्वा — वासुदेवोत्तमत्वज्ञानं मोक्षसाधनमिति या लक्ष्मीः, अधिवाचि = श्रुत्यादौ, निहिता, सा लक्ष्मीः एषां भवतीति।

अयं भावः — वेदादौ यदुक्तं वासुदेवसर्वोत्तमत्वज्ञानं मोक्षसाधनमिति तज्ज्ञानं तादृशज्ञानोत्पादकशास्त्रप्रवचनवैदुष्यं वैयाकरणानामेव, त एवहि वेदादिशास्त्रजन्यज्ञानसंपादने शास्त्रप्रवचनकरणे च प्रभवन्ति, यत् एते तदुपकरणशब्दशास्त्रे ऽधीतिनः, एतेष्वेव भगवतो भागवतानांच प्रीतिरुत्पद्यते एतेषां सच्छास्त्राध्ययनाध्यापनादौ मुख्याधिकारित्वादिति। सख्यानीति बहुवचनं तु निरूपकभेदात्। पाणिनेस्तु नेष्टं जीवपरमात्मैक्यमिति पूर्वमेव निरूपितम्।

'विरुद्धवत्प्रतीयन्त आगमा यत्रवै मिथः। तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत' इति वचनात्, 'द्वासुपर्णे' त्यादिभेदागमै र्विरुद्धवदवभासमानानां तत्त्वमस्यादिवाक्यानां तत्सादृश्यादिपरतया भेद एव तात्पर्यावधारणेन प्रतीयमानविरोधः परिहरणीयः। दृष्टं=प्रत्यक्षम्। प्रत्यक्षानुकूलागमाऽविरोधेन प्रतीयमानविरोधाः तत्त्वमस्याद्यागमा नेतव्या इत्यक्षरार्थः। प्रत्यक्षानुकूला आगमास्तु भेदपर 'द्वासुपर्णासयुजा' इत्यादयो ज्ञातव्याः। इत्थमेव श्रुतिवाक्यानां योजना वासुदेवस्य सर्वोत्तमत्वमभिप्रयतः पाणिनेरप्याचार्यस्य संमतेति अपरे पाणिनीयाः। 'सुखदुःखज्ञाननिष्पत्त्यविशेषात् ऐकात्म्यम्' (वै० ३-२-१२) व्यवस्थातोनाना (२०) शास्त्रसामर्थ्याच्च (२१) इति त्रिसूत्र्या आत्मैकत्वमाशङ्क्य आत्मनानात्वं सिद्धान्तितं कणादेन। अत्राद्येन एकत्वमित्याक्षेपः, द्वाभ्यामुत्तराभ्यां नानात्वमिति सिद्धान्त इति उपस्कारवृत्ति विवृतिकारौ। भाष्यकृच्चन्द्रकान्तस्तु आत्मैकत्वमेवसिद्धान्तः नानात्वं तु औपाधिकमिति त्रिसूत्रीं व्याचष्टे। इदंतु शङ्करभाष्यादिबहुग्रन्थविरुद्धम्। तेषुकणादस्य भेदवादिषु परिगणितत्वात्।

तत्त्वमस्यादिवाक्यानां नाऽभेदपरता ततः।
तद्विरोधो नास्ति भेदे व्यासपाणिनिसंमते॥

( १२ - शब्दार्थयोरखण्डत्वनिरासः )

ननु – पदपदार्थौ वाक्यतदर्थौ चाऽखण्डौ 'अखण्डमेववाक्यं बोधकमखण्डार्थस्य, 'अखण्डार्थेन शुद्धेन ब्रह्मणे' ति शक्ति विचारे मञ्जूषायाम्, 'शुद्धचित्तस्यतूभयमपि बोधकमखण्डविषयस्य, एवं सर्वबोधकेषु ब्रह्मत्वबुद्धौ जातायां तेनैवदृष्टान्तेन सर्वपदार्थेषु ब्रह्मत्वबुद्धि वैयाकरणाना' मिति 'सक्तुमिवे' ति श्रुत्यर्थविचारपरभाष्यव्याख्यावसरे पस्पशायामुद्योतेचोक्तत्वात् ब्रह्मणोऽखण्डत्वेन, सर्वत्र ब्रह्मत्वबुध्युदयेन च सर्वंब्रह्मैव, ब्रह्मातिरिक्तं वस्तु किंचन नास्त्येवेति सिध्यतीति 'तत्त्वमसी' त्यादिवाक्यानामभेदपरत्वेन योजनमेव युक्तमिति चेत्, अत्र वदन्ति – नैतद्युक्तं सूत्रभाष्यकाराभ्यां प्रकृतश्रुतेस्तथाऽव्याख्यानात् तस्यार्थस्य प्रकृतशास्त्रप्रतिपाद्यविषयासंबद्धत्वेनाऽनुपयोगात्, विषयाऽखण्डत्वस्य वेदेपाणिनीयेतन्त्रे ब्रह्ममीमांसायांच सिद्धान्ताऽकरणात्, वैयाकरणानां सर्वत्र ब्रह्मत्व बुद्धेरभावात् प्रकृते तन्निरूपणस्याप्रसक्तेश्च। एतेन — अखण्डार्थस्तु मानसबोधविषयः, 'नेहनाने' ति निषेधवाक्यसहकारेण धर्मोपलक्षितशक्तिग्रहात् तदुपलक्षिताखण्डार्थस्यैवबोध' इति शक्तिविचारे (म०, ४ - २५) तथावृत्तिविचारे 'यथावेदान्तिनां मतेऽखण्डार्थबोधो लक्षणवाक्यादौ' (व्या.म. १४०२ - ५) इति मञ्जूषायामुक्तम्, समर्थसूत्रोद्योते 'तस्माद्वेदान्तिमते तत्त्वमस्यादिवाक्यादावखण्डार्थबोध एव वृत्तौ' (३३ - पु०, ) इत्युक्तिश्च चिन्त्यम्। 'नेहनाने' ति वाक्यस्य ब्रह्मातिरिक्तपदार्थसामान्यनिषेधकत्वाभावस्योपरि वक्ष्यमाणत्वेन ब्रह्मवादि-

---

१. 'अपृथगुपस्थिति जनकत्वम्, वृत्तिघटकानामपृथगुपस्थितिजनकत्वमिति तु शास्त्रकृत्कल्पितमिति न तद्विरोध' (४ - १३ व्या०. ३७ - २७ मू) इति प्रथमपरिच्छेदे, 'अखंण्डार्थत्वंच पदार्थसंसर्गानवगाहिप्रतीति जनकत्व' (१४०२-६ व्या. १५५९) मिति वृत्तिपरिच्छेदे, तत्रैव 'प्राचुर्यं निर्धर्मकत्व' मिति मयडर्थविचारे मञ्जूषोक्तेः, 'ब्रह्मणोऽखण्डत्वं च निर्धर्मतैव, धर्मशून्यत्व' मिति तद्व्याख्यातृवचनात्, 'अखण्डानि निरवयवानी' (३५-२२) ति समर्थसूत्रोद्योतोक्तेः, 'पदे न वर्णाविद्यन्ते वाक्येष्ववयवानच' (३९८ - ४०) वाक्यपदीयेहर्युक्तेः, 'अखंडोपिस्फोटः' इति मंजूषोक्तेश्च पद वाक्ययोः निरवयवत्वम्, अपृथगुपस्थिति जनकत्वम्, संसर्गानवगाहि प्रतीतिजनकत्वं वा अखण्डत्वम्, तत्रापि हर्युक्त्या निरवयवत्वमेव मुख्यं तदितिभाति अर्थस्य तु निर्धर्म-

भिरन्यत्र तथा सिद्धान्तितत्वेन च तत्सहकारेण ब्रह्मणोऽखण्डत्वाऽसिद्धेः, द्वितीयमानसबोधस्य सर्वत्र सर्वेषामनुदयात्, तथा बोधस्य पुरुषविशेषनिष्ठत्वेन 'तत्त्वमसी'त्यादौ सर्वेषां तादृशबोधाजननात्, भगवतोव्यासस्य, पाणिनेः, पतञ्जलेश्च वाक्यविषययोरखण्डत्वस्याऽसंमतत्वेन तद्दृष्टान्तेन वैयाकरणमते एतद्विषयव्यवस्थाऽयोगात्। तथाहि – 'यथावेदान्तिना' मिति दृष्टान्तस्तावदनुपपन्नः, तन्मते शब्दतदभिधेययोरखण्डत्वस्य दुर्वचत्वात्, ब्रह्मातिरिक्तवस्तुन स्तन्मते-मायिकत्वाभावात्। वेदान्तिपदेन भगवान् बादरायण एव मुख्यतो व्यपदेशमर्हति नत्वन्ये भाष्यकारा, वृत्तिकारा वा भिन्नभिन्नाभिप्रायाः, अतस्तेषांतथोक्तिर्दृष्टान्तो न भवेत्, तेषां सर्वसंप्रतिपन्नत्वाभावात् सर्वसंमतपुरुषवचनं हि दृष्टान्ततां भजेत। 'तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः। अवतीर्णोमहायोगी सत्यवत्यांपराशरात्॥ उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम्॥ चतुर्धाव्यभजत्तांश्च चतुर्विंशतिधा पुनः। शतधाचैकधाचैव तथैव च सहस्रधा॥ कृष्णोद्वादशधाचैव पुनस्तस्यार्थवित्तये। चकार ब्रह्मसूत्राणि येषांसूत्रत्वमञ्जसा॥' इत्यभियुक्तोदाहृतप्रमाणैः, 'वेदान्तकृद्वेदविदेवचाह' (गी. १५-१५) मिति भगवद्वचनेनच व्यासस्यैव वेदान्तकृत्त्वेन सर्वैर्निर्धारितत्वात्। गीतावासुदेवस्यतत्त्वंवक्ति, न व्यासस्येति माशङ्कनीयम्। उभयोर्भगवतो नारायणस्यैव अवतारत्वात्। कृष्णस्य नारायणावतारत्वेनकश्चिद्विप्रतिपद्येत, 'आदिकर्ताभगवान्नारायणोख्योविष्णुः भौमस्य ब्रह्मणो ब्राह्मणत्वस्य च रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूवे' ति गीताभाष्योपक्रमे, श्रीशङ्कराचार्योक्तेः, अन्यैरप्याचार्यैः अन्यत्र च तथोक्तेः। व्यासस्य तु 'तैर्विज्ञापिते'त्यादि पूर्वोदाहृतप्रमाणैः 'कोह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवे' दित्यादि प्रमाणैश्च नारायणावतारतावगमात्। अत एवोक्तं शाङ्करमतानुयायिना विपश्चिता 'शङ्करः शङ्करः साक्षा द्व्यासोनारायणो हरिः। तयोर्विवादे संप्राप्ते किं कुर्मः किंकरा वयम्' इति सकलवैदिकविद्वज्जनाः। स च व्यासो गीतायामन्यत्र च ब्रह्ममीमांसायां च भगवतोनारायणस्य जगत्कर्तृत्वाद्यनेकगुणवत्त्वं प्रतिपादयन्, उक्तगुण-

कत्वमेवतत्। १. पूर्णप्रज्ञाः, श्रुतप्रकाशिकाकाराश्च। २. अद्वैतचन्द्रिकाकारोऽयमर्वाचीनः।

वस्त्वप्रतीतिप्रतिबन्धकं वाक्यतदर्थयो रखण्डत्वं कथमङ्गीकुर्यात् । यदितत्त्वं तद भिमतं तदा 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' (ब्र०.सू०. १ - १ - १३ - इत्यादिनाव्युत्पत्तिप्रदर्शनपूर्वं तत्तच्छब्दबोधितधर्मवदर्थप्रत्यायनं न संगच्छेत ।

किंच — 'यानिनामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि तानिवक्ष्यामिभूतये' इति महाभारते भगवन्नाम्नां महर्षिप्रदर्शितनिरुक्तिबलात् प्रतीयमानगुण ( धर्म ) विशिष्टभगवन्नाम्नां कथनप्रतिज्ञानं, विष्णुपुराणेच — 'शुद्धेमहाविभूत्याख्ये परेब्रह्मणिशब्द्यते ॥ मैत्रेय भगवच्छब्दः सर्वकारणकारणे । संभर्तेति तथाभर्ता भकारोऽर्थद्वयान्वितः ॥ नेता गमयिता स्रष्टा गकारार्थस्तथामुने । ऐश्वर्यस्यसमग्रस्य वीर्यस्ययशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा । वसन्ति तत्रभूतानि भूतात्मन्यखिलात्मनि॥ स च भूतेष्वशेषेषु वकारार्थस्तथाव्ययः । वि. पु. ६ - ५ - ७२, ७५ ) ज्ञानशक्तिः — (७९) एवमेष महाशब्दो मैत्रेय भगवानिति ॥ परमब्रह्मभूतस्य वासुदेवस्यनान्यगः । अत्र पूज्यपदार्थोक्तिः परिभाषासमन्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्रह्युपाचारतः' ( वि. पु. ६ - ५ - ७६, ७७ ) इति भगवच्छब्दं निरुच्य तद्बलेन प्रतीयमानस्रष्टृत्वादिगुणविशिष्टभगवतो भगवच्छब्दवाच्यत्वाभिधानंच न संगच्छेत। ततश्च नेष्टं शब्दार्थाखण्डत्वं तस्य भगवतो व्यासस्येति 'वेदान्तिना' मिति दृष्टान्ताभिधानं न युक्तम् । श्रुतौच — 'सवाएष आत्माहृदि, तस्यैतदेवानिरुक्तं हृदयन' मिति तस्माद्धृदय महरहर्वा एवं वित् स्वर्गंलोकमेति, (छा०. ८ - ३ - ३ ) तस्यहवा एतस्य ब्रह्मणो नाम सत्य ' ( छा०. ८-३-४ ) मिति तानिहवा त्रीण्यक्षराणि स तियमिति तद्यत् सत् तदमृतम्, अथ यत् ति तन्मर्त्यम्, अथ यत् यं तेनोभे यच्छति यदनेनोभे यच्छति तस्मा द्यम्, अहरहर्वा एवं वित् स्वर्गंलोकमेति (छा. ८-३-५) इति दहरविद्यायां हृत्पुण्डरीकाकाशगतस्य भगवतो नाम्नोः हृदयसत्यशब्दयोः अवयवार्थमुक्त्वा, तद्विशिष्टभगवज्ज्ञानिनः फलस्य' च निरूपणात्, 'तदेतत्त्र्यक्षरं हृदयम्' ( बृ०. ७ - ३ - १ ) इति हृदयनाम्नस्त्र्यक्षरत्वमभिधाय तदक्षरत्रयोपासनस्य वाजसनेये फलनिरूपणाच्च, पदादीनामखण्डत्वव्युत्पादनं श्रुतिविरुद्धम् ।

महर्षिः पाणिनिरपि पदपदार्थानां वाक्यवाक्यार्थानां चाऽखण्डत्वं नेच्छति, यतोऽय मर्थविशेषे शास्ति कार्याणि । तथाहि– 'अन्तरं बहिर्योगोपसंव्यानयोः, मृषस्तितिक्षायाम्, प्रकाशनस्थेयाख्ययोश्च, पराजेरसोढः, स्वाङ्क्षेणक्षेपे, अपवर्गेतृतीया, येषांचविरोधः शाश्वतिकः, ओरावश्यके, लक्षणहेत्वोः क्रियायाः, हेतुहेतुमतोर्लिङ्, जानपदकुण्डगोण, इन्द्रवरुण, तुमुन्ण्वुलौक्रियायां क्रियार्थायाम् । धातोरेकाचोहलादेः क्रियासमभिव्याहारे यङ्, राजश्वशुराद्यत्, कौमारापूर्ववचने, देयमृणे, भूतपूर्वेचरट, तत्रकुशलः पथः, प्रशंसायांरूपप्, कृभ्वस्ति, क्षय्यजय्यौशक्यार्थे, संपर्युपेभ्यः करोतौ भूषणे, निवातेवातत्राणे, पुत्रेऽन्यतरस्याम्, नाञ्चेः पूजायाम, तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्, अञ्चेः-पूजायाम, वर्षस्याऽभविष्यति, भियोहेतुभयेषुक्, अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु, नित्यवीप्सयोः, राजन्वान्सौराज्ये, प्रष्ठोऽग्रगामिनि, वाहनमाहितात्' इत्येतैरर्थविशेषेसर्वनाम संज्ञादिकार्याणि उत्तरपदाधिकारे, केवलपदाधिकारे, स्वरविधौ, अङ्गाधिकारेच पूर्वोत्तरपदसंबन्धिकार्याणि च प्रयोगे बोद्धृणामेतैःशब्दै रर्थविशेषोपस्थितिर्भूयादित्यभिप्रायेण विदधाति । शब्दार्थतत्त्वकोविदाः तमाचार्याभिप्रायं जानन्तोविपश्चितः तत्तच्छब्दप्रयोगस्थले ऽर्थविशेषं बुद्ध्वा, प्रवचनादिसमये परानपिबोधयन्त आत्मानमन्यांश्चा ऽऽनन्दयन्ति । कात्यायनोपि 'अर्थाच्चाऽसन्निहित' इत्यादिवचनैरर्थविशेषे प्रत्ययोत्पत्तिं नियमयति, 'उपदेशेऽजनुनासिकइत्' (पा०.सू०.१-३-२) इति सूत्रे उपदेशपदं करणघञन्तं विवक्षितार्थविशेषबोधकं भवति अतः 'उपदेशने' ऽजिति कात्यायनवचनं नारम्भणीयम्, सर्वनामसंज्ञाया अन्वर्थत्वात् 'संज्ञोपसर्जनीभूता' इति वचनं नारंभणीयम्, करोति कर्तृकर्मव्यपदेशानितियोगेन क्रियेत्यस्यलाभः, उपपदमितिमहासंज्ञाकरणात् 'कर्मण्यण्' (पा०. सू०. ३-२-१) इत्यादि विधेरपि पदविधित्वसंभवेन 'उपपदविधौ समर्थवचनं न वक्तव्य' मित्यादिवदति भाष्यकारः । अतो ज्ञायते परवाक्ययोरखण्डत्वं, पदतो वाक्यतोवाऽखण्डार्थोपस्थितिर्भवतीत्येतत् मुनित्रयासंमतमिति ॥

यदि शब्देनाखण्डस्यैवार्थस्योपस्थितिः न तत्र शास्त्रीयकार्योपाधिभूतार्थ-

विशेषानुगतिरित्युच्यते, तर्हि— अर्थविशेषोपाधिना कार्यानुशासनम् ; अन्वर्थसंज्ञाकरणम्, संज्ञाया अन्वर्थत्वविवरणं च निरर्थकमेवस्यात्। शब्दस्वभावसामर्थ्यमज्ञात्वा शास्त्रमकरोत् आचार्य इति अज्ञताच आचार्यस्य कल्पिता स्यात्। प्रवचनादौ पाणिनीयं शास्त्रमनुसृत्य अर्थविशेषं वदन्तोऽशाब्दमर्थं वदन्तीति निन्दनीया भवेयुः। किंच — राजपुरुषादिपदैरपि 'तत्त्वमस्या' दिना वाक्येन निर्विशेषाऽखण्डब्रह्मबोधवत् भेदसंसर्गानवच्छिन्नपुरुषव्यक्तिमात्रबोधे विवक्षितार्थाप्रतीत्या व्यवहारोच्छेदः।

ननु—सर्वमिदंमायिकमिति वदतां न काचिदनुपपत्तिरस्माकमिति वाच्यम्—तथावादे मुनित्रयवचनाभावात्। शब्दानां सावयवत्वं समर्थसूत्रोद्योते 'कोचदित्यादिना प्राहु' रित्यन्तेन ग्रन्थेन समर्थितं नागेशेन, तत्र किमिदं स्वमतम्, उतान्यदीयमिति विचारोऽन्यः।

शब्दार्थयोरखण्डत्वं श्रुत्यादीनां न संमतम्।
इत्याहुःकोविदास्तत्र शब्दनां योगदर्शनात् ॥ १ ॥
नानार्थोपाधिना कार्यं विदधानस्य पाणिनेः।
कुर्वतो ऽन्वर्थसंज्ञांच तयो र्नाऽखण्डतामता ॥ २ ॥
विवृण्वानोऽन्वर्थसंज्ञां योगादेव पतञ्जलिः।
दर्शयन् वार्तिकार्थस्य लाभं नेच्छत्यखण्डताम् ॥ ३ ॥

( १३ - भेद निरूपणम् )

ननु — 'यद्यपि — भेदोनिरूपयितुमशक्यः, तथाहि घटःपटाद्भिन्न इति भेदज्ञानं भिन्नत्वेनगृहीतधर्मिप्रतियोगिज्ञानपूर्वकं, तत्र स भेदोऽयमेव चेत् आत्माश्रयः, भेदान्तरं चेत् तदपि भिन्नयोरेव धर्मिप्रतियोगिनो ज्ञातव्यम्, स चेत् पूर्वभेद एव तदा अन्योन्याश्रयः, तृतीयो भेदो ऽन्यश्चेत् चक्रकापत्तिः, भेदपरंपरास्वीकारे ऽनवस्था, अन्तिमभेदाऽसिध्या मूलभूतभेदपर्यन्तमसिद्धे र्मूलक्षयात्। अत एव — भेदस्या ऽसत्सामान्यशब्देन कैयटादौ[१] व्यवहारः। असत्त्व-

१. नञ्सूत्रे यदात्वसत्सामान्यवृत्तिर्नञितिकैयटः, असत्सामान्यमभावो भेदः तत्रासत्त्वं निरूपयितु मशक्यत्वात् केवलान्वयित्वं सामान्यत्वमिति उद्योते। आत्माश्रयचक्रकानवस्थाः तत्रोक्ताः।

मुक्तरीत्या, सामान्यत्वं च केवलान्वयित्वात् । तथापि अविचारितरमणीयेनैव-मायिकेन भेदेन व्यवहार इति व्यावहारिकस्यैवसत्त्वेना ऽक्षतिः । घटाद्यर्थस्य घटादिपदवाच्यत्ववत् । अन्यथा – घटत्वाश्रयत्वेन अयं घटः, घटवृत्तित्वेन च इदं घटत्व ' मित्यन्योन्याश्रयत्वात् । पदार्थमात्रस्या ऽविचारितरमणीयस्य अनिर्वचनीयस्यैव व्यवहारप्रयोजकत्वात् । अत एवोक्तं श्रीहर्षेण —

[1]समस्तलोकशास्त्रैकमत्यमाश्रित्यनत्यतो: ।
कातवास्तुगतिस्तर्कै र्वस्तुधीव्यवहारयो: ॥ १ ॥
अनिर्वक्तव्यतावादपादसेवागतिस्तयो: ।
यथा सतोऽजनिर्नैव मसतोऽपि जनिर्नच ॥ २ ॥
जन्यत्वमेव जन्यस्या ऽनिर्वाच्यत्वसमर्पकम् इति ।
[2]भेदसत्यपरस्तर्को भेदमाया[3]परोऽपर: ॥ १ ॥
भेदसत्यपरस्तर्को ह्यसन् वेदविरोधत: ।
ए[4]कविज्ञाननिगमा न्नेह[5]नानेति च श्रुतेः ॥ २ ॥

इत्यल ' मिति ग्रन्थेन अनिर्वचनीयसर्वस्वाख्यश्रीहर्षकृतखण्डनखाद्य-ग्रन्थसंमतिप्रदर्शनपूर्वं पदार्थसामान्यं तत्रापि भेदस्वरूपमनिर्वचनीयं (मायिकं मिथ्या) इति नञर्थवादे मञ्जूषायां समर्थितत्वेन, भेदपदार्थस्यैवाऽभावेन भेदपरतया श्रुत्यादीनां योजना नयुक्तेति जीवेशभेदासिद्धिरिति चेत् —

अत्र वदन्ति – सत्यमुक्त मित्थं नागेशेन, अथापि – तदुक्तिं नाद्रियन्ते प्रमाणशरणाः पदार्थतत्त्वविचारचतुरा मनीषिणः । तथाहि – श्रीहर्षोनागेशश्च ' समस्तलोकशास्त्रैकमत्यमाश्रित्यनत्यतो 'रित्यादि वदन् अनुवदन् सत्त्वेन सर्व-प्रमाणासिद्धस्य परिदृश्यमानसमस्तस्य प्रपञ्चस्य अनिर्वचनीयत्वं (मायिकत्व-मसत्त्वम्) समर्थयते । ततश्च ब्रह्मातिरिक्तं निखिलं जगत् असदिति तयोरान्त-रोऽभिप्राय इति तदीयग्रन्थतः प्रतिपद्यते । ततश्च तद्वचनैरेव तत्प्रणीतयोर्ग्रन्थ-

१. एतेषामर्थः कलादितोबोध्यः । २. भेदः सत्यः प्रतीतेः ब्रह्मवत् इत्यादिभेद-सत्यत्वपरस्तर्कः । ३. भेदो मिथ्या - भेदत्वात् चन्द्रभेदवदित्यादिः । ४. ' येनाऽश्रुतं श्रुतं भवती ' (छा०. ६ - १ - १) इति श्रुतिः । ५. बाजसनेयश्रुतिरियम् ।

योः, तत्र साधितायाः सर्वानिर्वचनीयतायाश्च (असत्यतायाः) प्रथमतः अनिर्वचनीयता (मायिकत्वं असत्यता) प्राप्नोति तद्ग्रन्थतत्प्रतिपादितसर्वानिर्वचनीयतयोः सर्वपदार्थाऽन्तः पातित्वात्, सर्वानिर्वचनीयताया अनिर्वचनीयतासिद्धौच सर्वेषांपदार्थानांभेदस्यच सत्यत्वं सिध्यतीति परेषामिष्टाऽसिद्धिः, अस्माकमभिमतासिद्धिश्च भवति।

किंच – भेदपदार्थएवनेति वदन् वादी प्रष्टव्यः, किं भवान् घटपटादीनां पादार्थानां सर्वेषामेकत्वात् (स्वतो भेदाभावात) भेदोनेतिब्रूते, अथ– नजानेऽहं वस्तूनां भेदम्, अतः स नेति।

आद्ये –' वैचित्र्येणपदार्थाना' मिति सन् सूत्रे, पदार्थानां विचित्रशक्तियोगा' दिति सरूपसूत्रेच, कैयटात्, 'पदार्थानां विचित्रशक्तित्वात्' इत्यन्येषामभियुक्तानां व्यवहारात्, स्वाभाविकमेतदिति हयवर' डिति सूत्रीयमहाभाष्याच्च प्रतिपदार्थं तत्तत्पदार्थमात्रविश्रान्तस्वस्वातिरिक्तसर्वव्यावर्तकशक्तिस्वभावादिपदवाच्यधर्मविशेषो विद्यत इति प्रतीतेः प्रतिपदार्थं भेदः स्वतएववर्तत इति सिध्या सर्वेषामेकत्वबुद्धे भ्रमत्वात्। नद्वितीयः – सत्यत्वेन सर्वप्रमाणासिद्धवस्तुमात्रस्याऽनिर्वचनीयता (असत्यता) साधनाय प्रवृत्तस्य भवतो, भवतः प्रयाणभूतस्यच प्रतीत्यप्रतीती वस्तुसत्तातदभावनियामाके न भवत इति भवदाद्यप्रतीते रप्रयोजकत्वात्। भवान् सच नैपथ्यान्तरमास्थाय प्रच्छादितप्रकृतिः सर्वासत्त्वसाधनाय स्वैरं प्रावर्तत इति भवदीयग्रन्थपरिशीलनशालिनांस्पष्टं विदितं भवति, तव त्वत्सखस्येचयान् विशेषः – स्फोटाख्यं ब्रह्मैकं वस्तुवास्तवम्, अन्ये नामरूपप्रपंचास्सर्वेमायिका इति भवान् भाषते, त्वत्सखस्तु – स्वतःसिद्धं ब्रह्मैकं वस्तु वास्तवम् अन्येसर्वेऽनिर्वचनीयाः (मिथ्या) इति संगिरते इति। यदि भवदीयं मतमाश्रयन्तेलोकाः, तर्हि–अयं ब्राह्मणो ऽयमब्राह्मणः, इयं माता, इयं दयिता, इयंप्रजावती, इयंजाया, इदंपयः, इयंसुरा, अयंपतितः, अयं न पतितः, इदं सुवर्णं इदं न सुवर्णम्, इयंगम्या इयं न गम्या, इदंभोज्यं इदं न भोज्यम्' इत्यादि विविधलोकव्यवहारसिद्धभेदवद्वस्तुविवेकशून्याः 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' (या॰ स्मृ॰ ३ - २१९) इत्याद्यार्षवचनेषु, 'सत्यंवद, धर्मंचर, न सुरांपिबेत्' इत्यादि

श्रौतवचनेषु च प्रामाण्यबुद्धिहीनाः कर्तव्याकर्तव्यविवेकशून्यहृदया ब्रह्महननाद्यकार्यं कुर्वाणा महान्तमनर्थमाप्नुयुः । ततश्च – श्रौतस्मार्तविधिनिषेधपराणांशास्त्राणाम्, तदनुसारितथाविधविविधप्रायश्चित्तविधीनां च विषयाभावप्रसंगेन शशविषाणमस्तीति वाक्यस्येव अविद्यमानार्थबोधकत्वरूपमप्राण्यं स्यात् । (अप्राण्यबुध्यातेषामनुष्ठानाभावेन, अननुष्ठानरूपाऽप्रामाण्यं च स्यात्) ननु – सर्वानिर्वचनीयतावादिना मस्माकं सर्वमिदमिष्टमेवेति चेत्, न–एवंवदतां मते स्फोटब्रह्मातिरिक्तपदार्थसामान्यस्य मिथ्यात्वेन श्रुतिस्मृतीतिहासाद्यागमस्याप्यनिर्वचनीयत्वात् (मायिकत्वात् असत्यत्वात्) स्फोटब्रह्मणोः साधकप्रमाणाभावेन स्फोटस्वरूपस्य, ब्रह्मणश्च (ईश्वरस्यच) असिध्यापत्तेः । ततश्च – स्फोटाख्यं शब्दब्रह्मैव जगदात्मना विवर्तते, स्वतःसिद्धे चिदात्मनि ब्रह्मतत्वे केवले भारमवलंब्य' (२३-२१ म.) इत्यादिस्वस्वसखोक्ते रसंगतिः । नच– 'स्वतःसिद्ध' इत्युक्तत्वेन प्रमाणसापेक्षतातत्सिद्धौ नास्तीति वाच्यम्–कानाम तत्र स्वतःसिद्धतेति अनुयोगे सर्वाऽनिर्वचनीयतावादिना सा निर्वक्तुमशक्येति तस्यतत्त्वाऽसिद्धिः यदिनिरुच्यते तदासर्वानिर्वचनीयता सिद्धान्तभङ्गेन अपसिद्धान्तः स्वव्याहतिः, ब्रह्मस्वरूपस्यैवा ऽसिध्या शून्यवादिमतादवैलक्षण्यंच । न च – जगति आरोपितं सत्त्वं ब्रह्मचाङ्गीकुर्मोवयम्, तेतु तद्द्वयं नाङ्गीकुर्वन्तीति अस्ति महद्वैलक्षण्यमिति वाच्यम् – सत्त्वस्यारोपे तन्नास्तीत्येवोक्तं भवति प्रमाणसामान्यस्य तवमतेऽसत्त्वेन ब्रह्मसत्ताबोधकप्रमाणाभावेन ब्रह्मापि नास्तीत्येवोक्तं भवतीति वैलक्षण्यस्य दुरुपपादत्वात् । प्रमाणप्रमितंसत्त्वं प्रतिषिध्य आरोपितंसत्त्वं वदन् विशेषतः श्लाघनीयः । अगतिका हि गतिरारोपः । ननु – मिथ्याभूतेनापि श्रुत्यादिप्रमाणेन ईश्वरसत्त्वं बोध्यत इत्यभ्युपगच्छाम इति चेत्, उच्यते – शशविषाणादेरसतोऽसत्त्वमर्थक्रियाकारित्वाभावेनेति हि वदन्ति । ब्रह्मसत्त्वस्याऽर्थरूपत्वेन तत्कारिणः श्रुत्यादेरसत्त्वाङ्गीकारे असत्त्वलक्षणस्य वेदादावसत्त्वेना ऽव्याप्तिप्रसंगः, भ्रमप्रकारत्वं मिथ्यात्वमिति वदतोपि तस्याऽसत्त्वं वक्तुं न शक्यम्, असत्त्वस्योक्तरीत्यैव वक्तव्यतया उक्तदोषस्यैव प्रसंगात् । किंच – मिथ्याभूतेनापि प्रमाणेन ब्रह्मसत्यता बोध्यत इत्यंगीकारे अविशेषात् सर्वेषामपिपदार्थानां तेन सत्यता वक्तुंशक्या । किंच – सर्व-

मिथ्यात्वबोधकप्रमाणस्य मिथ्यात्वसाधकप्रमाणाभावात् स्फोटाद्यतिरिक्तस्य 'नेह-नाने' ति वाक्यस्यसत्त्वेन स्फोटादेरद्वितीयत्वासिद्धिः। न च—नेहनाने' ति श्रुतिः अन्येषांमिथ्यात्वंबोधयन्ती स्वस्यापितत्त्वंबोधयतीति वाच्यम् – 'पूर्वत्राऽसिद्ध' (पा०.सू०.८-२-१) मिति सूत्रे– पूर्वत्रासिद्ध 'मितिशास्त्रं स्वस्या ऽसिद्धत्वं प्रतिपादयेत् यदि, तर्हि सर्वेषांसिद्धत्वा त्सूत्रारम्भ एवा ऽनर्थकःस्या' दिति कैयटोक्तरीत्या सर्वमिथ्यात्वबोधकस्य स्वस्य मिथ्यात्वबोधने सर्वेषामितरेषां मिथ्यात्वाऽसिद्धेः 'नेहनाने' ति वाक्यस्य वैयर्थ्यापातात्[1]। ननु—अस्ति व्यावहारिकोभेदः सर्वत्रेति चेत्, अत्रवक्तव्यम् – किं व्यावहारिकत्वमारोपितत्वम्, उत पुरुषव्यापाराधीनं धर्मान्तरम्, नोभयम्– 'स्वभावसिद्धमेत' दिति पूर्वोदाहृतमहाभाष्यादिना भेदस्य स्वाभाविकस्यैव सर्वत्र अस्तितासिद्धेः आरोपितत्वपुरुषव्यापाराधीनत्वयोस्तत्राऽभावात्। ननु – तेन भाष्येण कथंभेदासिद्धिरिति चेत्, शृणु-तत्रभाष्ये — 'समानमीहमानानांचाऽधीयानानांच केचिदर्थैर्युज्यन्ते, अपरे न....तत्रकिमस्माभिः कर्तुं शक्यम् .... स्वाभाविकमेत' दिति उक्तम्। फलानुकूलेप्रयत्नेऽध्ययनेच समानेपि लभते कश्चित्फलम्, कश्चिन्नलभते इति लोके सर्वेषामनुभवसिद्धं तत्रप्राप्तावप्राप्तौच साधकं प्रतिबन्धकं वा न कश्चिदीष्टेकर्तुम्। किंतु – आजन्मसिद्धस्वभावपदाभिधेयतत्तद्व्यक्तिमात्रविश्रान्तवैलक्षण्यमेव कारणमिति तद्भाष्यार्थः — तदेववैलक्षण्यं व्यक्त्यन्तरात् व्यावर्तकं भेदशब्देन व्यवहृियत इति पदार्थानां परस्परं भेदासिद्धिरिति। न च — भेदेन लोकव्यवहारात्सिद्धिरिति व्यावहारिकत्वं तस्येति वाच्यम् — विचित्रव्यवहारमूलभूतभेदे, अस्य व्यवहारस्यहेतुत्वे; व्यवहारसत्त्वे भेदसिद्धिः, भेदसत्त्वेव्यवहारासिद्धिरित्यन्योन्याश्रयात्। व्यवहारान्तरं पूर्वभेदेकारणं चेत्, भेदव्यवहारपरंपराकल्पनापत्त्याऽनवस्था। ततश्च – भेदःपदार्थस्वभावएवेति सिद्धम्। इदं सर्वमभिप्रेत्यैवोक्तमभियुक्तैः — 'भिन्नाश्चाभिन्नधर्माश्चपदार्थानिखिला अपि' इति। निखिला-

१. मायिकस्यसाधकत्वमन्यत्रनिराकृतं 'मिथ्या याः साधकत्वंच न सिद्धं प्रतिवादिनः' इत्यादिनाऽभियुक्तैः। २. ब्रह्मातिरिक्तं सर्वमसत् पूर्वोत्तरकालयोरसत्त्वादित्याद्यनुमानं तु देवदत्तस्य सभार्यत्वदशायामभार्यात्वसाधकदेवदत्तोऽभार्यः, विवाहात्पूर्वं भार्यामरणानन्तरमभार्यत्वादित्याद्यनुमानसमानयोगक्षेमम्।

अपि पदार्थाः, भिन्नधर्माः = स्वतएव परस्परव्यावर्तकस्वरूपभूतधर्मवन्तः, अत एव भिन्नाः= परस्परप्रतियोगिकभेदवन्त इति तदर्थः। 'भेदस्तुवस्तुनः स्वरूपमेव नतु धर्म' इति अद्वैतपरिभाषाव्याख्यातारोपि। एवंच न आत्माश्रयादिदोषावकाशः। किंच — भेदे व्यावहारिकत्वकल्पनाय तस्याभ्युपगन्तव्यतया तन्निरासप्रयासोविफलः। किंच — भेदोनामकश्चित्पदार्थोन भवेत् तर्हि सर्वेषांतीर्थकरणां स्वपक्षपरपक्षसाधनदूषणयोः प्रवृत्तिर्नस्यात्; नस्याच्च बोधनीयपुरुषाणां स्वपरपक्षयोर्निर्दोषत्वसदोषत्वहेतुकप्राबल्यदौर्बल्य ज्ञानाधीनग्राह्यत्वाऽग्राह्यत्वप्रत्ययः, न भवेतांच तत्र प्रवृत्त्यप्रवृत्ती, निर्दोषत्वादेर्भेदनिबन्धनत्वात्।

किंच — भेदरूपपदार्थानङ्गीकारेस्वपरपक्षसाधनानिरसनयोराग्रहप्रयासौ विफलौ। अयंतु भेदोनेतिवादो बहुभिराचार्यैर्बहुधानिराकृतो विस्तरेण शास्त्रेषु।

किंच — भगवान्बादरायणः आनन्दमयाद्यधिकरणेषु आनन्दमयत्वादिकं जिज्ञास्यस्यब्रह्मणोऽस्तीति सिद्धान्तयन् जीवब्रह्मणोरभेदात् जीवस्यापि अस्तु आनन्दमयत्वादिकमिति चोद्यं 'भेदव्यपदेशात् (१ - १ - १७) भेदव्यदेशाच्चान्यः (१ - १ - २१) शारीरश्चोभयेपि हि भेदेनैनमधीयते (१ - २ - २०) विशेषणभेदव्यपदेशाभ्यांचनेतरौ (१ - २ - २२) भेदव्यपदेशात् (१ - ३ - ५) सुषुप्त्युत्क्रान्त्योर्भेदेन (१ - ३ - ४२) इत्यादिभिरुभयोर्विभिन्नधर्मवत्वेन भेदाद्धेतोः पराकुर्वन् भेदोनाम कश्चित्पदार्थो ऽस्तीति अभिप्रैति।

किंच — 'तुल्यास्यप्रयत्नं सवर्णम (पा०. सू०. १ - १ - ९) स्थानिवदादेशः (पा०.सू०. १ - १ - ५६) पञ्चमीविभक्ते' (पा०.सू०. २ - ३ - ४२) इति, आन्यभाव्यं तु देशकालव्यवायात्, युगपद्देशपृथक्त्वात्। आकृतिग्रहणात्सिद्धम्, रूपसामान्याद्वा' (प्र०. २ - आ०.) इति, तत्र तत्र 'स्वाभाविकमेत' दिति, अभिदधानाः पाणिनिकात्यायनपतञ्जलयः भेदस्वरूपमङ्गीकुर्वन्तीति प्रतीयते। अतो भेदस्वरूपनिराकरणं मुनित्रयवचनविरुद्धम्। तत्र — सादृश्यमतिदेशश्चेतिद्वयं भेदनिबन्धनमिति सुव्यक्तम्, विभक्त इत्यस्य विभागोभेद इति व्याख्यानम्, आन्यभाव्यम् = भेदः व्यक्तीनामानन्त्येन, भेदेनच, सर्वासुव्यक्तिषु शक्तिग्रहासंभवपरिहाराय जातिपक्षः

सादृश्यंचेतिद्वयमाश्रितम् । आकृतिः जातिः, रूपसामान्यं सादृश्यम् । विस्तरस्तुभाष्यादौ बोध्यः । किंच – भेदस्वरूपमेव नास्तीति ब्रुवाणः तत्र मायिकत्वादिकं कल्पयितुं कथमीष्टे, तस्यभेदरूपत्वात् । मायिकोऽयमिति तु ध्रुवागीतिः ।

ननु – 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगति' रिति न्याये अन्यशब्दप्रयोगो ऽभेदेपि सादृश्यं गमयति । अन्यथा – भेदएवसादृश्यसंभवेन 'सदृशाधिकरण' इत्युक्त्यैवभेदलाभात् न्याये ऽन्यग्रहणंव्यर्थंस्यात् । किंच – 'अकर्तरिचे' ति सूत्रभाष्येणाऽभेदेपि सादृश्यमिति सूचित' मिति नञर्थवादमञ्जूषोक्तेः सादृश्योक्ति र्नभेदस्यज्ञापिकेति चेत्, न— 'अभेदेपिसादृश्य' मित्युक्त्या सादृश्यं सर्वत्रभेदमूलकमेव यत्रक्वापि व्यक्त्यभेदे सादृश्यं प्रामाणिकैरुच्यते तत्र कथंचित्तदुक्तिः संघटनीयेतिप्रतीयते संघटनाच एकस्यैवपदार्थस्या ऽऽवृत्या अनेकत्वं संपाद्य साधारणधर्मस्यानेकवृत्तित्वेन सादृश्यं युज्यत इति । ततश्चसादृश्यं भेदनिबन्धनमिति सादृश्यस्य भेदज्ञापकत्वाक्षतेः । नचैवमन्यग्रहणवैयर्थ्यमिति वाच्यम्–अभेदेपि सादृश्यंयुज्येतेति कस्यचिद्वचनं श्रुत्वा भ्राम्येरन् जना इति तद्भ्रमवारणाय भेदेसत्येव सादृश्यं संपन्नं भवतीतिबोधनाय तस्यावश्यकत्वात् । यद्यभेदेपि सादृश्यं सुघटं, तर्हि – इवार्थनिरूपणे 'अनेकवृत्तिधर्मस्यैवसाधारणधर्मत्वेन तत्राऽऽवृत्याएकस्याप्येनकत्वा' दिति मञ्जूषाग्रन्थप्रवृत्तिर्विफलैव । 'अकर्तरिचकारक' इत्यादितु न युक्तं तत्रत्यभाष्येण तथाऽसूचनात्। तत्रभाष्ये ऽस्यविचारस्यैवाकरणात्।

एतेन – सर्वासत्वस्य (मायिकत्वस्य) दुर्वचत्वनिरूपणेन – 'अनेन सर्वस्यजनकत्वादे रवभासएव न वस्तु किंचिदस्तीति स्पष्टमेवोक्तम्, अनादिवासनावशात्, भ्रमविषयमेवतत्, 'यतोवा'इत्यादि श्रुतयोपि अनुवदन्ति.... 'सत्यं ज्ञानम्, आनन्दंब्रह्मे' ति श्रुतयोपि शुद्धचित्तंप्रति 'नेहनानास्ति' इत्यादि श्रुतिसहकारेण धर्मत्यागेन अद्वैतं शुद्धं ब्रह्म बोधयन्ति' (१-प. ३०-३१) इति ग्रन्थेन, प्रथमपरिच्छेदे जगदनिर्वचचीयतां प्रसाध्य, मंजूषाकृत्कृतः प्रपंचासत्वनिष्कर्षः, उदाहृतमंजूषाग्रन्थमुपन्यस्य नञर्थवादे – पायुगुण्डिवैद्यनाथकृतप्रपञ्चासत्यत्वनिष्कर्षश्च दुराग्रहमूलकः स्ववासनामात्रकल्पितः । पदवाच्यत्वस्य अविचारितरमणीयताप्रयोजकत्वे उपदिष्टार्थमात्रस्यासत्त्वापत्त्या सर्वैरपिवाचंयमैरेव भवितव्यं व्यव-

हारस्याऽप्रयोजकत्वादिति सर्वव्यवहारोच्छेदप्रसंगः । 'घटत्वाश्रयत्वेने' त्यादि दूषणमपि हेतुमात्रेणपदार्थान् साधयतो हैतुकान् प्रत्येव वक्तव्यं नतु श्रुत्यादि-प्रमाणसिद्धार्थानाश्रित्यव्यवहरतः प्रमाणशरणान् प्रति एतैः केवलेन हेतुना पदार्थ-स्यासाधनात् । घटादिपदवाच्यत्वसमानाधिकरणधर्माश्रयोऽर्थो घटादिरिति ज्ञानव्यवहारावित्यदोषाच्च । यदत्रभेदस्यासत्त्वेकैयटोप्यनुकूल इति 'भेदस्यासत्सामा-न्यशब्देने' त्यादितदीयव्यवहारोपन्यसनं तच्चिन्त्यम् – तस्यकैयटस्य एतदभि-मतार्थसमानार्थकत्वाभावात्, तथाहि – 'यदाऽसत्सामान्यवृत्तिर्नञ्ब्राह्मणादिभिर्वि-शेष्यते ब्राह्मणत्वेनाऽसन् अन्यथासन् अर्थः क्षत्रियादि' रिति तदीयोग्रन्थः । तत्र असत्पदार्थस्य 'ब्राह्मणत्वेनास' न्निति तेनैवविवृतत्वात् भेदस्यासत्त्वं न स्वरूपतः, किंतु — स्वप्रतियोगितावच्छेदकब्राह्मणत्वादेः स्वानुयोगिनिक्ष-त्रियादौ अविद्यमानतासमर्पकत्वेनेति तदाशयोवगम्यते । अत्रस्वं भेदः । किंच – भेदस्य स्वरूपतोऽसत्त्वेकेवलान्वयित्वानुपपत्तिः अस्यात्यन्ताभावाऽप्रति-योगित्वरूपत्वेन असत्त्वस्य च तत्प्रतियोगिस्वरूपत्वेन परस्परविरोधात् । ततश्च अस्य कथमनुकूलः कैयट इति विभावयन्तु सूरय इति । श्रुतिस्मृतीतिहासपुराणानां सर्वेषामपि प्रमाणानां सगुणब्रह्मबोधकत्वेन, कस्मिन्नपि ब्रह्मधर्मे कस्यापि भ्रमा-नुदयात्, ब्रह्मगतजगज्जनकत्वेधर्मेभ्रमाभावेन 'यतोवा' इत्यादीनां तटस्थलक्षणबो-धकत्वभ्रमविषयार्थानुवादकत्वाभावात्, अतएव– 'सत्य'मित्यादे धर्मत्यागेन शुद्धब्र-ह्मबोधकत्वाभावात्, 'नेहनाने'ति श्रुते ब्रह्मतद्गुणयोरपृथक्स्थितिरूपभेदाभावप्रति-पादकत्वेन स्वगतभेदराहित्यार्थकत्वेन च ब्रह्मातिरिक्तपदार्थासत्त्वस्य, ब्रह्मणि धर्मा-भावस्य चाऽबोधकत्वात्, 'यतोवे' त्यादीनां श्रुतीनां मंजूषाकृदभिमतार्थपरतया सूत्रकृद्भ्यां श्रीव्यासपाणिनिभ्यामव्याख्यातत्वाच्च सर्वस्यास्यनिर्मूलत्वात् । अतो दर्शि-ता श्रुतियोजना युक्ता । एवंच – घटपटादिपदार्थानां, भेदस्यच प्रमाणसिद्धत्वेन मायिकत्वे मानाभावात्, अविचारितरमणीयेनमायिकेन भेदेन व्यवहारः, अविचा-रितरमणीयस्यैव पदार्थमात्रस्य व्यवहारप्रयोजकत्व' मित्युक्तिरेव आपातरमणीया पृथक्जनमोहिकेति कृतं विस्तरेण ।

पदार्थानां मायिकत्वे प्रमाणं नास्ति किंचन ।
भेदे पदार्थे मानंतु सूत्रं, भाष्यंच दर्शितम् ॥ १ ॥

तस्माद्भेदपदार्थश्च सूत्रकारादिसंमतः ।
तस्माद्भेदपरत्वेन श्रुतीनां योजना वरा ॥ २ ॥

( १४ - असत्त्वे न्यायसूत्रसंमतिनिरासः )

यच्च मञ्जूषायां तृतीयपरिच्छेदे — 'गौतमोपि स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः (न्या०. सू०. ४ - २ - ३१) मायागन्धर्वनगरमृगतृष्णावद्वा (न्या०. सू०. ४ - २ - ३२) हेत्वभावादसिद्धिः' (न्या. सू. ४ - २ - ३२) इत्याहेत्यादिना, 'अन्यत्रविस्तर' इत्यन्तेन ग्रन्थेन प्रपञ्चाऽसत्यत्वे (मायिकत्वे) गौतमसंमतिप्रदर्शनम् । अत्राहुः—'प्रत्यवतिष्ठते विज्ञानवादी' ति वाचस्पतिनाऽवतरणात् आद्यसूत्रद्वयं पूर्वपक्षप्रापकम्, तुतीयंतु सिद्धान्तसूत्रम् । यथा स्वाप्नोऽभिमानः(ज्ञानं)निर्विषयः,यथावा—भ्रमो निर्विषयः,तथा जाग्रति प्रमाणप्रमेयाभिमानोपि निर्विषयः । स्वाप्नादिवस्तुवत् जाग्रद्दशायामपि घटपटादिवस्तु मायिकमेवे (असदेवे) ति भावः । एवं प्राप्ते सिद्धान्तमाह — हेत्विति ॥ प्रबोधादावनुपलम्भरूपहेतुसत्त्वेन स्वाप्नादीनामसत्त्वेपि जाग्रतिप्रमाणादीनामुपलम्भेन अनुपलम्भरूपहेत्वभावात्, असिद्धिः = असत्त्वासिद्धिः, असत्त्वसत्त्वयोरनुपलम्भोपलम्भौ हेतू तत्र बाधाऽबाधाविति भावः । स्वाप्नादेरुक्तमसत्त्वमभ्युपेत्य सिद्धान्तसूत्रार्थो वर्णितः, वस्तुतस्तु — अनुपलम्भहेत्वभावात् असिद्धिः = जाग्रति प्रतीयमानवस्तुनः असत्त्वाऽसिद्धिः, स्वाप्नस्यापि उपलम्भात् अनुपलम्भरूपहेत्वभावात्, असिद्धिः = असत्त्वाऽसिद्धिः, स्वाप्नस्यैवाऽसत्त्वाभावेन, हेत्वभावात् = दृष्टान्ताऽभावात्, असिद्धिः = जाग्रद्वस्तुनो ऽसत्त्वसाधकानुमानाऽसिद्धिः, (अनुमानानुत्थितिः) एवंच – स्वप्ने, भ्रमे, जाग्रतिच वस्तूनामसत्त्वं नेतिगौतममतमिति न्यायभाष्यादितो लाभात् नाऽनिर्वचनीयतावादो गौतमसंमत इत्यवसेयम् । एवमक्षरार्थेसति 'जाग्रदवस्थायां समीपएवोपलभ्यमानानां यावद्व्यवहारमबाध्यमानजातीयानां चित्तव्यतिरेकेणोपलभ्यमानानां तत्त्वे (मायिकत्वे असत्त्वे) न हेतुरिति भाष्यवार्तिकादौ सिद्धान्तत्वेन व्याख्यातम् । एवंच — अनिर्वचनीयतावादस्य सूत्रसंमतत्वमुक्तप्राय' मिति अनिर्वचनीयत्वे गौतमस्य तात्पर्यकल्पनमयुक्तम् । तद्भाष्यादौ 'यावद्व्यवहारमबाध्यमानजातीयाना' मिति वाक्यस्य, एवमर्थकवाक्यान्तरस्यवा

ऽदर्शनात् , तत्राऽदृष्टवाक्याध्याहारेण सूत्रं व्याख्याय 'भाष्यादौ व्याख्यात'मित्यभिधानं बोद्धृषु प्रद्वेषं सूचयति; विरुद्धार्थप्रतिपत्त्या विमुह्यन्तु इमे इति । वार्तिकेच — 'सर्वएव मिथ्याप्रत्यया भविष्यन्तीतिब्रुवाणः प्रधानमनुयोक्तव्यः, नचाऽनिष्प्रधानं पश्याम' इत्युक्तम् । अनेन — यस्यकस्यचित्प्रत्ययस्य सद्विषयकत्वेन समीचीनप्रत्ययत्वमभ्युपेयम् , अन्यथा अभिमतप्रत्ययस्य मिथ्यात्वाऽसिद्धिरित्युक्तं भवति । किंच — 'स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः (३४) मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाऽभिमानप्रणाशवत्प्रतिबोधे' (३५) इत्युत्तरसूत्राभ्यां स्मृतिसंकल्पस्वप्नभ्रमेषु विषयाणां सत्यत्वमेवोक्तं गौतमेन । तत्र मिथ्योपलब्धिस्वप्नाभिमानयोर्नाश एवोक्तः, नतु विषयस्याऽसत्त्वम् । सूत्रार्थस्तु भाष्यादितो ज्ञातव्यः । अतएव — कुसुमाञ्जलौ पञ्चमेस्तबके ग्रन्थोपसंहारे स्वाप्नज्ञानस्य स्मृतित्वं निरस्य 'तस्मादनुभवोऽसौ स्वीकर्तव्यः, अस्तिच स्वप्नानुभवस्यापि कस्यचित्सत्यत्वं संवादा' दित्यादिना उक्तं स्वाप्नस्य सत्यत्वम् ।

यदपि उक्तम् — 'तस्य च श्रुतिमूलत्वेन हेत्वभावादसिद्धि' रित्यनेन खण्डनाऽसंभवाच्चे' ति श्रुतिमूलत्वमनिर्वचनीयत्वस्य, तदपि चिन्त्यम् — प्रपञ्चानिर्वचनीयतापरश्रुतेरभावेन तस्य तत्सिद्धत्वाभावात् । भगवता महर्षिणा व्यासेन द्वितीये समयपादे बाह्यार्थानामभाववादिमतस्य 'नाभाव उपलब्धे' (२-२-२७) रित्यादिपञ्चसूत्र्या प्रत्याख्यातत्वेन अस्य वादस्य श्रौतत्वाभावावगमाच्च । यद्ययंवादः श्रौतःस्यात् तर्हि श्रुत्यर्थनिर्णयाय प्रवृत्तो स महर्षिःश्रौतं तमर्थं कथं प्रत्याचक्षीत । तत्रापि समयपादे निरासात् वेदप्रामाण्यमनभ्युपयतः कस्यचिन्मतमिदमिति स्पष्टम् । 'नेहनाने' (४-११) ति काठकवाक्यस्य, वाजसनेय वाक्यस्यच जगदनिर्वचनीयतायां न तात्पर्यं, सूत्रकाराभ्यां[2] तथाऽव्याख्यातत्वादित्युक्तम् । किंच — अक्षरमर्यादयापि न तादृशार्थलाभः । तथाहि —

नानाशब्दस्य भिन्नमित्यर्थे इहेत्यस्य परमात्मनीत्यर्थेच, इह = ब्रह्मणि, किंचन भिन्नंवस्तु नास्तीति वाक्यार्थोवाच्यः, एवंचसति पार्थक्येन जगतः सत्ता नेति लभ्येत नतु प्रपञ्चो नेति । ततश्च ब्रह्माश्रितमेव जगदिति भावः । एतच्चोक्तं भगवता — मयि सर्वमिदंप्रोतं[3] सूत्रे मणिगणा इवे (गी०. ७-७) ति ।

१. प्रधानं सद्वस्त्विति न्यायभाष्यव्याख्यातारः । २. व्यासपाणिनिभ्याम् । ३. सूक्ष्मदर्शिनामपि दर्शनाऽविषयसंयोगविशिष्टम् । ग्रथितमिति शाङ्करे, आश्रितमिति रामानुजीये ।

एतेन — प्रतिपन्नोपाधौ निषेधात् जगतोऽभावएवसिद्ध इति परास्तम् । निषेधे-नोक्तार्थालाभात् । अस्यनियमस्य अन्यमतासिद्धत्वेन शाब्दिकपूर्वाचार्यैः पाणिनिप्रमुखै रीदृशार्थानङ्गीकारात्, 'भ्रमप्रकारत्वंमिथ्यात्व' मित्येव नागेशोक्तेः निषेधेन जगतः भ्रमप्रकारताऽलाभात् । नेहेत्यादिश्रुतीनां पाणिनिपतञ्जलिभ्यामव्याख्यातत्वेन नागेशाभिमत एवार्थः श्रुतेरिति राजाज्ञादेरभावेन श्रुति रन्यथापि योजयितुं शक्या । तथाहि — श्रुतौ नानाशब्दो भावप्रधानो भेदपरः, 'लोकेच नानाशब्दस्य पृथक्भावाभिधायित्वा' दिति 'विनञ्भ्यां नानाञौ न सहे' (पा०. सू०. ५ - ३ - २७) ति सूत्रेकैयटोक्तेः भेदपरत्वे न विप्रतिपत्तिः । 'मनसैवेदमाप्तव्य' मिति काटके पूर्ववाक्यम् । इदं बोध्यम् — 'यतश्चोदे ती'ति नवमेन मन्त्रेण प्राणपदवाच्यस्य परमात्मनः सर्वदेवाधारताऽभिहिता, 'यदेवेहे' ति दशमेनमन्त्रेण सर्वदेवाधारस्यैव हरेः अत्रामुत्रचलोके सर्वाधारत्वं सर्वनियामकत्वंच बोधयता, लोकद्वयगतभगवद्रूपमभिन्नमेव तत्र भेदज्ञानिनो महदनिष्टमिति बोधितम् । अयमेकादशोमन्त्रः अभिन्नं ब्रह्मस्वरूपं ज्ञातव्यं तत्र ब्रह्मणि अणुमात्रं भेदो नेति पूर्वमन्त्रसूचितमेव कण्ठतो वदन् भेदज्ञानिन उक्तमेवाऽनिष्टं फलं द्रढयति । पूर्वमन्त्रोक्तमभिन्नं[2] ब्रह्मस्वरूपमिदमापरामृश्यते । इदम् = अभिन्नं ब्रह्मस्वरूपं, मनसा = शुद्धेनचेतसा, आप्तव्यम् = चिन्तनीयम्, इह = अत्रामुत्रचविद्यमाने ब्रह्मणि, किंचन नाना = भेदलेशोऽपि नेति योजना । भगवत्स्वरूपाणांभेदो नेतितात्पर्यम् । भेदज्ञानिनः फलमाह — मृत्योरिति ॥ यः अधिकारी, इह = उभयत्र वर्तमाने परमात्मस्वरूपे, नानेवपश्यति = भेदोऽस्तीव पश्यति, सः, मृत्योर्मृत्युम् = मृत्योरपि मृत्युप्रदां कष्टतरां दशां प्राप्नोतीत्यर्थः । वाजसनेयेतु मनसैवानुद्रष्टव्यं नेहे (६ - ४ - १९) त्यादि पठ्यते । तत्र — 'ते निचिक्युब्रह्मपुराणमग्र्य' मिति पूर्ववाक्यात् ब्रह्मेत्यनुवृत्तं, प्रथमान्ततया विपरिणमितव्यम् । 'यस्मिन्पञ्चपञ्चजना आकाशश्चप्रतिष्ठित' (६ - ४ - १७) इत्यादिना पञ्चजनाधारतयोक्तं ब्रह्म, मनसैव = गुरूपदेशपूर्वं शास्त्रमभ्यस्य ब्रह्मस्वरूपे न भेदलेश इति ज्ञानरूपसंस्कारसंस्कृतेन चेतसा, अनुद्रष्टव्यं = चिन्त-

---

१. ब्रह्माश्रितमितितात्पर्यकत्वेन, वक्ष्यमाण हेतुनावा । २. मन्त्रार्थमाह — पूर्वेत्यादिना ।

नीयम्, इह = द्रष्टव्ये ब्रह्मणि । शिष्टं स्पष्टम् । एवंच – 'नेहनाने' ति वाक्यं ब्रह्मरूपयोर्भेदाभावज्ञापकं, नतु ब्रह्मातिरिक्तवस्त्वभावबोधनद्वारा जगतोऽसत्त्वबोधकमिति मन्तव्यम् ।

यद्वा — 'विनञ्भ्यां नानाञौनसहे' ति सूत्रेण नसहार्थे विनानानाशब्दयो र्व्युत्पादनेन विनापर्यायो नानाशब्दः । नसहार्थश्च साहित्याभावः, 'नानात्वं, सहत्वं, यौगपद्यमित्यादौ नानाशब्दोऽसहभूते सहशब्दं सहभूते, वृत्तौवर्तते, अतोऽसहभावादौप्रत्यय' इति 'तस्यभाव' इति सूत्रोद्योतोक्तेः । इहेति न ब्रह्मपरं किंतु — प्रपञ्चपरम् । 'मनसैवेदमाप्तव्य' मिति पूर्ववाक्यादिदमित्यनुषज्यते । तच्चेह नानाशब्दयोगात् 'पृथग्विनानानाभिस्तृतीयान्यतरस्या' (पा०. सू०. २ - ३ - ३२) मिति सूत्रेणद्वितीयान्तम् । इह = प्रपञ्चे, किंचन वस्तु, इदनाना = परमात्मना विनाभूतं न, किंतु — ब्रह्माऽविनाभूतमेवेति काठकवाक्यार्थः । वाजसनेयेतु — 'ते निचिक्युर्ब्रह्म पुराणमग्र्य' (१६) मिति वाक्यात् ब्रह्मपदमनुषज्यते तच्च नानाशब्दयोगात् द्वितीयान्तम् । योजना काठकवाक्यवत् । अत्रयोजनायामविनाभावः शाब्दः, पूर्वयोजनायांत्वार्थः । सर्वपदार्थानां भगवदविनाभूततया वर्तनं 'न तदस्ति विनायत्स्या न्मया भूतं चराचर' मिति (भ०. गी०. १० - ३९) इति भगवद्वचनासिद्धम् । मृत्योरित्युत्तरवाक्येपि इहपदं प्रपञ्चपरमेव । इह – प्रपञ्चे, नानेव = भगवद्विनाभावोऽस्तीव यः पश्यतीत्यादिरर्थः । प्रपञ्चे भगवदविनाभावाभावं पश्यतो महदनिष्टमापततीतिभावः । अतएव—श्रुतौ इहपदं, नानापदंच सार्थकम् । अन्यथा — 'नेदमस्ति किंचन, अथवा — नास्तिकिंचने' त्येतावतैव ब्रह्मणो ऽन्यन्नास्तीत्यर्थलाभात् किंताभ्याम् ।

अत्रकश्चित् नागेशपक्षपाती — नानाशब्दस्य 'विनञ्भ्या' मिति सूत्रेण नञो नाञ्प्रत्यये निष्पन्नतया तत्सूत्रभाष्ये तस्य प्रत्ययस्य स्वार्थिकत्वव्यवस्थापनात्, भिन्नसंबन्धोऽर्थः, तत्र संबन्धस्य समभिव्याहृतपदबलाल्लाभेन भेदांश एव तच्छक्य इति न विनाशब्दपर्यायत्वं तस्य अतो 'नेहनाने' त्यस्य विनाभूतं नेत्यर्थवर्णनं न युक्तमिति । अत्रेदं वक्तव्यम् —'विनञ्भ्यामसहवाचिभ्यां नानाञौ भवतः स्वार्थे' इति तत्सूत्रभाष्यात् विनानानाशब्दयो रसहार्थे पर्यायत्वं सूत्रभाष्य-

कृत्संमतमिति 'नेहनाने' ति श्रुते र्विनाभूतं नेति व्याख्यानं युक्तं पाणिनिपतञ्जलिसंमतं चेति नागेशानुयायिभ्योऽन्ये वैयाकरणाः । 'नानाविष्णुंमोक्षदो नास्ति-देव' इत्यादौ भिन्नार्थेऽव्युत्पन्नोऽनेकार्थ इवेतिशक्यं वक्तुम् । 'भेदांशएव शक्यो भाष्ये स्वार्थिकत्वोक्ते' रिति वदता भेदार्थकात् नञो नाञ्प्रत्ययइत्युक्तं भवति । तच्चिन्त्यम्–सूत्रे 'ने' त्येववक्तव्ये न सहेति शब्दप्रयोगेण, भाष्ये भेदार्थादिति अविवृत्य 'असहवाचिभ्या' मिति तदर्थविवरणेन च, नञोऽनेकार्थकत्वं तत्र असहवृत्तेर्नञो नाञ्प्रत्यय इत्यर्थस्य लाभेन तदुक्तार्थालाभात् । अनेनभाष्येण सूत्रोपात्तवृत्तिभ्यः प्रकृतिभ्यः उत्पन्नप्रत्ययस्य स्वार्थिकत्वं नतु सूत्रानुपात्तार्थ-वृत्तिभ्य इति नियमलाभेन सूत्रानुपात्तभेदार्थवृत्तेर्नञः प्रत्ययोत्पत्तौ तद्भाष्यस्यासाधकत्वात् । स्वार्थिकप्रकरणे क्वचित् 'अनुकम्पाया' मित्यादिसूत्रविषये सूत्रोपात्तोऽनुकम्पादिरूपोऽर्थो विशेषणतया प्रकृतिबोध्यो भवति, क्वचित्तु — स्वातन्त्र्येण (विशेष्यत्वेन) प्रकृतिबोध्यः यथा — प्रकृतसूत्रविषये ।

यच्च—तत्रैव[1]'अग्र' इत्यादिना अपवर्गेऽपि नैयायिकमते चित्ताविरिक्तसद्वस्त्वभावनिरूपणम्, तदपि मन्दम्—न्यायमते जीवानां नानात्वेन मुक्तौ मुक्तजीवान्तराणां, ब्रह्मणश्च, सत्त्वेन तेषांच सत्यत्वेन, तदा तदभावनिरूपणायोगात् । 'वास्तवौ भेदसामान्यौ (५-आ) भिन्नास्तावदात्मानः, आत्मज्ञानमपवर्गसाधनम्, मुक्तौ स्वरूपेण मुक्तानामवस्थिति' रिति न्यायमञ्जर्याम् (९-आ.) जयन्तभट्टोक्तेः । 'तदभावश्चापवर्गे' (गौ. न्या. ४ - २ - ४५) इति सूत्रेण मुक्तानां शरीरेन्द्रियाणा मभावात् बाह्यार्थानामिन्द्रियसंयोगाभावेन बुध्द्युत्पत्त्यभाव इत्यर्थकेन न मुक्तौमुक्तानां ज्ञानाभावमात्रसिध्या चित्तातिरिक्तपदार्थाभावाऽसिद्धेः । भाष्यादाविदंसूत्र मित्थमेव व्याख्यातम् । सूत्राक्षरार्थस्तु – न प्रसंग इति वर्तते, यत इतिशेषः, प्रकृतत्वात् मुक्तानामिति लभ्यते । अपवर्गे=मोक्षे मुक्तानाम्, यतः, तदभावः=ज्ञानकारणशरीरेन्द्रियाभावः, तस्मात्, न प्रसंगः = बुध्द्युत्पादप्रसंगो नेति । किंच – भाष्यवार्तिकतात्पर्यटीकाप्रभृतिप्रौढप्राचीनन्यायप्रबन्धान् समालोड्य पण्डितप्रकाण्डभट्टजयन्तप्रणीतन्यायमञ्जर्यां न्यायसूत्रतात्पर्यविवृतौ पञ्चमसप्तमाष्टमनवमेष्वाह्निकेषु विज्ञानवादादिनानाकुवादान्निरस्य विज्ञानाद्यतिरिक्तबाह्यसत्पदार्थस्य सप्रमाणं साधितत्वेन 'अनिर्वचनीयतावादो न गौतमसंमतः' । किंच– 'सोऽ-

१. मञ्जूषायामेव । २. ज्ञानाभावे ज्ञानाश्रयत्वाभावेनात्मत्वं तदा कथमितिविभाव्यम् ।

श्रुतेसर्वान्' (त०. उ०. २) इत्यादिश्रुतिभिः, 'संपद्ये' त्यादि ब्रह्म-मीमांसातुर्याध्यायतुरीयपादेनच विरुद्धमिदम्। ततश्च जाग्रदादौ वस्तूनामसत्त्वमिति गौतमीयग्रन्थतो ऽन्यग्रन्थतोपि निर्णेतुं न शक्यम्।

ननु — 'यस्मात्परं ना ऽपरमस्ति किंचिद्यस्मान्नाऽणीयो न ज्यायो ऽस्ति कश्चित्। वृक्षइवस्तब्धो दिवितिष्ठत्येको येनेदं पूर्णं पुरुषेणसर्वम्' (तै०. उ०. ४ - २८, श्वे०. ५) इति मन्त्रेण पूर्णपुरुषात्परापरवस्तुमात्रप्रतिषेधेन ब्रह्मैकमेव वस्तु सत्, तस्मादन्यत्सर्वमसदिति सिध्यतीति चेत्, शृणु सावधानं मन्त्रार्थम्। अयमर्थो मन्त्रस्य— यस्मात् = पूर्णात्पुरुषात्, परं = उत्तमं न, अपरं किंचित् = अवरं वस्तु, अस्ति = वर्तते, वर्तमानमवरं वस्तु किंपरिमाणेनाऽणीयः, उत ज्याय इति शङ्कायामाह–यस्मान्नाणीय इत्यादि॥ यस्मात् अणीयो न, ज्यायश्च कश्चिन्न 'अणोरणीयान्महतोमहीया' (तै०. उ०. ४ - २६ - १, श्वे०. ३ - २०) नित्युक्तेः। कश्चिदिति लिङ्गव्यत्ययश्छान्दसः। एवंच–पूर्वार्धे वाक्यचतुष्टयम्। न च — द्वितीयेपिवाक्ये नञोऽनुषङ्गेण परमपरंच वस्तुनेत्येव मन्त्रतात्पर्य मिति वाच्यम् — 'विभाषामध्येच येविधय स्ते नित्याभवन्ती' ति 'पूङः क्त्वाच' (पा०. सू०. १ - २ - १०) इति सूत्रमहाभाष्योक्तन्यायेन नञ्द्वयमध्यपठिते द्वितीयवाक्ये नञनुषङ्गोनेति वक्तुं शक्यत्वात्। अनुवृत्तौतु संबन्धस्याऽविच्छिन्नतया उत्तरत्रापि एतदनुवृत्त्यैव निषेधलाभेन नञ्द्वयोपादानं व्यर्थं स्यात्। एतेन वाक्येन ब्रह्मातिरिक्तवस्तुमात्राभावे बोधिते वस्तुनोऽभावेन तत्र अणीयस्त्वादिशङ्काया अनुदयेन 'यस्मान्नाणीय'इत्यादि निषेधवाक्यानुत्थितिप्रसंगः, पुरुषातिरिक्तवस्त्वन्तरसत्ताबोधका 'ऽणोरणीया' निति मन्त्रविरोधप्रसंगश्च। एतेन— 'यस्मात्परमपरंचने' त्येकमेववाक्यमिति परास्तम्। उक्तानुपपत्तेर्दुष्परिहरत्वात्। ननु – पूर्वमन्त्रेषु रुद्रश्रुतेः शिवपरोऽयं मन्त्र इति चेत्, आह नाऽत्र तथा मन्तव्यम्–'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन' इति निरुक्त्या रुद्रश्रुते र्वासुदेवपरत्वात्। नच — 'योगाद्रूढिर्बलीयसी' ति न्यायेन रुद्रपदं शिवपरमिति वाच्यम् – 'हिरण्यगर्भं पश्यत जायमान' मित्युत्तरार्धे एतन्मन्त्रप्रतिपाद्यस्य विरिञ्चपुत्रकत्वलिङ्गश्रवणात् तस्य रुद्रेऽसंभवेन, वा-

---

१. तत्र भोगोक्त्या भोग्यवस्तूनामप्यास्तिता बोधनात् तद्विरुद्धं तदभावकथनम्।

सुदेव एव संभवेन च, निरवकाशविष्णुलिङ्गत्वात् तद्बलेन 'योगाद्रूढे'रिति न्यायानवतारात्, श्रुतेश्च वासुदेवे सावकाशत्वात्। [1]दिवि = स्वस्थाने वैकुण्ठे, एकः = समाभ्यधिकशून्यः, स्तब्धो वृक्षइव = निश्चलो वृक्षइव, तिष्ठति = आस्ते। एवंच—कुलालादिरिव न जगत्सृष्ट्यादौ व्यापारवान्, किंतु इच्छामात्रेण सृजतीतिभावः। तेन पुरुषेण इदंसर्वं, पूर्णम्, व्याप्तं, पालितं वा, 'पृपालनपूरणयो' रित्युभयार्थकत्वात् धातोः। सर्वत्रव्याप्तः, सर्वरक्षकोवेति भावः। येनेति क्वचित् पाठः— येनपुरुषेणेदंपूर्णं सत् तिष्ठतीति योजना। इदं बोध्यम्— प्रथमपादेन पराऽपरवस्तुमात्राभावबोधने 'येनेद' मित्यादिवाक्यमनर्थकं व्याप्यवस्तुनोऽभावेन व्याप्त्यादिकथनायोगादिति। एतेन— 'अखण्डार्थेन शुद्धेन ब्रह्मणा आध्यासिकं तादात्म्यं, तद्ग्रहश्च 'नेहनाने' ति निषेधवाक्यमननेसति; 'सत्यंज्ञानमनन्त' मित्यादिश्रुतयोपि शुद्धचित्तंप्रति 'नेहनाने' त्यादि श्रुतिसहकारेण धर्मत्यागेन अद्वैतं शुद्धंब्रह्म बोधयती (म.१-प्र.)'त्यादि मञ्जूषाद्युक्तिवत्। 'भेदसत्यपरस्तर्को भेदनायापरोऽपरः। भेदसत्यपरस्तर्को ह्यसन् वेदविरोधतः॥ एकविज्ञाननिगमा नेहनानेति च श्रुतेः' इत्यादि श्रीहर्षोक्तिरपि परास्ता। एकविज्ञाननिगमस्य सादृश्येनोपपत्तेर्वक्तुं शक्यत्वात्, 'नेहनाने' त्यादि श्रुतीनां ब्रह्मणो निर्धर्मकत्वे, जगदसत्यत्वादौच न तात्पर्यमित्युक्तत्वाच्च। किंच—वैशेषिकादयो वस्तुतत्त्वमपलप्य भाषिण इति नागेशसिद्धान्तात् वस्तुनिष्ठं सत्त्वमपलप्य अनिर्वचनीयत्वमाह गौतम इति शक्यं वक्तुम्।

तस्यभाव (पा०.सू०.५-१-११९) इति सूत्रे प्रकृतिप्रत्ययार्थयोर्भेद एव भावार्थप्रत्ययाः शिष्यन्त आचार्यैरिति, अन्वर्थं खल्वपि निर्वचनं गुणसंद्रावोद्रव्यमिती' त्यन्तेन भाष्येणतयोर्भेदएवेति निर्धारितम्, असत्त्वंच तस्य तत्र नाभाषि अतोऽसौसन्नेवेति मुनित्रयस्याशयः। अतः पाणिनीयैः भेदस्यासत्यत्वमन्यैरुक्तं नाभ्युपेयं भाष्यादावनुक्तेः। 'भेदस्यासत्त्वमपि तद्भाष्यादौ स्पष्टमि' ति नञर्थवादस्थकलातु 'तात्त्विकभेदाभेदचिन्तां परिहाय लोकप्रसिद्धं भेदमाश्रित्ये' ति कैयटम्, वास्तवभेदस्तु नास्त्येवेतितात्पर्य' मित्युद्योतंचानुसृत्यप्रवृत्तेति तयोरेव निर्मूलत्वात् चिन्त्या। किंच—स्वस्वाङ्गमङ्गुलिपञ्चकमवलोक्यमानं

१. मन्त्रशेषस्यार्थमाह—दिवीत्यादिना।

विभक्तेनैवरूपेणाऽवगम्यत इति सर्वप्रत्यक्षसिद्धं भेदमपन्होतुं कोवा शक्नुयात्, बाधादिहेत्वदर्शनेन असन्निितिवक्तुं कस्यवा जिह्वा प्रवर्तेत । अतोऽसौ नागेशो भगवता सूत्रकृता 'नाभावउपलब्धे' (ब्र. सू. २-२-२७) रित्यादिसूत्रैः प्रतिक्षिप्तं वेदविरुद्धं विज्ञानवादिपक्षमाश्रित्य, श्रुत्यादौ महर्षिवचनेच प्रद्वेषं प्रकाशयतीति भाति । अयमत्र संग्रहः –

'अनिर्वक्तव्यतावाद पादसेवागतिस्तयोः ।
भेदसत्यपरस्तर्कोह्यसन्वेदाविरोधतः'
इत्येवंवादिनो वस्तुभेदसत्यत्ववादिभिः ।
एवंतु प्रतिवक्तव्या येनाऽऽत्मा संप्रसीदति ॥ १ ॥
एकविज्ञाननिगमो नेहनानेति च श्रुतिः ।
आत्मन्यभावं धर्माणां न बोधयति तत्वतः ॥ २ ॥
न वक्तव्यसत्त्वं भावानां किंतु सत्यत्वमेव हि ।
ब्रूतेऽखिलं वेदवाक्य मिति विद्वद्भिर्निर्णयः ॥ ३ ॥
अतोऽनिर्वचनीयत्व वादपादनिषेवणम् ।
न नो[1] गतिः, किंत्वदुष्टं गतिः श्रुतिवचो ऽखिलम् ॥ ४ ॥
श्रुतिसिद्धं वस्तुसत्त्वं भवतः प्रतिषेधतः ।
विज्ञानवादिनां पादसेवनं शरणं विदुः ॥ ५ ॥
अतःसत्यं सर्वमिति मतं युक्तं सतां मतम् ।
नाभावाधिकृतौ सूत्र कृता व्यासमहर्षिणा ॥ ६ ॥
प्रतिक्षिप्तं भाष्यकृतां[2] पाणिनेरप्यसंमतम् ।
श्रुतिस्मृतिविरुद्धंच मतं विज्ञानवादिनः ॥ ७ ॥
आश्रित्य नृत्यति ह्येष सखा श्रीहर्षधीमतः ।
भेदमायापरस्तर्को ह्यसन्वेदविरोधतः ॥ ८ ॥
भेदस्य सत्यता सिद्धा द्वासुपर्णादि[3]वाक्यतः ।
अतः– भेदसत्यपरस्तर्को ह्यसन्निति वदन् पुमान् ॥ ९ ॥
असन्निति हि वक्तव्यो ब्रह्मासत्त्वं विदन् यथा ।
इति प्राहुर्गौतमीया स्तथैव ब्रह्मवादिनः ॥ १० ॥

---

१. वैयासकानां, पाणिनीयानांच । २. पतञ्जलेः, श्रीशङ्कराचार्यादीनांच । ३. अयं मन्त्रः ऋग्वेदे, मुण्डके, श्वेताश्वतरेच पठ्यते, जीवेशभेदपर इति सर्वेआचार्याः ।

( १५ - तटस्थाक्षेपः )

अत्रकेचित्प्रत्यवतिष्ठन्ते – मञ्जूषायां 'वैयाकरण सिद्धान्तमञ्जूषैषाविरच्यते' इति प्रतिज्ञाय जगन्मिथ्यात्वादेः आत्मैकत्वस्यच निरूपणात्, तस्य च प्रामाणिकत्वव्युत्पादनाय श्रुतिस्मृतिपुराणानाम्, अन्येषां, तीर्थकरणां वाक्यानां च, प्रमाणतयोपन्यासात्, तत्रोक्तंसर्वं पाणिन्यादि महर्षिसंमतं, प्रामाणिकं चेति, निर्णयामः। नच अत्र जीवेशभेदपरैः प्रपञ्चसत्यत्वपरैश्च तन्त्रान्तरैः विरोधः शङ्क्यः – तेषांसर्वेषा मात्मैकत्वादि प्रतिपादकाध्यात्मशास्त्राऽङ्गत्वमिति द्वितीयपरिच्छेदे ग्रन्थकृता सिद्धान्तयिष्यमाणत्वात् अङ्गाङ्गिनोर्विरोधस्य काप्यदृष्टेः, शास्त्रकृद्भिस्तयोरविरोधस्यैवाङ्गीकारात्। नच – प्रतिज्ञावाक्यगतवैयाकरणपदेन पाणिन्यादिरेव विवक्षणीय इति को निर्बन्धः, अन्यः कश्चिदिन्द्रादिरेव वैयाकरणस्तत्पदेन विवक्षितोऽस्तु इति वाच्यम् – एतैरेवभट्टाचार्यैः शेखरे संज्ञाप्रकरणे पाणिनीयस्य व्याकरणस्य प्रामाण्यनिरूपणावसरे ब्रह्मज्ञानसंप्रेप्सया तपस्यतः सनकादीनुद्दिश्य ब्रह्मविज्ञानार्थं महेश्वरेणोपदिष्टानाम्, 'अइउण' दीना चतुर्दशसूत्राणां 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इति श्रौतेन स्मार्तेनवा-प्रमाणेन श्रुत्यैव ब्रह्मणः श्रोतव्यत्वविधानाच्छ्रुतित्वं व्यवस्थाप्य, तन्मूलकत्वात्पाणिनीयस्य श्रुतिमूलकत्वेन, व्याकरणमप्यधीतं मयेत्यर्थकं 'वेदानां वेद' (छ. ७ -) इति छान्दोग्यवाक्यमपि एतद्विषयकमेवेति श्रुत्यनुगृहीतत्वोक्त्या, अत्रग्रन्थे – 'अद्यत्वेसाधुत्वबोधकं व्याकरणं पाणिनीयमेवेतिस्पष्टं भाष्ये' इति भाष्यकृता पतंजलिनाऽऽदृतत्वोक्त्याच निरतिशयं प्रामाण्यं प्रसाध्य, शास्त्रेण शब्दापशब्दविवेचनपूर्वं शब्दप्रयोगेणाऽभ्युदयमभिलषतां पाणिनीयमेव व्याकरणमध्येयमिति व्यवस्थापितत्वेन तत्सिद्धान्तनिष्कर्ष एव सर्वैरपेक्षितः स्यात् इति तत्सिद्धान्तव्युत्पादनस्य न्याय्यतया तत्रतत्र महाभाष्योदाहरणेनच प्रतिज्ञावाक्यगतवैयाकरणपदेन पाणिन्यादय एवाऽऽचार्या विवक्षिताभवेयुः, इदं सर्वमभिप्रेत्यैव 'वैया-

---

१. 'समवप्रविभ्यस्थ' ( १ - ३ - २२ ) इतितङ्। २. मायिकत्वादेः। ३. अद्वैतशास्त्रमेव अध्यात्मशास्त्रमिति तदभिमानः। ४. नैतानिमहेश्वरोपदिष्टानि अपितु पाणिनिकृतान्येति औत्तराहाःकेचित्। सातारा राघवेन्द्राचार्यस्तु णाद्यनुबन्धः पाणिकृत इति मन्यते। तेषां शेखरोद्योतयोर्निरूपिततदागतिक्रमे न विस्रम्भ इति भाति। ५. शांकरछान्दोग्यभाष्यदिशा इदम्।

करणानां = पाणिन्यादीना' मिति कलायां व्याख्यातमिति ।

(तटस्थसमाधानम्)

अत्र वदन्ति — नागेशस्तावदन्यमुखेन स्वाभिमतमद्वैतसिद्धान्तं प्रतिपिपादयिषुः वाक्यपदीये भर्तृहरिणाप्रदर्शितेन पथा स्फोटस्वरूपंनिरूपयन् 'अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतोयत' इति आद्यपद्योक्तस्फोटलक्षणघटकब्रह्मत्व, नामरूपात्मकप्रपञ्चविवर्तोपादानकारणत्वयोः समर्थनं दुष्करं तस्याऽद्वितीयत्वसाधनेनविना, तच्च प्रपञ्चस्यमायिकत्वसमर्थनामन्तरा दुःशकमितिनिर्धार्य आत्मैकत्वसिद्धान्तस्थापकं[१]परमार्थसाराभिधशास्त्रत्वेन-तदभिमतेग्रन्थे कृतभूरिपरिश्रमः तत्र दृढतरसंस्कारः आत्मैकत्वमेव शास्त्रेषुसर्वत्र प्रतिपाद्यत इति अन्यथा जानन् भेदपराणामन्येषां तन्त्राणा मद्वैतप्रतिपादकाध्यात्मशास्त्राऽङ्गत्वम्, सांख्यवैशेषिकगौतमादीनामपि अद्वैतएवतात्पर्यम्, अतो न तद्विरोधो ऽद्वैतसिद्धान्तस्य, श्रीशङ्कराचार्यप्रभृतयस्तु सांख्ययोगवैशेषिकादीनां मदुक्तं गूढमभिसंधि मजानानाएव सांख्यग्रन्थादौ प्रतीयमाने द्वैते तात्पर्यंतेषामितिकृत्वा तत्खण्डनेप्रवृत्ताः । एवमेवतेषामन्येषांच स्फोटवादखण्डनेपि प्रवृत्तिरिति बोधयितुं [२]तत्पराकृतस्यस्फोटस्य स्वरूपनिरूपणमग्रतःकृत्वा स्वाभिमतात्मैकत्वादि पाणिनेरप्यभिमतमिति बालानांमिथ्याप्रत्ययं जनयितुं 'वैयाकरणसिद्धान्ते'ति प्रतिज्ञांकृत्वा अद्वैततात्पर्यकं स्फोटवादापरनामानं मञ्जूषाभिधानं ग्रन्थमतनिष्ट ।

तत्र — प्रथमपरिच्छेदे शक्तिलक्षणाव्यञ्जनाख्यवृत्तित्रयनिरूपणात्परम्, 'ननु — कोऽसौ शक्त्याश्रयःशब्द' इत्यादिना 'जातेरप्यसंभवाच्चेति चेत्' इत्यन्तेनग्रन्थेन वर्णानामुत्पत्तिरभिव्यक्तिरितिपक्षद्वयेपि वर्णानामभिव्यक्तीनांचोत्पत्तिविनाशशालित्वात् क्रमविशिष्टवर्णसमुदायरूपपदस्य, तत्समुदायरूपवाक्यस्य च दुर्निरूपत्वेन पदादिप्रत्यक्षाभावात् वाचकशब्दज्ञानाऽभावेन अर्थप्रत्ययानुपपत्तिरितिचोद्यमुद्भाव्य, 'अस्तिकश्चित्स्फोटाभिधःशब्दो ऽर्थवान् तज्ज्ञानेनार्थधीरुपजायत' इति समाधास्यन् स्फोटस्वरूपंनिरूपयितुं तन्त्रान्तरोक्तं प्रलयंसृष्टिक्रमंच 'अत्रोच्यत' इत्यादिना अतिसंकुचितेन ग्रन्थेन निरूप्य, [३]प्रलये चेतन ईश्वरेलीना-

१. शेषनागाचार्य प्रणीतोऽयंग्रन्थः । २. शङ्कराचार्यप्रभृतिभिः । ३. भौतिकादिप्रलये कु० । खण्डप्रलय इतिकला ।

या लीनसर्वजगत्काया मायाया भगवतईश्वरात् तस्यसिसृक्षाभावेपि प्राणिकर्मवशात् पुरुषेणसह प्रादुर्भावः, तस्याश्च परमेश्वरस्यसिसृक्षात्मना परिणामः, ततस्तत्सकाशात् सत्वादिगुणत्रयात्मकशक्तितत्वाख्यबिन्दुरूपस्य वस्तुनः प्रादुर्भावः, तत्र चित्, अचित् तदुभयमिश्रं चेत्यस्यंशत्रयम्, तत्र अचिदंशः शब्दार्थोभय संस्काररूपोऽविद्येत्युच्यते, चिदचिन्मिश्रोनादः, चिदंशोबिन्दुः, चिदंशाद्बिन्दुरूपात् वर्णविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषोपेतं चेतनामिश्रं जगदुपादानकारणं शब्दब्रह्माऽपरनामधेयं नादमात्रं जायते, तत् ज्ञातमर्थंविवक्षोः पुरुषस्य इच्छाजन्यप्रयत्नसंयोगरूपसंस्कारवशात् नाभेरधोदेशे स्थितचक्राकारमूलाधारदेशे जातपवनचलनेन, तत्र ततःक्रमात् नाभिहृदयकंठदेशान् गतेन तेन मरुता, तत्तद्देशेषु अभिव्यंजितं सत् क्रमेण परा, पश्यन्ती, मध्यमा, वैखरीतिनामानि भजते, तस्य पराऽभिधानस्य नादस्य सर्वास्ववस्थास्वनुवर्तनेऽपि मध्यमागतोनादो वैखरीनादाभिव्यंग्यः स्फोटाभिधां धत्ते। सतु — 'आकाशदेशः शब्द इति 'अइउ'णिति सूत्रमहाभाष्यात् बाह्याकाशगतः सर्वप्राणिहृदयाकाशदेशश्च, सएवायंगकारः तदेवेदंपदंवाक्यमितिधीविषयत्वात् तत्तद्देशगतत्वेन ज्ञानविषयत्वाच्च नित्यएकोविभुश्च। व्यंजकध्वनिगतवर्णसंस्कारक्रममनुरुध्यैव लोकसिद्धव्यञ्जकध्वनिगतगत्वादिधर्मरूषितो नानात्वमापन्नइव ध्वनिगतान्त्यवर्णाभिव्यक्तएव अर्थधियंजनयति। अनादिनिधनंब्रह्म[3] 'शब्दतत्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतोयतः' 'क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्। प्रकृतेर्बिन्दुरूपिण्याःशब्दब्रह्माऽभवत्परा' इत्यादिभर्तृहरिवचनात् पराभिधः शब्द एव नामरूपात्मकप्रपंचरूपेण विवर्तते, 'एकस्यैवस्फोटस्य सर्वशब्दतदर्थोभयोपादानत्वेन उभयरूपतया उभयोरपि तत्कार्ययोरुभयरूपता, श्रोत्रग्राह्यवैखरीसंस्कृतान्तःकरणग्राह्योभवतीति आन्तरस्फोट इति व्यवहारविषयश्च। एतेन — तत्तत्प्राणिहृदयाकाशस्थस्फोटस्य श्रोत्राग्राह्यत्वा त्कथं तदुपलब्धिरितिशङ्कानवकाशः। एवंच — बौद्धएवशब्दोऽर्थस्य प्रत्यायकः नतु बाह्यो वैखरीनामकः सर्वश्रोत्रग्राह्य' इति व्यक्तिस्फोटस्वरूपं निरणैषीत्।

'जातिस्फोटोऽतिनिष्कर्ष' इति परमसिद्धान्तानुसारेण तत्स्वरूपं[4] प्रतिपि-

१. अव्यक्तात् त्रिगुणात्मकात् बिन्दोरितिकला। २. नाभेरधोदेशे। ३. पराभिख्यं। ४. जातिस्फोटस्वरूपम्।

पादयिषुः, 'जातिर्नाम अनुगताकारप्रतीतिजनकः शब्देऽर्थेचविद्यमानो धर्मः, सच–शब्दनिष्ठोवाचकः, अर्थनिष्ठस्तुवाच्यः। तत्र – शब्दनिष्ठनिरुक्तधर्मरूपजातेरेकत्वं नित्यत्वं विभुत्वंच सहेतुकं व्यवस्थाप्य, तस्या ध्वनिगतवर्णोच्चारणक्रमानुसारिसंस्कारेण व्यंजकानेकगतगत्वकत्वादिनानारूपरूषिततया नानात्वेन भासमानाया नानाजात्यवच्छिन्नघटपटादिनानापदार्थोपस्थापकत्वेन, युगपदनेकार्थोपस्थितेः, सरोरसइत्यनयोरविशेषस्य च प्रसंगो न, तत्तदर्थोपस्थापकतत्तद्धर्मरूषणरूपाभिव्यंजनसामग्र्यभावात्। 'अनेकव्यक्त्यभिव्यङ्ग्याजातिः स्फोटइतिस्मृता'इति हरिवचनात्'इत्यादिना सविस्तरं तत्स्वरूपं प्रपञ्च्य,सचस्फोट आन्तरोऽर्थवाचकः, वाच्योप्यर्थोबुद्धिसत्तासमाविष्टः (बौद्धः) अन्यथा– शशशृङ्गंनास्ति, घटोऽस्ति, अङ्कुरोजायते' इत्यादि व्यवहारानुपपत्तिः, शशशृङ्गस्य बाह्यसत्तासमाविष्टत्वाभावात् तदभावबोधकवाक्यतो बोधोनस्यात्, घटइत्यनेनैव तत्सत्तावगमेन घटोऽस्तीतिगतार्थत्वात् अस्तीतिप्रयोगानापत्तिश्च। बौद्धस्यपदार्थस्यांगीकारेतु – बुद्धिसतो बाह्यसत्तातदभावबोधनाय अस्तिनास्तीति प्रयोगउपपद्यते। अतः सर्वेपदार्थाबौद्धाएव बाह्यसत्त्वे संवादमात्रमिति पदार्थसामान्यस्य बुद्धिसत्तासमर्थन प्रघट्टके 'भ्रमे ज्ञानाकारस्यैव विषये आरोप' इत्यादिना, भ्रमप्रकाररजतादेरसत्त्वमुक्त्वा 'प्रपञ्चोप्येवमेवे'त्यादिना 'अलंप्रसक्तानुप्रसक्त्या' इत्यन्तेन प्रबन्धेन आत्मैकत्वं ब्रह्मैकमेवसत् तदतिरिक्तं समस्तंजगत् मायिकं (मिथ्या) जगतो ब्रह्म विवर्तोपादानकारणम्, तत्त्वंच भ्रमाधिष्ठानत्वम्, जगतो मायिकत्वंच भ्रमप्रकारत्वमित्यादि प्रथमपरिच्छेदे,उत्तरत्रपरिच्छेदत्रयेपि तत्रतत्र आत्मैकत्वादि च न्यरूरुपत्। तत्र मायास्वरूपविचारप्रसङ्गे श्रीशाङ्करभाष्यव्याख्यानदूषणं तन्मतसिद्धानादिभावरूपाऽविद्याखण्डनं च विशेषतः कृतम् तत्र प्रसक्तिस्तुचिन्त्या। प्रकृतमनुसरामः।

तत्र – ब्रह्मसत्यमित्यत्र विनाचार्वाकादिभ्यो नाऽन्यः कश्चि द्विप्रतिपद्यते। वस्तुसामान्यस्य मायिकत्वोक्तिं तु न क्षमन्तेलोकाः प्रपाञ्चितं चेदं सप्रपञ्चं पराऽपरतत्वविचाराय प्रवृत्तैराचार्यैः स्वस्वप्रबन्धेषु। ननु – भवतुनाम इदमन्येषामाचार्याणामनभिमतं, पाणिन्यादीनां तु अभिमतमिदमिति वदामो नागेशेन मञ्जूषायां 'वैयाकरणे' त्यादि प्रतिज्ञापूर्वं प्रतिपादनात् इति चेत्।

१. 'पदे नवर्णा' इति कारिकाव्याख्यानशेषदर्पणेस्फोटस्वरूपं, जयन्तभट्टादिभिर्दूषणाय च

अत्र ब्याहुः— आचार्यः पाणिनिरात्मैकत्वसिद्धान्तव्यवस्थापनाय न शास्त्रमिदंप्रारभतेति जानीमः, यतो ऽयमादौ शब्दसंस्कारशास्त्रोपयोगि संज्ञाकाण्डमेव भगवानारभत, भगवान् भाष्यकारोऽपि 'अथशब्दानुशासनम्, केषांशब्दाना' मित्यादिनाऽस्यशास्त्रस्यविषयः शब्दाः, तज्ज्ञानंच प्रयोजनमित्यभाषत। एतेन— 'अथातः शब्दान् व्याकरिष्याम' इति प्रतिज्ञांमनसिकृत्यैवशास्त्रमारभत आचार्य इति ध्वनितम्। 'शब्दशास्त्रप्रस्तावादाह—वर्णानामिति, अत्राङ्गशब्देन शब्दरूपनिमित्तमेव गृह्यते शब्दशास्त्रे तस्य प्रधानत्वा'दितिशेखरयोर्वदन्नागेशोऽपि शब्दाएवाऽस्यशास्त्रस्य विषय इति मन्यते। यद्येवं तर्हि वासुदेवंसर्वोत्तमंमन्यते भगवान्पाणिनिरिति कथं परःप्राहेति नानुयोगः कार्यः, मञ्जूषादितः पाणिनिप्रभृतय आत्मैकत्वसिद्धान्ते तात्पर्यवन्त इति केचित् मन्वीरन्, माभूत्तादृशोऽभिमानः, आचार्याणांतु न तथातात्पर्यं हेत्वभावात् आत्मभेद एव तेषां तात्पर्यं हेतुदर्शनात् इति समर्थयितुं पारयन्तिपरेऽपिपण्डिता इति बोधनाय प्रवृत्तेः।मञ्जूषादौ प्रतिपादितात्मैकत्वादौ इदमत्र प्रमाणं भवतीति पाणिन्यादिवचनानुदाहरणमेव तस्य तत्संमतत्वाभावे प्रबलं प्रमाणम्। किंच— न पश्यामो मुनित्रयप्रबन्धेषु आत्मैकत्वसिद्धान्तानुकूलं वचनमिति औपनिषदः, नागेशादयो यद्भाष्यं स्वोक्तार्थे प्रमाणतयोपन्यस्यन्ति तदेवभाष्यमात्मैकत्वसिद्धान्तव्यवस्थापकमिति तु मनोरथमात्रम्, तस्यभाष्यस्य नागेशाद्युक्तएवार्थ इति राजशासनाद्यभावेन श्रुत्याद्यनुरोधेन अन्यथायोजयितुंशक्यत्वात्। शेखरादौ स्वाभिमतप्रक्रियासमर्थनाय प्रमाणतया उदाहृतं महाभाष्य मन्यथायोजयित्वा शेखराद्युक्तनिष्कर्षं निराकुर्वन्ति निपुणमतयः प्राञ्चोऽर्वाचीनाश्च[1]पण्डिता इति प्रवचनपरायणावैयाकरणाजानन्त्येव, एवंस्थिते परमास्तिकशिरोमणेः पतञ्जलेर्वाक्यस्य नागेशादिकृतां श्रुत्यादिप्रमाणविरुद्धां योजना मध्यात्मविद्याविशारदाः कथं साध्वीं मन्येरन्।

किंच— सरूपसूत्रे (१-२-६४) 'स्त्रिया' (४-१-३) मिति सूत्रेच 'तस्मान्नवैयाकरणैः शक्यंलौकिकं लिङ्गमास्थातुम्, अवश्यं कश्चित्स्वकृतान्त आस्थेयः कोसौस्वकृतान्तः 'संस्त्यानप्रसवौलिङ्ग' मिति लिंगस्वरूपनिर्णायकं भाष्यम्, 'तत्र सिद्धान्तवादी युक्तंपक्षमाश्रयति—लौकिकमिति'॥ इति सरूपसूत्रेकैयटः, भाष्यस्थकृतान्तपदस्य सिद्धान्त इत्यर्थ इत्युद्द्योतः। स्त्रियामितिसूत्रेतु—

स्वस्वप्रबन्धेषु संक्षिप्तम्। १. तदीयशेखरद्वयव्याख्याने द्रष्टव्यम्।

' स्वकृतान्त ' इति पदमादाय ' स्वसिद्धान्त ' इति व्याचख्यौ कैयटः । ' सांख्यमतावष्टम्भेनाह – स्वकृतान्त इती ' त्येवं कैयटमवतार्य, ' एतेन सांख्यशास्त्रानुसारित्वं व्याकरणस्येति सूचयति ' इति निगमयतिनागेशः । सएव तत्रैवसूत्रे ' सांख्यानांसिद्धान्त ' इति कैयटं ' सेश्वरसांख्यानामाचार्यस्य पतञ्जलेरित्यर्थ ' इति व्याकुरुते । तेन इदमवधार्यते = भाष्यप्रदीपकारौ पाणिनेराचार्यस्य सेश्वर-सांख्यमतानुसारितांमन्येते इति ।

निरीश्वरं, सेश्वरंचेति सांख्यतु द्विविधं तत्रोभयत्र पुरुषभेदः, जगतो मायिकत्वाभावश्च प्रतिपाद्यतइति व्यक्तं विदुषाम् । एवं च पाणिनेरपिभेदएवाभिमतइतिसुवचम् । द्विविधाअपिसांख्या भेदवादिन इति सुबोधाय संक्षिप्य किंचिन्निरूप्यते – तत्राद्ये– प्रकृतिः पुरुषश्चेति द्वैतत्त्वे पुरुषाश्चबहवः ( भिन्नाः ) जन्म (नन) मरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वंसिद्धं त्रैगुण्यविपर्ययाच्चैव ' (१८) इतिसांख्यकारिकोक्तेः । प्रकृतिस्तु पुरुषोपभोगभोग्यविषयरूपेण परिणमते (ति) पुरुषास्तुनाना । एवमेव कारिकामिमांव्याख्याय पुरुषनानात्वंव्यवस्थापितं सांख्यमते गौडपादाचार्यप्रभृतिभिः ।

द्वितीये– प्रकृतिः पुरुष ईश्वरइति त्रीणि तत्वानि, अचेतनापि प्रकृतिरीश्वरप्रवर्तिता पुरुषपदवाच्यजीवोपभोगयोग्यविषयरूपेण परिणता पुरुषस्यभोगमपवर्गंच साधयति । एवंच – प्रकृतिः (गुणत्रयात्मिका) भोगादिसाधनम्, पुरुषोभोक्ता, ईश्वरः प्रेरकः, ईश्वरप्रणिधानात्पुरुषस्यमोक्षः, इतिसेश्वरसांख्याचार्यमहर्षिपतञ्जलिप्रणीतयोगसूत्रतो ऽध्यवसीयते । तथाहि — ' प्रकाशक्रियास्थिति शीलभूतेन्द्रियात्मकंभोगापवर्गार्थं दृश्यम् (यो.सू. २-१८) ईश्वरप्रणिधानात् (१-२३) क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषईश्वरः (१-२४) तस्यनिरतिशयं सार्वज्ञबीजम् (१-२५) पूर्वेषामपिगुरुः कालेनानवच्छेदात् (यो. सू. १-२६) तस्य वाचकः, प्रणवः (१-२७) तज्जपस्तदर्थभावनम् ' (१-२८) इतिसप्तसूत्र्या तत्वत्रयं प्रतिपाद्य ' ईश्वरप्रणिधाना ' दित्यादिसूत्रषट्केन भगवदुपासनम् , तल्लक्षणम्, तस्यसर्वज्ञत्वम्, तस्यब्रह्मादिगुरुत्वम्, तस्य प्रणववाच्यत्वम्, तद्वाचकप्रणवजपः, तद्वाच्येश्वरचिन्तनंच कैवल्यरूपमुक्तिसाधनयोगसिध्यङ्गमिति निरूपयता उपास्योपासकभावेन पुरुषेश्वरयोर्भेदस्य, ' कृतार्थं प्रति नष्टमप्यनष्टंतदन्यसा-

धारणत्वात्' ( यो. २-२२) इतिसूत्रेण पुरुषनानात्वस्यच प्रतिपादितत्वेन, 'अ-चेतनापिप्रकृतिः पुरुषस्यभोगापवर्गलक्षणमर्थं साधयितुं तत्तददृष्टादिसहकारेण ईश्वरेणप्रवर्त्यत इति 'क्रिया' (४-१-३) मिति सूत्रउद्द्योतोक्तयाच, 'सांख्यानां मते जगतोमिथ्यात्वानुक्तयाच. अस्ति जगतः सत्यत्वम्, अस्तिच आत्मभेदः सांख्यानांमते इत्यवगम्यते। तेन च तदनुयायिभिः वैयाकरणैरपि जगत्सत्यं भिन्नाश्चाऽऽत्मान,ईश्वरस्तुतेषां नियामकः,उपास्यश्चतेषाम्,अतएवोक्तमइत्यभ्युपेयमिति सूत्रकृतः पाणिने मते आत्मैकत्वादिकल्पनं न युक्तमिति अस्माकं निष्कर्ष इति। इमेशङ्कासमाधाने तटस्थपुरुषस्यतु। जिज्ञासूनांसुबोधायद्वेएते अन्ववादिषम् ॥

( १६ बौद्धसत्तानि )

ननु – मञ्जूषायां पदार्थानांबौद्धसत्तासमर्थनावसरे प्रमाणतया उपदेशेऽजनुनासिकइत् (१-२ २) हेतुमतिच (३-१-१६) पङ्क्तिविंशति (५-१-५९) तदस्यास्ती' (५ २-९४) तिचतुःसूत्रीभाष्योदाहरणात्, मृगतृष्णोदकादि-दृष्टान्तः शास्त्रे उक्तःप्रपञ्चस्येत्युक्तेश्च सतामसतांचपदार्थानां बौद्धीसत्ता भाष्याभिमता, अतः बुद्धिसत्तासमाविष्टशशविषाणादेरिव तथाविधजगतोऽप्यसत्त्वंचयुक्त-मितिचेत्,सत्यम्–एवंवदताइदमादौसमालोचनीयंत्वायुष्मता, यदिवयं बौद्धसत्तामात्रेण शशशृङ्गदृष्टान्तेन च पदार्थानामसत्त्वंवदामः, तदा भवदुक्तादिशा शब्दजप्रतीतिविषयपदार्थत्वाऽविशेषात् ब्रह्मणः स्फोटस्यचबुद्धिसत्तासमाविष्टत्वेन शशविषाणदृष्टान्तेन तयोरपि गगनकुसुमसोदर्यभावः स्यादितिपरानुयोगं कथंसमाधास्यामः, कथंवा 'ब्रह्मस्फोटयोः सत्यत्वं तदितरस्याऽसत्यत्व' मित्यस्मद्व्यवस्थोपपद्येतेति। किंच–व्यवहारस्यवस्तुसत्तानिबन्धनत्वे बौद्धसत्तैव तत्रहेतुरिति नाऽनुशासनमाचार्याणामिति बहिःसत्तामादायापि सुकरोव्यवहारः।

ननु – बहिःसत्ता तावत् 'न व्यवहारहेतुः घटइत्यनेन सत्ताया अप्यवगमात् तत्र विधिवैयर्थ्यं, ज्ञातस्यनिषेधायोगश्चेति 'घटोऽस्ति, घटोनास्ती' ति विधिनिषेधायोगात्। बौद्धसत्ताभ्युपगमेतु बौद्धोघटोबहिरस्ति, सबहिर्नास्तीति विधिनिषेधौ युज्येयातामिति चेत्, न–घटइत्युक्ते यथा घटत्वातिरिक्तघटवृत्ति द्रव्यत्वप्रमेयत्वयो र्नभानं तथा तद्वृत्तिसत्ताया अपीति अज्ञातत्वात्सत्ताया उक्तदोषाऽनवकाशात्। सत्तापिशब्दवाच्येतितु घटशब्दश्रवणमात्रेण सत्ताविशिष्टघटबोधस्याननुभवात् न युक्तम्। किंच–व्यवहारंप्रति सत्तायाःकारणत्वनियमेपि अन्तःकरणे

शशविषाणादि संस्कारस्य सत्त्वे तद्विषयकशाब्दबोध एव मानमिति नागेशेनेव शश-विषाणं नास्तीतिप्रामाणिकव्यवहारएव स्वप्रयोजकसत्तामपि शशविषाणं गमयतीति शक्यं वक्तुम् । किंच–यस्य नास्तिशशविषाणादे मुख्याबाह्यासत्ता तस्यपरं बौद्धसत्ता-स्वीकारउचितः. यस्यतु घटादे रस्ति मुख्याबाह्यासत्ता तस्य कुतःसाऽङ्गीकार्या, बाह्यसत्ताया मुख्यत्वं मतुपसूत्रोद्द्योते स्पष्टमभिहितम् । केचित्तु – सत्तायाएव व्य-वहारकारणत्वं न अतएव शशविषाणादेर्व्यवहारोदृश्यते इत्याहुः । अस्तुवामनो-रथोभवतां भाष्यमेतद्बौद्धसत्तासाधकमिति, अथापि–नैतद्भाष्यं घटपटादिपदार्थानां मुख्यां बाह्यसत्तां प्रतिषेधति, नापि अर्थक्रियाकारित्वं तत्स्वभावम् । कचित्कार्यार्थमा-श्रितो गौणः कल्पः कथं पदार्थानां स्वाभाविकधर्मप्रच्यावने समर्थो भवेत् । अतो बुद्धिसत्तामात्रेणाऽसत्त्वं जगतः शशविषाणसाम्यादितिवादी स्वगोष्ठ्यांमान्यः । अतो दाहृतं सर्वं भाष्यं बहिःसद्विषयकमेव। तत्र–'इहस्थः पाटलिपुत्रस्थं देवदत्त मुपदिशति अङ्गदीकुण्डलीवृत्तबाहु' रिति 'उपदेशेऽ' जिति सूत्रभाष्यंहि बहिःसत्ताविष्टविशिष्ट-देवदत्तादिविषयकमेव 'पाटलिपुत्रस्थ' मित्याद्युक्तैः। अस्तिबुद्धेर्देशकालव्यवहितवस्तु विषयीकरणसामर्थ्यमिति देशान्तरस्थोपि पदार्थो बुद्धिविषयोभवतीति भाष्याशयः।

'हेतुमतिचे' ति सूत्रस्थं 'सतोबुद्धिविषया' निति भाष्यमपि पूर्वकाला-वच्छिन्नसत्ताविशिष्टानेव स्वबुद्धिविषयानाहे' त्यर्थकं बहिःसत्ताविशिष्टार्थविषयक-मेव । अतएव 'सत'इतिपूर्वंप्रायुङ्क्त, अन्यथा 'बुद्धिविषयान् सत'इति प्रायोक्ष्यत् ।

पङ्क्तिविंशती' ति सूत्रस्थं 'समुदायेविंशत्यादयोभविष्यन्ति, संघः, स-मूहः, समुदायइत्यनर्थान्तर' मित्यादिभाष्यंच नबौद्धसत्तासमर्पकमर्थानाम् । अव-यवावयविनोः गुणगुणिनोश्चभेदज्ञापकमेव। 'गुणस्यप्राधान्येपटस्यशुक्लः गुणिनः प्रा-धान्येशुक्लःपटः इति व्यवहार' इत्यादितत्सूत्रभाष्यमपि न बुद्धिसत्ताज्ञापकं, नापि बहिःसत्ताप्रतिषेधकम् । अतएवमतुप्सूत्रे 'गुणवचनेभ्योलुक् , इतिलुकंविदधानो-वररुचिः 'अव्यतिरेकात्सिद्ध इति चेत् दृष्टोव्यतिरेक' इति गुणस्यगुण्यव्यभिचा-रेणवर्तनात् अभेदादेव शुक्लःपट इति प्रयोगसिद्धौ लुग्वचनारम्भोव्यर्थ इति श-ङ्कां 'घटस्य शुक्ल इति भेदेन व्यवहारदर्शनेन भेदएवोभयोरिति वचनमारब्धव्यमिति-सिद्धान्तितवान् । तत्र भाष्यकृदपि अव्यतिरेकादेवसिद्धमितिकृत्वा लुग्वचनं न

---

१. बाह्यसत्ताया एव मुख्यत्वादियं गौणीत्यर्थं इतिं तत्रोक्तम् ।

प्रत्याचष्टे, एतेन गुणगुणिनोर्व्यतिरेकस्तदुभयसंमतइतिप्रतियन्ति । वचनारम्भप्रत्याख्यानयोस्तु नाऽस्त्यधिकारोऽस्मादृशानाम्,अतिसूक्ष्ममपि वस्तु योगिनांप्रत्यक्षगम्यम् अतो नास्मत्प्रयक्षगोचर इति तन्नास्तीतिवक्तुं न पार्यते, उपदेशपरंपरया कार्यदर्शनेनच समस्ति तादृशंवस्त्विति अधिगन्तव्यमिति 'भगवताभाष्यकृता ' बिसस्यबालाइव दह्यमाना न लक्ष्यते विकृतिः सन्निपाते । अस्तीतितां वेदयन्ते त्रिभावाः सूक्ष्मोहि भावो ऽनुमितेन गम्य ' इति 'वर्तमानेल'डितिसूत्रे ऽभ्यधायि ।

अस्यार्थः—बिसदाहेन तदन्तर्गततन्तवो दह्यमाना अपि तत्त्वेन यथा न लक्ष्यन्ते तथा एकैकक्षणः, सन्निपाते=कारकसमावेशे विकृतिः क्षणवृत्तिक्रियाविशेषश्च, अतिसूक्ष्मत्वात् नदृश्यते । अस्मद्दर्शनाऽविषयत्वमात्रेण क्षणादिकं नास्तीति न वाच्यमित्याह—अस्तीति॥ त्रिभावाः=त्रिषुकालेषुभावः ज्ञानंयेषांते त्रिभावा योगिनः स्थूलसूक्ष्मकालत्रयतादृशकालवृत्तिवस्तुविषयकज्ञानवन्तः तां विकृतिं क्रियोपलक्षितसूक्ष्मक्षणादिकं वेदयन्ते जानन्ति, स्वार्थेणिच् । कार्यान्यथाऽनुपपत्तिमूलकानुमानेन उपदेशपरंपरयाच सूक्ष्मोऽप्यर्थो गम्यः ज्ञातव्यो ऽस्माभिरिति । एवंच अस्मदादिप्रत्यक्षागोचरेपदार्थे योगिप्रत्यक्षं प्रमाणमिति बोधयन् तादृशपदार्थोनास्तीतिवादो नादरणीयः प्रामाणिकैरिति उपदिशति भगवान् भाष्यकृदिति वेदितव्यम् । अत्र—'ईदृशेस्थले विकल्पाख्यज्ञानमस्माक'मिति मञ्जूषातु चिन्त्या, योगिप्रत्यक्षस्यपारमार्थिकसद्विषयत्वेन प्रमाणज्ञानत्वात् विकल्पाख्यज्ञानस्य वस्तुशून्यत्वेन बाधकाले जायमानत्वेन च प्रमाणान्यवृत्तित्वमिति योगसूत्रभाष्यकारादिभिर्निर्णीतत्वेन प्रमाणवृत्तिस्थले तद्विरुद्धविकल्पवृत्तेरङ्गीकारायोगात् ।

'गोविंशतिरानीयतामिति गुणस्यचोदने 'इत्यादिनागुणचोदनेगुणिनोद्रव्यस्यचोदनाविषयतानिरूपणभाष्यन्तु परस्परपरिहारेण अविद्यमानत्वरूपसहचरितत्वसद्भावेनेत्यर्थकम् नत्वभेदेनेति । 'अव्यतिरेकादिति तत्सूत्रभाष्यमपि उक्ताऽव्यभिचरितत्वार्थकमेव । एवंच — अवयवावयविनोः गुणगुणिनोश्च स्वरूपतोभेदोऽतिसूक्ष्म इति भाष्यतात्पर्यमिति भाति । अतएव—'तस्यपूरणे डट्' (५-२-४८) इतिसूत्रे 'अन्यत्वादुभयोर्न्याय्यावार्क्षीशाखानिदर्शन ' मिति भाष्येऽवयवाऽवयविनोर्भेदेनवार्क्षीतिवत् पञ्चमइत्यादौ प्रकृतिप्रत्यायार्थयो र्भेदात् वृत्तिर्न्याय्येत्याह भाष्यकारः ' वृक्षस्य अवयव'इत्यर्थे 'अनुदात्तादेश्चे' (४-३-१४०)त्यवयवेऽर्थेऽञ्-

प्रत्ययः। अत्रापि भाष्ये बौद्धसत्तासद्भावे भेदस्याऽवास्तवत्वेच गमकं नोपलभामहे।

'न सत्तांपदार्थोव्यभिचरती' ति मतुप्सूत्रभाष्यन्तु अर्थक्रियाकारिवस्तु सत्तां न व्यभिचरतीत्यर्थकमिति बाह्यसत्ताविष्टवस्तुविषयकमेव बाह्यसतएवअर्थक्रियाकारित्वात् अतो न व्यभिचारःशशशृङ्गादौ, अर्थक्रियाकारित्वाभावात्तस्य। एतत्सूत्रचतुष्टयप्रदीपोद्द्योतग्रन्थस्तु बालमानसरञ्जकः। एतेन— 'बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवाऽर्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे त मवगमयन्ती' ति 'पङ्क्ती' ति सूत्रकैयटः, 'बुद्धिपरिकल्पितार्थाऽभिधायिन एवशब्दा न बाह्यार्थाभिधायिन'इति मञ्जूषायां निरूपित' मित्युद्द्योतः, एवमर्थक मञ्जूषाग्रन्थश्च भाष्यविरुद्धः। भाष्ये बाह्यपदार्थाऽभावस्य, शब्दानां बाह्यपदार्थवाचकत्वाभावस्यचाऽनुक्तेः, 'घटमानये' त्यादिशाब्दव्यवहारविलयप्रसंगात्, शास्त्रमात्रसिद्धयोः ब्रह्मस्फोटयोरपि शशविषाणसाम्यापातात्, तस्मात्पुरुषबुद्धिमात्रपरिकल्पितोऽर्थः प्रमाणप्रमितां वस्तुसत्तां न प्रतिबध्नीयात्। बौद्धोऽर्थस्तु न व्यवहारोपयोगी। किंच—असतामपि बौद्धसत्तास्वीकारेण व्यवहारोपपत्त्यभ्युपगमे व्यपदेशिवद्भावाश्रयणम्, 'आद्यन्तवदेकस्मि' न्निति सूत्रंच व्यर्थंस्यात्, आद्यन्तत्वयोः, व्यपदेशिवद्भावलभ्यधात्ववयवत्वादेश्च बौद्धसत्तासमाविष्टत्वेन आदित्वादिनिमित्तककार्याणां सुसंपादत्वात्। किंच—सर्वसाधारण्येन बौद्धसत्ताङ्गीकारे असत्पदार्थस्यैवाभावेन सदर्थकत्वे शब्दस्यप्रामाण्यम्, असदर्थकत्वेऽप्रामाण्यमिति व्यवस्थाऽनुपपत्तिः। ईदृशेविषये विकल्पाख्यवृत्त्याश्रयणंच नोपपद्यते। ननु — बौद्ध सत्तायाः 'शशविषाणं नास्ती' ति व्यवहारमात्रप्रयोजकत्वान्नैष दोष इति चेत्, तर्हि — बौद्धसतोमृगतृष्णोदकादेः दृष्टान्तत्वमपि नसंभवतीति तद्दृष्टान्तेन जगतोऽसत्त्वस्य दुःसाधत्वेन जगतः सत्यत्वसिद्धिरित्यवेहि। किंच—घटादिवस्तुनो बहिःसत्तानेति नकाप्यत्रादीद्भाष्यकृदिति मृगतृष्णोदकादिदृष्टान्तोक्तिश्च चिन्त्या।

---

१. बौद्धसत्तयैव निर्वाहात् तदाश्रयणं व्यर्थमितिभावः। नचात्रैव तात्पर्यं तस्यापीति वाच्यम् — 'आद्यन्तव' दितिसूत्रं प्रणयतः पाणिनेः पतञ्जलेः पूर्वत्वेन तथाकल्पनायोगात्, अद्वैतसिध्यादौ शशविषाणाद्यसन्मात्राविषयकत्वोक्तेः आद्यन्तत्वादीनांतुसत्त्वादित्यन्यत्रविस्तरः। मुख्येकार्यातिदेशे आदित्वाद्यनुसंधानमपि न।

'नेदंरजत' मितिवत् 'नायंवट' इत्यादि बाधज्ञानानुदयाच्च नाऽसत्त्वम् । 'आगमाऽपायिनोऽनित्या' (गी०.२ १४) इति विषयाणामनित्यत्वोक्तेः; 'नित्यानित्यवस्तु विवेक' इत्यभियुक्तोक्तेश्च अनित्यं जगदिति प्रामाणिकः पन्थाः !

ननु– 'बुद्धौकृत्वासर्वाश्चेष्टाः कर्ता धीर स्तन्वन्नीतिः । शब्देनार्थान्वाच्यान्दृष्ट्वा बुद्धौकुर्यात् पौर्वापर्यम्' इति 'परः संनिकर्षः संहिता' (१-४-१०९) इति सूत्रभाष्ये बौद्धार्थस्यैव ज्ञानविषयत्वमुक्तमिति मञ्जूषायां प्रथमपरिच्छेदोक्ते रर्थानां बौद्धत्वं तस्यैव ज्ञानविषयत्वं च भाष्यसंमतमिति युक्तमिति चेत्, अत्राहुः – तत्रभाष्ये स्पष्टमेवमनुक्तेस्तदुभयं न भाष्यसंमतम् । तत्रहिभाष्ये ऽर्थानांज्ञानविषयत्वमात्रमभिहितं न तावता भवदभिमतसिद्धिः, नापिकाचिद्धानिः परेषाम् । तत्र वागिन्द्रियस्य युगपद्वर्णद्वयोच्चारणसामर्थ्याभावात् , पूर्ववर्णनाशोत्तरमेव उत्तरवर्णोत्पत्तेश्च नष्टवर्तमानयोः पौर्वापर्यासंभवेन संनिकर्षाभावा त्सूत्रमनुपपन्नमिति 'न हि वर्णानां पौर्वापर्यमस्ति' इत्यादिना वर्णाऽनित्यत्ववादिनापूर्वपक्षिते शब्दानां नित्यत्वपक्षे न दोष इति समाधत्ते बुद्धावित्यादिना ॥ श्लोकार्थमाहभाष्यकृत् – 'बुद्धिविषयमेवशब्दानां पौर्वापर्य' मिति ॥ इद माद्यपादार्थविवरणम् । कृत्वाशास्त्रं प्रवर्तितमितिशेषः । के ते शब्दाइत्यत आह– इहच य एवमनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थेऽयंशब्दः प्रयोक्तव्य इति ॥ इदंभाष्यं द्वितीयतृतीयपादार्थविवरणपरम् । धीरः तन्वन्नीतिरित्यनयोरर्थः–प्रेक्षापूर्वकारीति ॥ समस्त विषयव्यापनशीलबुद्धिमान्पण्डित इति तदर्थः । भवतीत्यस्य श्लोकस्थकर्तेत्यनेनान्वयः । कर्ता = प्रयोक्ताभवतीत्यर्थः । 'स पश्यती' ति तृतीयपादार्थविवरणम । अक्षरार्थः स्पष्टः । अनेन – वाच्यान् = उपदेष्टव्यान् , अर्थान् , शब्देन = एतैःशब्दैः बोधयामि इति दृष्ट्वा निश्चित्य, यद्वा– शब्देन वाच्यानर्थान् एतच्छब्दवाच्योऽयमर्थ इति निश्चित्येत्यक्षरार्थः सूचितः । एतेन—शब्देन सहितानर्थानिति व्याख्याय शाब्दबोधस्य शब्दप्रकारकत्वे इदं भाष्यमपि मानमिति व्याख्यानमपास्तम् । 'अस्मिन्नर्थेऽयंशब्दः प्रयोक्तव्य इति पश्यती' तितु तात्पर्यकथनम् । 'अर्थंबुध्वाशब्दरचने' ति न्यायात् अयं शब्दोबोधनीयार्थवाचकः अयं शब्दोऽत्रार्थेप्रयोक्तव्य इति धीरो निश्चिनोतीति भावः । उक्तं पौर्वापर्यस्यबुद्धिविषयत्व-

मुपपादयति — अस्मिन्तावत्शब्दे ऽयं तावद्वर्ण स्ततोऽयं ततोऽयमितीति ॥ अस्तिक्रम इति शेषः। अस्य 'इति पौर्वापर्यंबुद्धौकुर्या' दिति श्लोकस्थेन संबन्धः। कर्तेति कर्तृपद मध्याहार्यम्। संभावनायां लिङ्। अयंभावः — शब्दास्तावन्नित्याः क्रमविशिष्टाश्च प्रयोक्तव्यत्वेन बुद्धिविषया इति तद्गतक्रमोऽपि नान्तरीयकतया वक्तृबुद्धिविषयोभवत्येव ततश्च — पौर्वापर्यमपि तद्बुद्धिविषय इति तदेव पौर्वापर्यं शास्त्रप्रवृत्तिप्रयोजकमिति निश्चित्य प्रवर्तित माचार्यैः शास्त्रमिति।

ननु—स्फोटएव नित्यः शब्दः तत्रतु वर्णक्रमौ न तस्याऽखण्डत्वादित्युक्तम्, तत्कथमेवमुच्यत इति चेत्, न — रेखागवयन्यायेन शास्त्रमनुशासकं शब्दानामिति सिद्धान्तेन रेखास्थानीये व्यञ्जके क्रमसद्भावेन घटशब्देन पटोपस्थितिवारणाय व्यङ्ग्येस्फोटे व्यञ्जकगतधर्मारोप आवश्यक इति भवतैवोक्तत्वात् तत्रापि वर्णक्रमसद्भावेन व्यङ्ग्येव्यञ्जकेच वर्णक्रमयोः सत्त्वात्। अनेन बुद्धिविषयत्वमेवार्थानामुक्तं नतु तदतिरिक्तबौद्धसत्तेति निर्मत्सरा निपुणधिषणाः प्रतिपद्येरन्निति।

स्थानिवत्सूत्रेच भाष्यकारः पदार्थानांबौद्धत्वं कण्ठतोनोब्रूते। तत्रहि — 'प्राचीनंग्रामादाम्रा' इति उपदेशे ग्रामप्राचीदेशे विद्यमानवृक्षसामान्येप्रसजन्ती आम्रत्वबुद्धिः तन्नत्येषु न्यग्रोधेष्वपि प्रसक्ता, सा 'ये क्षीरिणोऽवरोहवन्तः पृथुपर्णा स्तेन्यग्रोधा' इति विशेषोपदेशेन निवर्तते। तत उपदिष्टः पुरुषः न्यग्रोधे आम्रत्व बुद्धिं न करोतीति उक्तं — एतद्भाष्येणापि पदार्थो बुद्धिविषयो भवतीत्येवसिध्यति नतु बुद्धिस्थ इति। भाष्ये अपकृष्यमाणानित्यस्य निवर्त्यमानानित्यर्थः नतु चित्तस्थानपकृष्येति। न्यग्रोधस्थत्वेन गृहीताम्रत्वस्य न्यग्रोधस्थत्वं प्रच्याव्येत्यर्थः। बुद्धिगतनिवृत्त्युत्पत्त्यो र्वस्तुनि आरोप इत्युक्तमुद्द्योते, नतु बुद्धिस्थवस्तुगते अपकर्षोपधाने इति।

अथोच्येत — बौद्धार्थाऽनङ्गीकारे 'स भूरिति व्याहरत् स भूमिमसृजत' (तै०. ब्रा०. २-२-४-२) सर्वेषांतु सनामानि कर्माणिच पृथक्पृथक्। वेदशब्देभ्यएवादौ पृथक्संस्थाश्च निर्ममे' (मनु० १-२१) इति श्रुतिस्मृतिभ्यां भूःशब्दादिभ्य स्तदर्थज्ञानपूर्वमुक्ता भूम्यादिसृष्टि र्नोपपद्येत सृष्टेःपूर्वं बाह्यायाभुवोऽभावेन भूःशब्दादिभ्यः सिसृक्षितभूम्यादिपदार्थशक्तिग्रहबोधयोरनुदयात्। बौद्धार्थाङ्गी-

---

१. उत्पत्तिः।

कारेतु हिरण्यगर्भस्य स्वबुद्धिस्थभूम्यादिपदार्थे शक्तिग्रहस्तद्विषयकबोधश्च भवतीतिसृज्यमानपदार्थज्ञानसद्भावेन श्रुत्याद्युक्तसृष्टिरुपपद्यते इति शक्यतेवक्तुमिति स्यम् — पूर्वकल्पस्थितान् भूम्यादीन् भूःशब्दादिभ्योविज्ञाय असृजदिति श्रुतिस्मृतितात्पर्येण सृष्टेःपूर्वंबाह्यार्थाभावेपि न सृष्टिकथनानुपपत्तिः 'सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहात् हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्ते' रिति 'समाननामे' ति सूत्रे श्रीशङ्कराचार्यादिभिरुक्तत्वेन, 'यस्यपूर्वकल्पे यान्यासन् आदौ सृष्ट्यादौ वेदशब्देभ्यएवावगम्य निर्ममे' इति मनुवचनव्याख्यानेन च, कल्पान्तरस्थितपदार्थशक्तिग्रहबोधाभ्यां श्रुत्याद्युक्तसृष्टिरुपपन्नेति नेदमर्थस्य बौद्धत्वे प्रमाणंभवितुमर्हति । पतञ्जलिरिदंश्रुत्यादि नागेशोक्तदिशा क्वापिभाष्ये नव्याचष्टे ; 'शब्द इति चेन्न (ब्र०, सू०. १-३-२७) समाननामेति सूत्रद्वयशङ्करभाष्यं, मनुस्मृतिव्याख्यानंचानवलोक्य, तत्रोक्तार्थोऽसंगत इति मत्वा वा एवमभिहितवान्नागेश इति भाति । पण्डिताएवमञ्जूषायां प्रदर्शितप्रकारान्तरेषु प्रतिविधातुमीशत इति न तत्र प्रवर्ते विस्तरभिया ।

केचित्तु — शशविषाणादितुच्छवस्तुविषयकाविकल्पाख्यवृत्तिः स्वविषयवस्तुनो न पदवृत्तिविषयतामपेक्षते, ( शक्तिग्रहंनापेक्षत इतियावत् ) देशकालसंबन्धवत एव पदवृत्तिविषयत्वं तुच्छस्यतु तदभावान्नतत्त्वम् स्पष्टंचेदमद्वैतसिद्धितद्व्याख्यानयो रविद्यानिर्वाच्यत्वनिरूपणप्रकरणे तत्रहि — निरुपाख्यत्वमसत्त्वं निरुपाख्यत्वस्य पदवृत्त्यविषयत्वरूपत्वात् ( सि० ) देशकालसंबन्धाभावेन तुच्छस्य न पदवृत्तिविषयत्वं शशविषाणादिपदजन्यो विकल्पस्तु न पदवृत्तिसापेक्षः शाब्दप्रमाविपर्ययोरेव तत्त्वादितिभाव (व्या० चन्द्रिका ) इत्युक्तम् — शशविषाणादिशब्दैः शक्तिग्रहाद्यपेक्षामन्तरेणापि बोधोजायते शब्दशक्तिमहिम्नेति 'शब्दज्ञाने' ति सूत्रतात्पर्यमिति तयोराशयः। एवंच असतांबौद्धसत्तामन्तरापि निर्वाहात् तेषां तत्कल्पनं मुधैव उदाहृतमहाभाष्यार्थाऽपर्यालोचनया अद्वैतसिध्यादौतथोक्तिरितितु न सहेरन् विपश्चितः। न च — बुध्यतिरिक्तदेशसंबन्धाभाव इति तत्तात्पर्यमिति वाच्यम्— संकोचेकारणाभावात् , एवं कल्पनापेक्षया तत्पथाश्रयणस्य वरत्वात् । नच अत्रवृत्तिज्ञानमन्तराशाब्दबोध इत्यङ्गीकारे तत्प-

दजन्यशाब्दबुद्धिप्रति तत्पदनिरूपितवृत्तिज्ञानं हेतुरिति व्याप्तेर्व्यभिचारइतिवाच्यम्- व्याप्तेःशशविषणादिबोधातिरिक्तबोधविषयकत्वकल्पनेनादोष इत्याशयात् । नचैवमपि वृत्त्यभावेप्रातिपदिकत्वानापत्तिरिति वाच्यम्- अनुकरणस्थले सादृश्याख्यसंबन्धेन अनुकार्यबोधकत्वेन अर्थवत्त्वात्प्रातिपदिकत्ववत् शब्दज्ञानोत्तरभाविविकल्पाख्यवृत्तिविषयतासंबन्धेन असदर्थबोधकत्वात् अर्थवत्त्वेन प्रातिपदिकत्वोपपत्तेः ।

किंच — मतुप्सूत्रकैयटोक्तमेवार्थम् ' एवंशक्योप्यर्थ ' इत्यादिना निरूप्य ' सत्तापि शब्दवाच्येतितद्भाव ' इत्युक्तत्वेन सर्वमिदंकैयटाभिमतमेव नतुस्वाभिमतमित्यपिवक्तुं शक्यम् । न च—बुद्धिस्थपदार्थाङ्गीकर्त्राशय ' इति कलायां व्याख्यानात् नागेशस्यापि इष्टमेतदिति जानीम इति वाच्यम् – तद्व्याख्यानस्य 'तद्भाव' इति अक्षराननुगुणत्वात् । यदि इदं स्वस्येष्टंस्यात् तर्हि ' सत्तापि शब्दवाच्ये ' त्येतावदेवावक्ष्यत् । सर्वोपि पदार्थानां बौद्धत्वनिरूपणपरो मञ्जूषाग्रन्थः कैयटोक्तस्यैवोपोद्बलकः । अस्तुवा कलोक्तदिशा नागेशस्यापि संमतमेतदिति, तावतापि न किंचिद्धीयते प्रमाणप्रमितप्रपञ्चसत्यतावादिनाम् । एतेन ' बुद्धिव्यवस्थापिते ' त्यादि प्रदीपमुपजीव्य वस्तूनामुक्तं बुध्याकारत्वम् , ' प्रतिभासमात्रशरीरस्य मिथ्यावस्तुन ' इति मञ्जूषोक्तं प्रतिभासमात्रशरीरत्वंच न युक्तमिति बोध्यम् , सूत्रभाष्यकाराभ्यां वस्तुनोबुध्याकारत्वाद्यनुक्तेः । किंच — एवमङ्गीकारेविज्ञानवादिमतप्रवेशापत्तिः। अयं तु वादो निराकृतो व्यासेन द्वितीयस्य द्वितीयेचरणे ब्रह्ममीमांसायाम् । पाणिनिपतञ्जल्योरपि न संमतोऽयं वाद इति विदांकुर्वन्तु सूरयः ।

पदार्थानां बौद्धसत्तां वक्ति न क्वापि भाष्यकृत् ।
बहिःसत्ता नेतिनाह तस्मात्सत्यं घटादिकम् ॥ १ ॥
अतोऽसत्त्वं घटादेस्तुवक्तुं नार्हन्ति शाब्दिकाः ।
आहुःकैयटभट्टोजि नागेशाद्यास्तु शाब्दिकाः ॥ २ ॥
आश्रित्यमतमन्येषां नैतद्भाष्यकृतोमतम् ।
विमृश्य भाष्यमेवं हि संगिरन्ते मनीषिणः ॥ ३ ॥

---

( १७ - सर्वतन्त्राणामद्वैताङ्गत्वनिरा० . )

ननु – मञ्जूषायां ' स्थूलसूक्ष्मशरीरातिरिक्तात्मसाधनद्वारा अध्यात्मशास्त्रा-

ङ्गमित्याशयः, गुर्वादिभिर्वादे तत्वनिर्णयार्थंचैतदित्यपि तत्रैवोक्तम्। अनेन अध्यात्मप्रतिपादकाऽद्वैतशास्त्रातिरिक्तसर्वतंत्राणा मेवंविधत्वंसूचित' मिति आख्यातार्थवादे वर्तमानत्वनिर्वचनावसरे उक्तत्वेन, अद्वैतस्यैव पारमार्थिकत्वम् , तदतिरिक्तसांख्यादिशास्त्रोक्तात्मनानात्वादेरपारमार्थिकत्वं ( मायिकत्वं ) सिध्यति अतः सांख्योक्तो भेदो मायिकएवेति तदनुयायिनां वैयाकरणानामपि मते तस्य तथात्वमेव युक्तमिति चेत्, न–वेदतदनुसारिप्रमाणशरणानाम् ' आत्मानं रथिनंविद्धि शरीरं रथमेव च ( का० ३-३) एवमेव अथायमात्मा इदंशरीरं निहत्याऽविद्यां गमयित्वा ऽन्यमाक्रममाक्रम्य, एवमेव .... अन्यन्नवतरं कल्याणतरं रूपं कुरुते (बृ० ४-४-३)न हन्यते हन्यमानेशरीरे (गी० २-२०,का० उ० २-१८)तथाशरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ( गी० २-२२ ) अन्तवन्तइमेदेहा नित्यस्योक्ताःशरीरिणः ( गी० २ - २८ ) ' तदन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्या ' (ब्र० सू० ३-९-१ ) मिति श्रुत्यादिभिरेव देहातिरिक्तात्मविवेकसंभवेन तत्र सांख्यादितन्त्रापेक्षाभावात् तदर्थं तेषामङ्गत्वकल्पनाया आवश्यकत्वाभावात् । किंच – अङ्गाङ्गिभावकल्पनाया मार्जारक्षीरपानन्यायेन क्वापि क्षोणीकोणे स्थित्वा नेत्रेनिमील्य स्ववासनामात्रसाहायकेन कल्पितत्वात् । यदिभवदुक्तोऽङ्गाङ्गिभावो वास्तवो भवेत्, तदा गौतमादिभिरपि स्वस्वशास्त्रमध्यात्मबोधकाद्वैतशास्त्राङ्गमित्यनुसंधानपूर्वं प्रणीतं स्यात् , तथात्वेच तेषांतथाविधत्वं शङ्कराचार्यप्रभृतिभिरपि विज्ञातमेवभवेत्, सतितुतेषु तेषां तादृशेविज्ञाने ' ईक्षतेर्नाशब्दम् ( १-१-५) ईक्षतिकर्मव्यपदेशात्सः ( १-३-१३ ) स्मृत्यनवकाशदोषप्रसंग इति चेन्ना ऽन्यस्मृत्यनवकाशदोषप्रसंगात् ( २-१-१ ) रचनानुपपत्तेश्च नानुमानम् ( २-२-१ ) एतेन योगः प्रत्युक्तः ( २-१-४ ) आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च '(१-४-१) इत्यादीनां सांख्ययोगादि समयदूषणपरतया शंकराचार्यकृतव्याख्यानस्य, तथा–'आभासएवचे'(२-३-५०) ति सूत्रे आत्मबहुत्ववादिनां सांख्यकाणादादीनांमते सर्वेषामात्मनां सान्निध्याविशेषात् एकेनात्मनामनःसंयोगे सर्वेषामपिमनस्संयोगस्य नान्तरयीकतया एकस्यसुखित्वे, दुःखित्वेच, सर्वेषांसुखित्वदुःखित्वेस्यातामिति दोषकथनस्य, तथा – ' अदृष्टा-

ऽनियमात्' ( ब्र० २-३-५१ ) इत्यादिसूत्रत्रयस्य आत्मबहुत्ववादे अनुपपत्तिनिरूपणपरतया शंकराचार्यकृतव्याख्यानस्य, तथा – शंकराचार्यकृतभाष्यरीत्या-प्रधानकारणतावादनिरसनतात्पर्यकाणांबहूनांसूत्राणाम् ,तत्तत्सूत्रशांकरभाष्यस्यच, तथा – 'एतेन योगः प्रत्युक्तः' ( ब्र० सू० २-१-४ ) इति योगशास्त्रप्रत्याख्यानपरेसूत्रे 'आत्मभेदज्ञानं मुक्तिसाधनमिति सांख्ययोगमतम् , आत्मैकत्वविज्ञानं मुक्तिसाधनमिति ब्रह्मवादिसिद्धान्तविरुद्धमिति तात्पर्यकवैदिकात्मविज्ञानादन्यत् न निःश्रेयससाधनम् 'तमेवे' ति श्रुतेः, द्वैतिनो हि ते सांख्यायोगाश्च नात्मैकत्वदर्शिन' इति शांकरभाष्यस्य, तथा — तत्रैवसूत्रे 'तत्कारणं सांख्ययोगाभिपन्नम्' (श्वे० ३-७) इति तु प्रत्याख्यातयोगविषयं न, किंतु वैदिकज्ञानध्यानपर' मिति तयोः श्रौतत्वाभावकथनस्य, तथा तत्रैवसूत्रे 'सर्वाणितर्कपराणिप्रतिवक्तव्यानि' इति 'वैशेषिकादीन्यपि तन्त्राणि आत्मभेदपरत्वात् ब्रह्मवित्सिद्धान्तविरुद्धत्वेन तान्युपेक्ष्याणि' इति सूत्रकृदाशयवर्णनपरशांकरभाष्यस्य, तथा–तत्रैवसूत्रे 'तान्यपितर्कोपपत्तिभ्यां तत्वज्ञानायोपकुर्वन्तीति शङ्कायाम् , उपकुर्वन्तुनाम तत्वज्ञानंतु वेदान्तवाक्येभ्यएवे' ति तर्कपराणां तत्वज्ञानसाधनत्वाभावेनोपेक्ष्याण्येवेति वेदान्तशास्त्राऽतिरिक्तशास्त्राणां निन्दापरशांकरभाष्यस्य, तथा – वाजसनेये मैत्रेयी ब्राह्मणे ( ४ - १५ ) अहो अनुमानकौशलंदर्शित मपुच्छशृंगै स्तार्किकबलीवर्दै' रिति शंकराचार्यकृतभेदवादितार्किकनिन्दनस्य, तथा — तैत्तिरीयभृगुवल्यां (१०-४) शांकरभाष्ये 'कपिलकाणादादिविरोध' इति आत्मैकत्वस्य सांख्यादिविरोधमाशंक्य 'तेषां मूलाभावे वेदविरोधेच भ्रान्तत्वोपपत्ते' रिति तेषामज्ञानित्वकथनस्यच, तत्तत्तन्त्रकृदभिप्रायाऽनभिज्ञानविजृंभितत्वं स्यात् यदिसांख्यादीनामद्वैताङ्गत्वं तर्हि अङ्गत्वात्तेषां न तद्विरोध इत्येवावक्ष्यत् तथैववक्तव्यंच।

---

१. अत्रनामपदेन न तदुपकारमपेक्षते तत्वज्ञानं, तेनविनापि तत्वज्ञानोदयात् इति बोधयता तदुपकारवादिनि तदुपकारेच अनास्थाऽऽविष्कृता।

२. इदमत्रचिन्त्यम् – अस्तिमुक्तिसौधारोहणेसोपानपरंपरा, तत्र अन्तिमसोपानमद्वैतदर्शनम् , सांख्यादयस्तुपूर्वपूर्वसोपानानि, तत्र अन्तिमसोपानमारुरुक्षोरुपकुर्वन्ति पूर्वसोपानानि सांख्यादय इति न परस्परविरोध इति केषांचिदर्वाचीना-

किंच — अत्रोक्तरीत्या सर्वशास्त्राणामद्वैतशास्त्राङ्गत्वे प्रथमपरिच्छेद एव प्रपञ्चस्य मायिकत्वनिरूपणावसरे प्रतीयमानभेदपराणां काणादादिशास्त्राणामपि अध्यात्मशास्त्राङ्गतया न तद्विरोध इत्युक्त्यैवेष्टसिद्धौ ' कणादादयोपि मायिकत्वेन (मिथ्यात्वेन) ब्रह्मभूतत्वेन च ज्ञातस्यप्रपञ्चस्य बोधनीयशिष्याधिकारानुरोधेन मायिकत्वाद्यपलप्य ब्रह्मत्वेन ज्ञातपरमाण्वादिभ्यः सृष्टि ' मित्यादिना तेषांमायिकत्वाद्यपलापकत्वोक्तिर्व्यर्था । न च एवमुक्तिर्मायिकत्वसाधिका तेषामपलापकत्वं विना प्रपञ्चस्य तत्वासिद्धेरिति वाच्यम् — यदिमायिकत्वं प्रपञ्चे प्रमाणप्रमितमभविष्यत् तदेयमुक्तिः तत्साधिकाऽभविष्यत् । ' असत्यम प्रतिष्ठं त ' ( गी० १५ ) इति जगतोमायिकत्वनिषेधात्तस्यैवाप्रामाणिकत्वेन तदपलापेन अन्यथावादित्वोक्तिः तेषां निन्दापर्यवसायिन्येव भवेत् ।

किंच — यदिकणादादीनां प्रपञ्चमायिकत्वादिज्ञानं तदा तैरस्मदीयमिदंशास्त्रमध्यात्मप्रतिपादकाद्वैतशास्त्रस्याङ्गम् , इदं सर्वमात्मस्वरूपभूतमेवेति वास्तवएवार्थ उपदेष्टव्यः, तथावादित्वएव ते आप्ता आचार्यपदभूषिताश्च भवेयुः । यथार्थवादिन एव हि आप्ता आचार्याश्चभवन्ति । ' आप्तस्तु यथार्थवक्ता ' इति गौतमीयोक्तेः, ' आप्तोनाम — अनुभवेन वस्तुतत्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादनन्यथावादी ( १ - प्र० १ - १४ ) आप्तत्वंच भ्रमादिदोषराहित्ये सति तत्तक्रियाविषये स्वेष्टप्रतिबन्धाऽनिष्टोत्पत्त्युभयानुकूलयत्नाभाववत्त्वम् ' ( ९५ - १५ ) इति मञ्जूषोक्तेश्च । वस्तुतत्वमपलप्य भाषमाणानां यथार्थवक्तृत्वाभावेन अन्यथावादित्वेनच स्वेष्टप्रतिबन्धाद्यनुकूलयत्नवन्तएव ते इत्यध्यवसायात् अनाप्ताएवेति अविश्वसनीयवचना भवेयुः । ' आचिनोति हि शास्त्रार्थ माचारे स्थापयत्यपि । स्वयमाचरते यस्तु त माचार्यं प्रचक्षत'इति स्मरणात , यथार्थतोऽनुभूतशास्त्रार्थोपदेशेन परानपि सदाचारेवर्तयतामेवाचार्यपदार्हत्वेन अनुभूतार्थविरुद्धार्थोपदेष्टारः कथमाचार्यपदभाजो भवेयुः ।

किंच—कणादादयः सर्वत्रात्मत्वबुद्धिमन्त स्तांबुद्धि मपलप्य परमाणुकारणतां शिष्येभ्य उपादिशन्नितिवदन् प्रष्टव्यः, किं भवानित्थंस्वप्नेऽबुध्यत, कणादादयएव

नामद्वैतिनां वादःशाङ्करभाष्यविरोधादुपेक्ष्यः , तत्र भाष्य एव सांख्यादीनां निराकरणात् परस्परं विरोध अङ्गत्वंतु नयुक्तमिति स्पष्टं भाष्यकृदाशयावगमात् ।

भवदन्तिकमेत्य तथाऽवदन् स्वानुभवोऽन्यः उपदिष्टोऽर्थश्चान्य इति। नात्राऽऽद्यः- कल्पः शक्य आस्थातुं, भवन्मते स्वाप्नवटादेर्बोधोत्तरमदर्शनेनाऽसत्त्ववत् अस्याप्यस- त्त्वात्। द्वितीयोऽपि कल्पो न तरां घटते। कीर्तिमात्रशेषाणां कणादादीनामद्यत्वे भवदन्तिकागमनाऽसंभवात्। इत्थंच भवद्वचनमविश्वसनीयमेव। एतेन–मञ्जूषा याम्— उत्पत्तिविनाशौ तद्गतमारोपितत्वमपलप्य कणादसांख्याभ्यामुक्ताविति प्र- थमपरिच्छेदोक्तं च चिन्त्यम्। ततश्च — सांख्ययोगकणादादिशास्त्राणां नाद्वैत शास्त्राङ्गता, तथावादस्तु स्वाभिमताद्वैतस्य सर्वतन्त्रानुकूल्यसंपादनाग्रहमूलकः।

अतस्तेषां स्वातन्त्र्यमेव। तेषु सिद्धान्तितमात्मनानात्वादिकमपि पारमार्थि- कमेव नतु मायिकम्, सांख्यादौ तस्य तथात्वकल्पकवचनानुपलम्भात्। पाणि- निस्तु भेदवादीति आवेदितं पूर्वमेव। एतेन — सांख्यशास्त्रानुसारित्वं वैयाकरण- स्येति सूचयती' ति स्त्रियामिति सूत्रोद्द्योते वदता नागेशेनापि पाणिनेर्भेदवादिता- ऽभ्युपगतप्राया, सांख्यानां भेदवादित्वेन तदनुसारिणो वैयाकरणस्यापि तथात्वस्य न्यायप्राप्तत्वात्। सांख्यानां भेदवादित्वंतु (१०३ पु) पूर्वोदाहृतशङ्करभाष्यात्, ' कपिलोहिनामसर्वात्मत्वदर्शनं नानुमन्यते आत्मभेदाभ्युपगमात्' इत्यादिस्मृत्यधि- करणीय शङ्करभाष्यादितः सांख्यादिग्रन्थतश्चाऽध्यवसीयते।

ननु – ' तत्त्वाध्यवसाये' ति सूत्रमुपन्यस्य, इदंशास्त्रं व्यर्थमत आहेत्यव- तार्य, तत्सूत्रभाष्यमुपन्यस्य ' तस्यामवस्थायामित्यादिना तदाशय' इत्यन्तेन सौ- गतमतखण्डनतात्पर्यकमिदं शास्त्रमध्यात्माङ्गं भवति, ' अनेने' त्यादिना ' सर्व- तन्त्राणामेवंविधत्वं सूचित' मिति च मञ्जूषायामुपपादनात् सर्वतन्त्राणाम- द्वैताङ्गता गौतमसूत्रभाष्यसंमतेति चेत्, अत्राहुः—सूत्रकारोभगवान्गौतमः प्रमा- णादीनां तत्त्वज्ञानादपवर्ग इति प्रथमसूत्रेणाऽभिधाय तत्राप्यात्मज्ञानं प्रधानं तच्चात्म- संस्कारमपेक्षते, तस्यसाधनानि यमनियमादीनि तानियोगशास्त्रात् ज्ञेयानीति, 'यम- नियमाभ्यामात्मसंस्कारो, योगाच्चाध्यात्मविध्युपायै' (४-२-४६) रिति सूत्रेणबोध- यन् ' ज्ञानग्रहणाऽभ्यासस्तद्विद्यैश्च संवाद ' (४७) इति सूत्रेणसाधनान्तरमप्याह। तत्र — तदर्थम् = अपवर्गार्थम्, योगात् = योगशास्त्रात्, अन्यत्स्पष्टं इति प्रथम- सूत्रार्थः। ज्ञानमात्मविद्या, तद्विद्यैः = आत्मविद्याविचक्षणैः, अन्यत्स्पष्टम्।

इति द्वितीयसूत्रार्थः। नन्वेवंप्रधाने आत्मतत्त्वज्ञाने वादकथयैवसिद्धे, जल्पवितण्डाभ्यांकिंकृत्यमित्याक्षेपे, तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्' (५०) इति सूत्रितवान्। इदंच – भाष्ये – स्वपक्षरागेणचैकेन्यायमतिवर्तन्ते, तत्र – (तत्त्वेति) अनुत्पन्नतत्त्वज्ञानाना मप्रहीणदोषाणां तदर्थंघटमानानामेत' दिति व्याख्यातम्। न्यायं= सद्विचारनियमम् तदर्थं – तत्त्वज्ञानार्थम्। एतत् = जल्पोवितण्डश्चेतिद्वयम्। अन्यत् सुगमम्। अयंभावः – वादे तत्त्वविचारसभायांवा, मतान्तरैकृतादरैः प्रयुक्तकुतर्कनिरसनेन स्वपक्षसंरक्षणं जल्पवितण्डयोःफल मिति। अनेनसूत्रभाष्येण गौतमीयस्या, द्वैताङ्गतेति, सर्वतन्त्राणामेवंविधत्वम् (अद्वैताङ्गत्वम्) सूचित' मितिचार्थलाभः कथमितिविमृशन्तु सुधियः। नच – अद्वैतशास्त्रविद्भिः स्वसमयपरिपालनाय जल्पवितण्डयोराश्रयणेन अस्य अद्वैताङ्गत्वमिति तात्पर्यमिति वाच्यम् – सर्वतन्त्रैरपि स्वस्वसमयरक्षणाय जल्पवितण्डयोराश्रयणा त्सर्वतन्त्राङ्गत्वसिध्या नागेशमनोरथाऽसिद्धेः। अयंहितस्यमनोरथः अद्वैतशास्त्रमेक मेवप्रधानम्, इतरत्सर्वंतदङ्गतयाऽप्रधानमिति। अंशेन उपकारे विशिष्टस्यशास्त्रस्य सर्वेषांच तन्त्राणामंगताकल्पनं कथं युक्तं भवेत्, उपकारमात्रेण अप्राधान्यं कथं सिध्येत् नहिलोके उपकुर्वति पुरुषे अप्राधान्यं कल्पयन्तिप्राज्ञाः। अंशेनोपकारमात्रेणाङ्गतासिद्धौ अद्वैतशास्त्रमपि अंशेनाऽन्योपकारकं भवतीतिशक्यं वक्तुमिति तदप्यन्यस्याङ्गं भवेदितितदिष्टाऽसिद्धिः।

किंच – 'नन्वेवंतेनसिद्ध मिदं शास्त्रं व्यर्थ' मिति 'तत्त्वाध्यवसाये' ति सूत्रावतरणम्, तन्मतखण्डनतात्पर्यकमिदंशास्त्र' मिति शास्त्रप्रयोजनकथनंचाऽयुक्तम्। 'तत्त्वाध्यवसाये' ति सूत्रस्यशास्त्रप्रयोजननिरूपणायाऽप्रवृत्तेः। भाष्यकृदादिभिः तथाऽव्याख्यानात्, प्रत्युत प्रथमसूत्रभाष्ये च 'तदवसानो तत्त्वज्ञानफलो वादः, तत्पालनार्थे' जल्पवितण्डे, तद्विशेषौ जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्त' मिति जल्पवितण्डाप्रयोजनपरतयैव व्याख्यातत्वाच्च।

किंच –'तदर्थ' मितिसूत्रे योगपदं वेदान्तानामप्युपलक्षणमिति नयुक्तम्, वेदान्तत्वेन सर्वाभिमतायां वैयासिक्यां चतुर्लक्षण्यां यमनियमस्वरूपाऽनिरूपणात्। यद्यपि मञ्जूषातः नागेशस्याभिमतमद्वैतवेदान्तशास्त्रं परमार्थसाराद्यमिति सि-

ध्यति, तथापि तत्रापि न यमनियमादिस्वरूपनिरूपणं पश्यामः । अतोऽफलमुपलक्षणं कथनम् । ननु – आत्मज्ञानं वेदान्तादेव भवतीति तदध्यध्येयमितिबोधन मुपलक्षणफलमिति चेत्, शृणु = यमनियमादिवत् आत्मविद्याध्ययनमपि तत्त्वाध्यवसायाङ्गमिति सूत्रकृदेव 'ज्ञानग्रहणे' ति सूत्रेणाह । तत्र—ज्ञानपदस्यात्मविद्येत्यर्थः । एवंच – तदुपलक्षणत्वोक्तेर्न प्रयोजनम् । अयमत्रनैयायिकाशयः – आन्वीक्षिक्येव आत्मविद्या 'ज्ञानग्रहणे' ति सूत्रे 'ज्ञानपदं करणल्युडन्तं ज्ञानमात्मविद्या' इति भाष्योक्तेः, आत्मविद्येतिप्रतीकमादाय आन्वीक्षिकीविद्यैवात्मविद्येति व्याख्यानात् । 'प्रमाणप्रमेये' ति प्रथमसूत्रे 'इहाध्यात्मविद्याया मात्मज्ञानं तत्त्वज्ञान' मिति वात्स्यायनेन इहेति भाषितत्वात्, सूत्रकृता 'तत्त्वज्ञानान्निःश्रेयसाधिगम' इति प्रथम सूत्रशेषेण स्वीयतन्त्रस्य आत्मतत्त्वज्ञानतत्साध्यमोक्षोभयफलकत्वाभिधानाच्च । तस्या एव अध्ययनधारणसततचिन्तनानिकार्याणि तैश्च, अन्यैश्चोक्ताङ्गैः आत्माध्यवसायो भवति तेन चापवर्गः । एवंच—प्रधानमेव गौतमीयं तन्त्रं मोक्षसाधनं नान्यस्याङ्गं भवितुमर्हतीति । एवमेव सर्वतन्त्रकृत्सिद्धान्तोपीति न सर्वेषामद्वैताङ्गता ।

एतेन — 'उपनिषदेव मुख्याध्यात्मविद्या, मुख्यंतत्त्वज्ञानमध्यात्मविद्योपनिषदुक्तमेव अन्यत्तु तदुपाय इति स्पष्टमेवोक्त' मिति उपरितनोपि मञ्जूषाग्रन्थः चिन्त्यः । ईश्वरसत्त्वे तस्यजगत्कर्तृत्वेच प्रसिद्धां 'सदेवसोम्य' (छा० ६) यतो वा' (तै० उ० ३) इत्यादिश्रुतीः परित्यज्य अनुमानस्यैव नैयायिकैः शरणीकरणेन तेषामान्वीक्षिक्यामेव अध्यात्मविद्यात्वाध्यवसायो, नौपनिषदि, इत्यवगतेन, तज्जन्येच ज्ञाने तेषांमोक्षसाधनत्वनिश्चयाभावानुमानात् । औपनिषददर्शनं तैस्त्यक्तमित्यभियुक्तोक्तेश्च । उक्तंच शाङ्करेगीताभाष्ये – 'औपनिषदं दर्शनंत्यक्तंवैशेषिकैः, सांख्यार्हतबौद्धैश्चे' ति । सूत्रभाष्येच समुदायाधिकरणे (२-२-४) वैशेषिकराद्धान्तो दुर्युक्तियोगात् वेदविरुद्धत्वात् शिष्टाऽपरिग्रहाच्च नापेक्षितव्य इत्युक्तम्, सोऽर्धवैनाशिक इति वैनाशिकत्वसाम्यात् सर्ववैनाशिकराद्धान्तो नतरामपेक्षितव्य' इति । अत्र वैशेषिकपदं गौतमस्याप्युपलक्षण मुभयोरत्रविषये एकाभिप्रायात् । अतएव 'महद्दीर्घाधिकरणं (२-२ २) वैशेषिकनैयायिकमतं निराकरोति –'मह' दित्यवतार्य सुरेश्वराचार्य उभयसमयानिराकरणपरतया योजयतिस्म ।

किंच — 'प्रदीपः सर्वविद्याना मुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिते 'ति प्रमाणोपन्यासेन सर्वविद्योपकारकत्वमुक्तं गौतमीयन्यायभाष्ये, 'आन्वीक्षिकी त्रयीवार्ता दण्डनीतिश्चतुर्थिका' इति प्रमाणोदाहरणेन त्रय्यांसर्वविद्या अन्तर्भाव्य त्रय्यादिसर्वविद्योपकारकत्वमान्वीक्षिक्या व्याख्यातृभिर्व्यवस्थापितम् । अत अध्यात्मविद्यामात्रोपकारकत्वासिद्धिरिति 'तदुपाय' इति चिन्त्यम्, तस्यैवोपाय इति हि तदाशयः। किंच — प्रमाणे आन्वीक्षिक्येव-प्रकृतेति अन्यादिनिसामान्योक्तिचिन्त्या, आन्वीक्षिक्यतिरिक्तस्य प्रमाणे ऽश्रवणात् न्यायभाष्यादावनुक्तेश्च । ननु — न्यायमञ्जर्यां मोक्षस्वरूपनिरूपणावसरे 'आत्मावा अरेद्रष्टव्य' (बृ०. ) इति वेदान्तोक्तदिशा आत्मोपासनेन स्वरूपावस्थानमोक्षसिद्धिरित्युक्ते न्यायतन्त्रं वेदान्ताऽङ्गमितिसिध्या स्वतन्त्रमिदमितिकथमुपपद्यत इति चेत्, सत्यम् — 'वैशेषिकैरौपनिषदं दर्शनंत्यक्त' मिति शाङ्करभाष्योक्त्या प्राप्तमवैदिकत्वदूषणदूरीकरणया तथोक्तिः जयन्तस्य, अस्तुवाउपनिषदङ्गत्वं तावता नाद्वैतशास्त्राङ्गत्वसिद्धिः, उपनिषदामद्वैतपरत्वात् । जयन्तस्यापि सर्वं शास्त्रं द्वैतपरमेवेति अभिप्रायात्, अद्वैताङ्गतायामेव विवादः । किंच—येषुफलश्रवणं तेषां सर्वतन्त्राणां स्वातन्त्र्येणमोक्षफलकत्वमेवेति तत्तन्त्रकृतामभिप्रायः । अत एव — शङ्कराचार्यादीनां तत्तन्मतखण्डनेप्रवृत्तिः सफला भवतीतिध्येयम् ।

किंच—नागेशाभिमत मद्वैतशास्त्रम्, ब्रह्मोपादानकारणम्, आत्मनोनानात्वाभावं बाह्यानामर्थानामसत्त्वंच प्रतिपादयति गौतमीयादिकन्तु तन्त्रं ईश्वरः निमित्तकारणम्, आत्मनोभेदं बाह्योऽर्थःसन्निति बोधयतीति परमप्रमेयेपरस्परमस्तिमहान् विसंवाद 'तत्त्वमसि, ब्रह्मवित् ब्रह्मैवभवती' त्याद्यैक्यपरश्रुतिवाक्यानां साम्येपर्यवसानमिति तदनुयायिनोमुक्तावलीकारादयः ततश्च अत्यन्तं विरुद्धयोः शास्त्रयो रङ्गाङ्गिभावेकःप्रेक्षावान् मन्येत, क्वोवानैयायिकःसमर्थयेत; अतः गौतमीयादितन्त्रस्य अद्वैतशास्त्राङ्गत्वं तद्भाष्यत एव सिद्धमित्येतत् उपेक्ष्यमेव । सर्वेषांतन्त्राणामद्वैताङ्गत्वं वयं मन्मह इति यदि वदेत् तदाऽयं धीमान् श्लाघनीयप्रज्ञोभवेदिति संक्षेपः ।

नागेशाभिमताद्वैतशास्त्रस्याऽऽस्ते विरोधनम् ।
गौतमीयादितन्त्रैस्तु तस्मान्नैषां तदङ्गता ॥

—•—

( १८ - आत्मैक्ये भाष्यसंमति निरासः )

ननु — 'कथं द्वावात्मानौ अन्तरात्माशरीरात्मे' ति 'णेरणौ यत्कर्मणौ चेत् सकर्ताऽनाध्याने (पा०सू० १-३-६७) कर्मवत्कर्मणातुल्यक्रियः' (पा० सू० ३ १-८७) इति सूत्रद्वयभाष्येऽन्तःकरणाद्युपाधिभेदेन आत्मद्वैविध्यं वदतो भगवतः पतञ्जले रतदैक्यमनुमतमिति निर्णीयतइति चेत्, न — तत्सूत्रद्वयभाष्यस्य आत्मैकत्वप्रतिपादनायाऽप्रवृत्तेः। तथाहि — तत्राद्ये 'हन्त्यात्मान' मित्यण्यन्तावस्थायां कर्मभूतस्यात्मनः, 'घातयत्यात्मे'ति ण्यन्तावस्थायां कर्तृत्वात् अनेनात्मनेपदंस्यादितिचोद्ये 'आत्मनःकर्मत्वे प्रतिषेधोवक्तव्यः' इति वचनंप्रवृत्तम्, अणौ कर्मणआत्मनो णौकर्तृत्वेऽपि नानेनात्मनेपदमितितदर्थः।. नेदंनिषेधवचनं कर्तव्यं प्रथमकक्ष्यायां कर्मणो द्वितीयकक्ष्यायां कर्तृत्वाभावादित्यभिप्रेत्याह — 'नवा ण्यन्तेऽन्यस्यकर्तृत्वात्' इति। तदर्थमाह — अन्यदत्राऽण्यन्तेकर्म अन्यो ण्यन्तस्यकर्ता, कथम्? 'द्वावात्माना' वित्यादि॥ भाष्यार्थःस्पष्टः। अयंभावः — अन्तरात्मा ईश्वरोऽन्तर्यामी, शरीरात्माजीवः, पतञ्जलिमते ईश्वरः पुरुषइतिचेतनद्वयमस्तीति योगसूत्रतालेभात्, इदमन्तरात्मनःकर्म यत् पुरुषस्य (जीवस्य) तत्तत्पुण्य पापानुसारेण तत्तदुचितव्यापारे प्रवर्तनम्, तेन स्वकर्मानुसारात्पुरुषः सुखदुःखे अनुभवति, यदा पुण्यंकर्म करोतिजीवः, तदाअन्तरात्मा तदनुगुणफलप्रदानाय जागर्ति, तदेवतस्य सुखम्, यदातु पापकर्म करोतिजीवः, तदा अन्तरात्मा तस्मै द्रुह्यति तदेव तस्यदुःखमिति। अन्तरात्मा अन्तःकरणम्, शरीरात्मातु शरीरमेव 'आत्मायत्नोधृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्मचे' ति कोशात् इति व्याख्यानंतु शरीरान्तःकरणयोरुभयोरपि जडत्वात् भोक्तृत्वायोगेन 'सुखदुःखेअनुभव' तीति भाष्याननुगुणम्।

किंच — भाष्येशरीरमिति वक्तव्ये आत्मेतिपदवैयर्थ्यं च। सांख्यमतेपि 'पुरुषोऽस्तिभोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च' (सां० का० १७) इति पुरुषस्यैव भोक्तृत्वाभ्युपगमात्। 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषःसुखदुःखानां भोक्तृत्वेहेतुरुच्यते'

(गी० १३-२०) इति गीतायांपुरुषस्यैवभोक्तृत्वाभिधानात् ।' सुखादिभ्यःकर्तृवेदनायां '(पा० सू० ३-१-१८) इति सूत्रेण स्वाश्रयसुखादिविषयकवेदनायाम्(अनुभवे) सुखादिभ्यः क्यङंविदधता पाणिनिना सुखानुभवयोरात्मनिष्ठत्वबोधनाच्च । पदवेदना अनुभव इति स्पष्टं मञ्जर्याम् । सुखयते इत्यस्य स्वसमवेतंसुखं स्वयमनुभवतीत्यर्थः । एतेन—अङ्गसौष्ठवं तद्वैकल्यंच शरीरात्मनः सुखदुःखानुभव इति च मन्दम् । अंगसौष्ठवादिनापि पुरुषस्यैव सुखदुःखानुभव इति प्रत्यक्षसिद्धत्वात्, तयोरनुभवस्यचेतनधर्मत्वेन शरीरस्यतदयोगाच्च । ' हन्ति आत्मान' मित्यस्य पुरुषः अन्यायाचरणेन आत्मानं नाशयति इत्यर्थः, घातयत्यात्मेत्यस्य अन्तरात्मा ईश्वरः आत्मानं पुरुषंघातयति, तदीयदुष्कर्मणा अधो नयतीत्यर्थः । ' कर्मवत्कर्मणे 'ति सूत्रस्थभाष्यस्यापि एवमेवार्थ इति नात्मैकत्वेतात्पर्यम् । भाष्यस्य एकस्यात्मन औपाधिक भेद तात्पर्यकल्पनामात्रेण जीवपरमात्मनोर्भेदो नास्तीति अनेनभाष्येण कथं लभ्येत इति विभाव्यताम् ।

यदपि मञ्जूषायां ' सन्निधिसूत्रभाष्ये सर्वस्यचेतनावत्त्वं ' शृणोतग्रावाण' इत्यर्थवादबलेनोक्तम, ईश्वरोपि श्रुत्यादिना जगत्कारणतया अन्तर्यामितया च सिद्ध इति वेदान्तेषुप्रसिद्धं चेतनस्यैक्यमेवलाघवा ' दित्यादिना वृत्तिपरिच्छेदे आत्मैकत्वे भाष्यादितात्पर्यनिरूपणम्, तदपि तत्सूत्रस्थभाष्यवार्तिकतात्पर्यमाच्छाद्यैवतदपरिज्ञानाद्वा । तथाहि—ईश्वरस्य जगत्कारणत्वसर्वान्तर्यामित्वज्ञानम्, उक्तकारणत्वादि संबन्धेन ईश्वरस्यसर्वत्रसत्त्वेन निमित्तेन सर्वस्य चेतनावत्त्वज्ञानम्, नागेशस्येव महर्षेरपि कात्यायनस्यपतंजलेश्वास्तीतिवक्तुंशक्यम् । यतस्तेपि वेदान्तशास्त्रार्थनिश्चयवन्तः, बहुज्ञाःसाक्षात्कृतपरापरा अवतारपुरुषाः । तत्रवररुचिना यदचेतनेष्विर्त्युक्तं तत् ज्ञापयति ईश्वरचेतनेन न सर्वस्यचेतनावत्त्वव्यवहार ' इति । एतेन — शास्त्रेपि तेन सर्वस्य तथा व्यवहारोनेत्येवेत्यध्यवसातव्यम्, यदि नागेशोक्तं तदभिमतं स्यात् तदा नैवंब्रूयात् । एवंच — ईश्वरातिरिक्तचेतनसत्त्वएव चेतनावत्त्वव्यवहारः कूलादिषुच ईश्वरान्यचेतनाऽभावात् इच्छायाअभावेन सनोऽप्राप्तौ सनर्थं तदुक्तिःसार्थिका, एवंच — चेतनैक्यं न तत्संमतम् । भाष्यकारस्यतु ईश्वरादन्या अस्तिकाचिदभिमानिदेवतानाम चेतना तामादाय कूलादौचेतनावत्त्वमिति इच्छायां सूत्रेणैव सन्निति तात्पर्यम् ।

इदंतुबोध्यम् — भाष्यमिदं ब्रह्मविदांमतमास्थायप्रवृत्तम्, वार्तिकंतु — ब्रह्मविन्सिद्धान्तस्य सर्वैरपरिज्ञानात् तदनाश्रित्य । इदंतुतेषांमतम्—आपोऽब्रुवन्, मृदब्रवीत्, आपऐक्षन्त इत्यादिश्रुतिरप्रमाणम् । अचेतनानामबादीनां वचनादिकर्तृत्वायोगात् लोके ऽचेतनघटपटादीनां वचनाद्यनुपलम्भादितिशङ्कायाम्, तैत्रं मन्तव्यम् — अस्तितावत्सर्वत्रकाचनाऽभिमानिदेवता तामादाय वेदपुरुषएवंव्यवहरति। श्रुतौ आपइत्यादीनां तदभिमानिदेवता इत्यर्थः। सिद्धान्तितंचैवमेव भगवताव्यासेन 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (ब्र०सू० २-१५) इति सूत्रेण। 'मृदब्रवीदित्यादौ मृदाद्यभिमानिदेवतानां वचनादि कर्तृत्वव्यवहारः. विशेषानुगतिभ्याम्=भोक्तृत्वतदभावाभ्यां चेतनाऽचेतनप्रविभागस्य, सर्वत्राऽभिमानिदेवतासद्भावस्यच मन्त्रार्थवादेतिहासादिभिः सिद्धत्वादितिसूत्रार्थः । ईश्वरचेतनेन सर्वस्यचेतनतायां नेदमुपपद्येत । एवंच ईश्वरादन्या अभिमानिदेवतानाम काचनाऽस्तीति ईश्वरैकचेतनवादो ब्रह्मविन्सिद्धान्तविरुद्धः। सन् सूत्रेचभाष्ये कण्ठत ईश्वरचेतनेन चेतनावत्त्वादित्यनुक्त्या अभिमानिदेवतया चेतनावत्त्वादित्येवार्थः, ब्रह्मविन्सिद्धान्तत्यागे कारणाभावात्। 'दामहायनान्ताच' (पा०सू० ४ १-१७) इतिसूत्रे उत्क्रान्तं दामयस्या इति विगृह्य 'ननु— चेतनावत एतद्भवति उत्क्रमणं वा अपक्रमणंवा दामच अचेतनम्, अचेतनेष्वपि चेतनवदुपचारोदृश्यते स्रस्तान्यस्य बन्धनानि, स्रस्यन्तेचास्यबन्धनानी' ति अचेतनेचेतनधर्मारोप इति भाष्योक्तिस्तु रथादौकृत्याद्यारोपेणरथोगच्छतीति लोकव्यवहारानुसारेणेति बोध्यम्। अबाधितलोकव्यवहारस्यशास्त्रेपि आश्रयणमविरुद्धमिति सूचनाय लोकव्यवहारानुसारेणैव तलोपपत्तिःकृता। तत्र भाष्ये पूर्वपक्षवाक्यगतचेतनावत्पदं कर्मारब्धदेहावच्छिन्नप्राणिपरम्। नागेशस्तु— ब्रह्मविन्सिद्धान्तविरुद्धभाषी विज्ञानवादपक्षपातीति पुरस्तान्निरूपितम्। अतस्तदुक्तिरविश्वसनीया। किंच— अस्यचेतनैक्ये तात्पर्यवर्णनं 'महतादेवेन नःसाम्यं यथास्यादित्यध्येयंव्याकरण' मिति 'चत्वारिशृङ्गे'ति मन्त्रतात्पर्यवर्णनपस्पशाह्निकभाष्यविरुद्धम् तत्रसाम्यस्यैवफलत्वेनोक्तेः।

'देवताद्वन्द्वेच' (पा० सू० ६ ३ - २६) इत्यधिकारे 'दिवोद्यावा, दिवसश्चपृथिव्याम्, उषासोषस' इति त्रिसूत्रींकुर्वन् पाणिनिः द्युलोकाद्यभिमानि-

देवताऽस्तीति अभिप्रैति । नच – त्रिसूत्र्यां देवताद्वन्द्व ' इत्यस्य नानुवृत्तिरिति वाच्यम् – सूत्रत्रयेपि कौमुद्यां देवताद्वन्द्वइत्युक्तेः, आद्यसूत्रोदाहरणे द्यावाक्षामेइत्यत्र 'देवताद्वन्द्वेचे' ( पा० सू० ६-१-१४१ ) इति पूर्वोत्तरपदयोः प्रकृतिस्वर इति वेदभाष्योक्तेः, 'देवताद्वन्द्वेचे 'त्यतः पूर्वमस्याअकरणाच्च तत्रतदनुवृत्तिसिद्धेः । ' नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति सूत्रे पृथिवीपर्युदासः, ' द्यावापृथिवीजनय 'न्निति उदाहरणंच उक्तार्थेमानम् । यद्यभिमानिदेवता न स्यात् तदा 'देवताद्वन्द्वेचे ' ति पूर्वोत्तरपदप्रकृतिस्वरस्याऽप्रसक्तया निषेधाप्रवृत्तेः पर्युदासे पृथिवीग्रहणवैयर्थ्यम् । उदाहरणेद्यावादेशाऽप्रवृत्तिश्च । यदि ईश्वरचेतनेन देवताद्वन्द्वत्वमिति आशयः, तर्हि – ' ईश्वरद्वन्द्व ' इत्येववदेत् । जनयन्निति च अभिमन्यमानवस्त्वपेक्षयेतिमन्तव्यम् । एतेन – चेतनस्यानित्यत्वात् जननाऽसंभवेन एवमुक्तिरयुक्तेति प्रत्युक्तम् ।

किंच – छान्दोग्येषष्ठे पितापुत्रसंवादे सृष्टिनिरूपणप्रकरणे ' तदैक्षतबहुस्यांप्रजायेयेति तत्तेजोऽसृजत, तत्तेजऐक्षतबहुस्यांप्रजायेय तदपोऽसृजत, ताआपएक्षन्त बहुस्यामप्रजायेमहि ता अन्नमसृजन्त ' ( छा० ६- ) इति, तेजः प्रभृतीनामीक्षापूर्वकर्तृत्वव्यपदेशः, 'हन्ताहमिमास्तिस्रोदेवता अनेनजीवेनात्मनाऽनुप्रविश्य' ( छा० ६ - ) इति तेषांदेवतात्वेन व्यवहारः, ' यःपृथिव्यांतिष्ठन् ( बृ०. ५ ) योविज्ञानेतिष्ठन् ( य आत्मनितिष्ठन् ' बृ०. ५ - ) इत्यादिना पृथिव्यादीनां भगवन्नियम्यत्वोक्तिः, ' यं पृथिवीनवेद ' इत्यादिना तेषामन्तर्यामिभगवत्स्वरूपाऽवेदनोक्तिश्च; तेजःपदादिवाच्या स्तत्तदभिमानिदेवता ईश्वरादन्याः सन्तीति बोधयन्ती, चेतननानात्वंच गमयति । तेजः प्रभृतीनांजडाना मीक्षणादिव्यापाराद्यसंभव इति सर्वलोकविदितम् ।

' पृथिव्याद्यभिमानिदेवता नियमयति नारायणः ' इति शाङ्करवाजसनेय भाष्यम् , ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाःशब्दाः चेतनावन्त मैश्वर्याद्युपेतं तं देवतात्मानं समर्पयन्ति मन्त्रार्थवादादिषु तथाव्यवहारात्, मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते मृदब्रवीत् ' इति ' भाव ' न्तिव ( १ - ३-३३ ) ति सूत्रशांकरभाष्यंचात्रार्थेऽनुकूलम् ।

ननु—'आत्मानमात्मनाहन्ती' त्यादौ परया कर्तृसंज्ञया कर्मसंज्ञाया बाधमाशङ्क्य अहंकारादि विशिष्टात्मभेदमाश्रित्य समाहितंभाष्ये' इति 'साधकतमंकरणम्' (पा० सू० १-४-४२) इति सूत्रीयमनोरमाग्रन्थेन एवंजातीयक सुबर्थप्रकरणस्थमञ्जूषाग्रन्थेन च आत्मैकत्वं भाष्यसंमतमित्यवगम्यत इति चेत्, शृणु — एकस्य देवदत्तादेरात्मन एकस्यांक्रियायां युगपत्कर्तृत्वकर्मत्वव्यवहारानुपपत्त्या प्रयोगोऽयमनुपपन्न इतिप्राप्ते अवस्थाभेदेन भेदमादाय प्रयोगोपपत्तिः सुकरेति भाष्याशयः। अतएव रत्नव्याख्याने भैरवे 'सतिप्रामाणिकेप्रयोगे साधुत्वार्थमियं कल्पना नतु एवंकल्पनया यथेष्टंप्रयोक्तुंशक्य' मित्युक्तम्। ततश्च — नेदंभाष्यं जीवात्मपरमात्मैक्यसाधकं, नापि शास्त्रसिद्धजीवपरभेदप्रतिषेधकम्। किंच — एवमानुपूर्वीकं भाष्यंगवेषणीयम्।

किंच—'मन्यकर्मण्यनादरेविभाषाऽप्राणिषु (पा० सू० २-३-१७) अनुविपर्यभिनिविभ्यःस्यन्दतेरप्राणिषु (पा० सू० ८-३-७२) अप्राणिजातेश्चारज्वादीनाम्' (वा)इत्यादौप्राणिपर्युदासः, 'अचित्तहस्तिधेनोष्ठक् (पा०सू० ४-२-४७) चित्तवतिनित्यम्'(पा०सू० ५-१-८९) इत्यादावचित्तेत्यादिकथनंच ईश्वरतत्तदभिमानिदेवतेतरकर्मारब्धदेहवतां जीवानां सद्भावं, जीवनानात्वंच बोधयति। ईश्वरेण,अभिमानिदेवतयावा सर्वस्यचेतनत्वेतु (प्राणित्वे) सर्वेषामपि प्राणित्वेन चित्तवत्त्वेन च व्यावर्त्याभावेन पर्युदासादेर्वैयर्थ्यं स्पष्टम्। अतएवच — 'स्थानेऽन्तरतम' इति सूत्रे, भाष्ये लोष्ठादीनां, वर्णानांचाऽचेतनत्वोक्तिः संगच्छते। एतेन आत्मनानात्वं न मुनित्रयसंमतमिति ज्ञेयम्।

'द्वासुपर्णा ( आ० उ० ) स्थित्यदनाभ्यांच' (ब्र० सू० १-३-७) इति श्रुति सूत्राभ्यामेकस्मिन्शरीरेजीवेशयोः सहावस्थानोक्तिश्च चेतननानात्वे मानम्। न च औपाधिकभेदमादाय तत्र तथोक्तमिति वाच्यम् — श्रुतिसूत्रयोरौपाधिकभेदपरत्वे गमकादर्शनात्। तस्याऽगतिकगतित्वात्, शुद्धस्य ब्रह्मणउपाधिसंबन्धस्य दुर्वचत्वाच्च। ततश्च ईश्वरेण चेतनेन सर्वस्यचेतनावत्त्वमित्यर्थमुपवर्ण्य आत्मैकत्वेभाष्यतात्पर्यवर्णनं सर्वप्रमाणविरुद्धम्, अबादरायणीयम्, अपाणिनीयंचेति तत्त्वमिति।

णेरणौकर्मवत्सूत्र भाष्यान्न ब्रह्मजीवयोः ।
अभिदा सिध्यतीत्येतत् सप्रमाणं प्रपञ्चितम् ॥ १ ॥
सर्वस्य चेतनावत्त्वं न भवेदीश्वरेणतु ।
इति श्रुत्यादिमानेन निश्चिन्वन्ति विपश्चितः ॥ २ ॥

( १९ - सृष्टेरिच्छापूर्वकत्वनिरूपणम् )

यदुक्तं—'(ईश्वरस्य)सिसृक्षाभावेपि भगवतोमायापुरुषौप्रादुर्भवतः' इति स्फोटवादारम्भे, तदपि नयुक्तं उदाहृतछान्दोग्ये 'तन्मनोऽकुरुत आत्मन्वीस्याम् (बृ० ३.२.१) सोऽकामयतद्वितीयोमे आत्माजायेत (बृ० ३.२.४) तपसाचीयते ब्रह्मततोऽन्नमभिजायते (आ० १.८ ) सईक्षांचक्रेकस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तोभविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि सप्राणमसृजत (व०प्र० ) तस्मैसहोवाचप्रजाकामोवैप्रजापतिः सतपोऽतप्यत सतपस्तप्त्वा समिथुनमुदपादयते (व० प्र० १.४ ) सोऽकामयतबहुस्यांप्रजायेये' (तै०उ० २. ) तीत्यादौ च सृष्टेरीक्षापूर्वकत्वश्रवणात् ।

मायासृष्टिः सिसृक्षाया अभावेपीति भाषणम् ।
चिन्त्यं सृष्टेः श्रुतौ दृष्टिपूर्वत्वश्रवणाद्विभोः ॥ १ ॥

( चरकादिसंमति निरासः )

यदत्र मञ्जूषायां चतुर्थपरिच्छेदे तद्धितवृत्तिनिरूपणे आत्मनानात्वाऽभावे 'देहीसर्वगतोह्यात्मा विभुत्वमतएवास्य, यस्मात्सर्वगतोमहान्, नित्यानुबन्धमनसा देहकर्मानुपातिना । सर्वयोनिगतं विद्यादेकयोनावपि स्थितम्' इति पातंजलचरकवचनोपन्यसनं तदपि तस्य न साधकम् । तत्र आद्यवाक्यं जगत्कारणस्यान्तर्यामिणः 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः' (तै०आ० ४) इत्यादि श्रुत्युक्तदिशा सर्वव्यापित्वप्रतिपादकम् । द्वितीयंतु—एकस्मिन्नेव शरीरे जीवो वर्तत इति न, किंतु—अनेकदेहारंभककर्मानुसारिणा मनसा अनेकशरीरसंबद्धो भवतीत्यर्थकम् । 'उद्धरेदात्मनात्मानं नात्मानमवसादयेत् । आत्मैवह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' (गीता० ६.५ ) मन एवमनुष्याणां कारणं बन्धमोक्षयोः । उद्धरे-

१. सृष्टिक्रमोऽयं तान्त्रिकः, नतु वैदिकः, अतः व्यासपाणिन्योरसम्मतः

न्मनसाजीवं न जीवमवसादयेत्' इत्युक्तेःकर्मवशात् जीवो नानायोनिषु जायत इति तात्पर्यम् । अतस्तेनापि जीवपरयोरभेदाऽसिध्या न तस्येष्टासिद्धिः । एक-योनौ स्थितमपि कर्मवशात् सर्वयोनिगतं विद्यादिति योजना । अत्रार्थएव वचनस्य तात्पर्यं 'देहकर्मानुपातिना' इतिवाक्यस्वारस्यात्, नतु आत्मैकत्वे, ईश्वरस्य च देहारम्भककर्माभावात् ।

योगे पतञ्जलिना 'कृतार्थंप्रतिनष्ट' (योग सू० २ २२) मित्यादिना आत्मनानात्वस्य जीवपरयोश्च भेदस्य च सिद्धान्तितत्वेन अस्यापि पतंजलिवाक्य-स्य तदविरोधेनार्थवर्णनस्य युक्तत्वात् । न च – चरकानुरोधेन योगस्याऽर्थवर्णनं युक्तमिति वाच्यम् – योगस्य साक्षात् मोक्षसाधनोपायबोधकत्वेन मुख्यत्वेन चर-कस्य ऐहिकसुखसाधनपरत्वेन अमुख्यत्वेन अमुख्यस्यैव मुख्यानुरोधेन योजनाया युक्तत्वात् । उक्तदिशा चरकस्याऽऽत्मैकत्वे तात्पर्याभावात् । योगस्यच श्रीशङ्करा-चार्यप्रभृतिभिः आत्मैकत्वाभावे तात्पर्यस्यसूत्रभाष्ये निर्धारितत्वात् ।

यदपि – परमार्थसारेपि पतञ्जलिराह – 'यद्वद्दिनकरएको विभाति सलि-लाशयेषु सर्वेषु । तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा' इति चतुर्थे वृत्ति-विचारे आत्मैकत्वे प्रमाणोदाहरणं, तदपि अन्तर्यामिपरतया नेतुं शक्यम्, किंच– आत्मनानात्वपर 'कृतार्थ' मिति योगसूत्रविरुद्धम् । सूत्रार्थस्तु अनुपदमेव वक्ष्यते ।

किंच – 'द्वासुपर्णासयुजासखायौ समानंवृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' (मु० ३-१-१) द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएवच । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते (गी० १५) इत्यादिपरःसहस्रश्रुतिस्मृति विरुद्धमात्मैकत्वम् । श्रुते रयमर्थः द्वौ = द्वित्वविशिष्टौ भिन्नाविति यावत्; सुपर्णौ = सुपर्णसरूपौ, सुपर्णो गरुडः, सयुजा = संयुक्तौ, सखायौ – उपकार्योपकर्तृभावेन सखित्वमुभयोः, उपकार्यो जीवः, उपकर्ता हरिः । समानंवृक्षम् = देहाख्यमेकं वृक्षम्, परिषस्वजाते = आलिलिङ्गतुः, तत्र वर्तेते इति यावत्; पिप्पलम् = देहाख्याश्वत्थजन्यफलं कर्मफलमिति यावत्; अन्यः = जीवः, अन्यःईशः, अनश्नन् = अभुञ्जानः, नेश्वरस्य कर्मफलभोजन-मितिभावः, अभि = सर्वतः, चाकशीति = प्रकाशते । अन्यत्सुगमम् । शङ्करा-

चार्यास्तु सुपर्णौ = सुशोभनपतनौ, पक्षिसामान्याद्वा सुपर्णौ, सखायौ = समानख्यानौ समानाभिव्यक्तिकारणौ। रङ्गरामानुजमुनिस्तु – युज्यत इति युक्गुणः, अपहतपाप्मत्वादिगुणैः, समानगुणौ, सखायौ = सहचरौ, शिष्टंसमानम्॥ इति। श्रुतिरेषा भेदपरैवेति सर्वैर्व्याख्याता। गीतार्थस्तु पूर्वमुक्तः। न च – परमार्थसारवचनविरोधात् श्रुतिर्गीतादि उपेक्ष्यमितिवाच्यम् – पौरुषेयवचनमाश्रित्य श्रुत्याद्युपेक्षाया अयोगात्। श्रुतिस्मृति विरुद्धार्थकपौरुषेयवचनाऽनादरणमेव वैदिकानां भूषणम्। सर्वमिदं चरकपरमार्थसारयोः पतञ्जलिकृतत्वाभिप्रायमनुरुध्योक्तम्।

वस्तुतस्तु – तावुभावपिग्रन्थौ न महाभाष्यकृता महर्षिपतञ्जलिना प्रणीतौ, अतः 'चरकेपतञ्जलि' रित्यादि तत्पदोल्लेखेन चरकपरमार्थसारवचनोपन्यसनमयुक्तम्। 'पातञ्जलमहाभाष्यचरकप्रतिसंस्कृते' रित्यादिना चक्रदत्तादिभिः चरकव्याख्यानारम्भे चरकाख्यवैद्यकग्रन्थस्य चरकऋषिसंस्कृतत्वोक्तेः, वैद्यकग्रन्थेषु क्वापि केनचिदपि पतञ्जलिकृतत्वस्य वा, तत्संस्कृतत्वस्यवाऽनुक्तेः, आयुर्वेदविदां गोष्ठीषु पतञ्जलिकृतत्वव्यवहारस्यैवाऽभावात्; भावप्रकाशकृता वैद्यसार्वभौमेन आयुर्वेदविदाचार्यपरंपरां निरूपयता तत्र पतञ्जलेरपरिगणनात्, पतञ्जलिचरिते रामभद्रीये 'सूत्राणि योगशास्त्रे वैद्यकशास्त्रेच वार्तिकानि ततः' इति वैद्यकेवार्तिकाख्यस्य कस्यचिद्ग्रन्थस्यैव पतञ्जलिकृतत्वोक्तेः, 'योगेन चित्तस्य पदेनवाचां मलं शरीरस्यच वैद्यकेन। योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि' इति ग्रन्थनाम्नोऽनिर्देशाच्च चरकादन्यःकश्चन वैद्यको ग्रन्थः पतञ्जलिनाकृतः, परमार्थसारस्तु चक्रदत्तादिभिः, धारानगराधिपतिना भोजभूपतिनाच परिगणितेषु अहिपतिप्रणीतेषु प्रबन्धेषु, पतञ्जलिचरिते, 'योगेने' ति सांप्रदायिकेच पद्ये, परिगणितपतञ्जलिप्रणीतग्रन्थेषुच अपरिगणितत्वेन अहिपतिना, पतञ्जलिना वा न कृत इति विमर्शका वदन्ति।

ननु – चरक इति, शेषनाग इति च, पतञ्जलेरेव नामान्तरं ततः तावुभावपि ग्रन्थौ पतञ्जलिकृतावेवेति निर्धारयाम इतिचेत्, उच्यते – यद्येवं तर्हि महर्षिपतञ्जलेर्महाभाष्यकृतः श्रीशङ्कराचार्य प्रभृतिभ्यः प्रत्नतया, रामकृष्णकृत-

१. 'संख्योपसंग्रहादपि' (ब्र० सू०. १४-११) इति सूत्रे– 'मूलप्रकृति-

सांख्यकारिकावत् परमार्थसारवचनमपि पतञ्जलिकृतत्वेन आर्षत्वादस्युपादेयताबुध्या स्वसमीहिताऽद्वैतोपष्टम्भकत्वेन, समाख्यात्वेन वा, अद्वैताचार्या उदाहरेयुः, इतरे पुनः दूषणाय अनुवदेयुः । उभयथापि शाङ्करग्रन्थादिषूदाहरणादर्शनेन शेषनागः कश्चिदर्वाचीनो विपश्चित् नागेशभट्टात्प्राचीनो ननु नामान्तरं पतञ्जलेः, न तत्कृतत्वं चरकसारयोरिति मन्यन्ते इति ।

स्यादेतत् – गीताया भगवान् वासुदेव ' उदाराःसर्व एवैते ज्ञानीत्वात्मैव मेमत ' ( ७ - १८ ) मित्यत्र आत्मैवेति सावधारणमात्मत्वबोधनात् परमात्मतादात्म्यमेव शास्त्रसंमतमिति युक्तमिति, उच्यते – अधिकारिणो जीवस्य ब्रह्मतादात्म्यस्य श्रुतिविरुद्धत्वात् गीतोपक्रमोपसंहारविरुद्धत्वात्; ब्रह्ममीमांसाविरुद्धत्वात् गीतायाः सादृश्यावधारणतात्पर्यकत्वमेव युक्तम् । यद्वा ' निपातानामनेकार्थत्व ' मित्यभियुक्तोक्तेः, ' ततोभूयइवते ' (ई. ९, १२) इति मन्त्रार्थवर्णनावसरे श्रीशङ्कराचार्यैः भूयइवे ' त्यस्य ' भूयएवे 'त्यर्थवर्णनात् इवैवशब्दयोः पर्यायत्वावगमेन अत्र एवशब्द इवार्थक इतिनैक्ये गीतायास्तात्पर्यम्, अधिकं ' वासुदेव ' इति श्लोकार्थनिरूपणावसरे निरूपितमिति ।

फणिपतिरकरोच्चरकं ग्रन्थं परमार्थसारनामानम् ।
इति न ब्रूते कश्चित् वैद्यकविद्वच्छ्रुतिज्ञगोष्ठीषु ॥ १ ॥
अतस्तदनुसारेण कृतं शास्त्रार्थनिर्णयम् ।
नाद्रियन्ते विदो वेदस्मृतिमार्गानुयायिनः ॥ २ ॥

( २१ - ब्रह्मण आविद्यकनानात्व निरासः )

यदपि – सुबर्थविचारे कर्तृत्वनिरूपणप्रकरणे 'यद्वा ब्रह्मण एव अविद्यावशादुपचरितनानात्वभावाऽभावरूपत्ववत् तद्रूपजन्मनाशव्यवहारोऽपि अविद्या-

---

रविकृति महदाद्याः प्रकृतिविकृतयःसप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिःपुरुष' इतितृतीया कारिकोदाहृता शङ्कराचार्यैः । 'प्रकृतिं पुरुषं चैवे ' (गी. १३-२०) ति श्लोकव्याख्याने वेदान्तदेशिकैस्तात्पर्यचन्द्रिकायां ' जननमरणे ' त्यद्या बहवः कारिका उदाहृताः ।

रितरमणीय इतिबोध्य' मित्यनेन ब्रह्मण उपचरितनानात्वादिकथनम्, तदपि — आपातरमणीयां कस्यचिदुक्तिमवलम्ब्योक्तम्, शास्त्रे क्वापि भगवतोऽविद्यावशत्वस्य तन्निबन्धननानात्वस्य च नुक्तेः। अत उच्छास्त्रमिदं स्वोत्प्रेक्षितमुन्मत्तवचनमिवाविश्वसनीयम्। एतेन — प्रथमपरिच्छेदे 'तत्तदाकारादिविशिष्टब्रह्मण एव घटादित्वात्' इति ब्रह्मणोघटादित्वोक्तिःपरास्ता, क्वापिब्रह्मणोघटादित्वानुक्तेः, तथात्वे विकारित्वप्रसक्तेश्च। ननु—घटादिविशिष्टत्वेन तत्त्वव्यवहारः नतु तद्रूपत्वेनेति चेत्, एवंचेत् ब्रह्मातिरिक्तप्रपञ्चाभावसाधनाय प्रवृत्तेनतेन किंसाधितं न किमपि, तादृशो गौणव्यवहारः सर्वेषामिष्ट एवेति जितं ब्रह्मातिरिक्तप्रपञ्चसत्त्वं तयोर्भेदंच वदद्भिः। रामकृष्णादिरूपेण शास्त्रेषु वारंवारमुपदिष्टं भगवतो नानात्वं च वास्तवमेव। अत उपचरितत्वं न कदापि मन्तव्यम् गमकाभावात्।

इदमत्र बोध्यम् — यथानागेशः 'महाभाष्यविरोधात् वेदभाष्यमुपेक्ष्यम्; 'वेदेसर्वदा आनुपूर्वी एकैव न केनापिकृतेति नव्यमीमांसकश्रद्धाजाड्यंतु तदर्थकस्य तदीयार्षवचसोऽनुपलम्भात्, महाभाष्यकारादिवचनविरोधाच्चानुपादेयमिति वेदभाष्यकारादीनां वचनं न विश्वसनीयमित्याह, तथा — पाणिनीया अपि सन् सूत्रे 'आत्माद्वैतदर्शनेनेति कैयटोक्तम्, चेतनस्यैक्यमेव लाघवात्' इतिवृत्तिप्रकरणमञ्जूषोक्तम्, अविद्यावशाद्ब्रह्मण उपचरितनानात्वमिति मञ्जूषोक्तम्, अद्वैतपरमञ्जूषावाक्यव्याख्यावसरे 'परमसिद्धान्तमाहे' त्यादिपायिगुण्डे वैद्यनाथोक्तम्, एवंजातीयकं दीक्षितादिवैयाकरणोक्तंच, 'ईश्वरेणचेतनेन सर्वं चेतनावत्, अविद्यावशात् ईश्वरस्यनानात्व' मिति बादरायणेन सूत्रकृता, तदीयसूत्रभाष्यकारैर्बहुभिराचार्यैः, पतञ्जलिनाच 'शृणोतग्रावाण' इत्यादौ सिद्धान्ताकरणात् तादृशार्थकपाणिनीयवचनानुपलम्भाच्च अनुपादेयमिति प्रतिवक्तुमर्हन्ति नागेशंप्रति।

ननु — वृत्तिपरिच्छेदे — 'सर्वभूतेषुयेनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धिसात्विकम् (२०) पृथक्त्वेनतु यज्ज्ञानं नानाभावान् पृथग्विधान्। वेत्ति सर्वेषुभूतेषु तज्ज्ञानं विद्धिराजसम् (२१) यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम्। अतत्वार्थवदल्पंच तत्तामसमुदाहृतम्' (गी० १८-२२) इति गीतावचनानां नागेशभट्टाचार्यैः, 'आत्माद्वैतविषयकं ज्ञानं सात्विकमिति प्र-

थमवचनार्थः, एतदेवोत्तरश्लोकद्वयं द्रढयतीति आत्मैकत्वपरतया व्याख्यानात्तस्य नानात्वमुपचरितमेवेति वक्तव्यमिति चेन्, अत्रवदन्ति – यद्यभेदे तात्पर्यमाद्यव-चनस्य तदा ‘ सर्वभूते ’ ष्वित्यादिव्यधिकरणनिर्देशाऽसंगतिः, सर्वभूतानि येनैकं ज्ञानमव्ययमीक्षते । अविभक्तं विभक्तेषु ’ त्यादिसामानाधिकरण्येन निर्देष्टव्यं भ-गवता । अतोऽन्यथा व्याख्येया गीता, तथाहि- भक्तेषुभिन्नेषु सर्वेषु भूतेषु, अ-विभक्तं=भेदरहितं एकं भावं=परमात्मानमव्ययमीक्षते, येन ज्ञानेनेति योजनया वि-भिन्नेषु भूताभिधेषु जीवेषु अन्तर्यामितया वर्तमानं वस्तु एकमेव, तच्च वासुदेवा-भिधं ब्रह्मैवेत्यर्थः एतेन – जीवानां भेदः, तेषु अन्तर्यामीभगवान् एकएव अन्त-र्यामिरूपाणां न भेदः, जीवेभ्यस्तु भेदोऽन्तर्यामिण इति तत्तात्पर्यम् । ईश्वरस्य अन्तर्यामित्वं ‘ सर्वस्यचाहंहृदिसंनिविष्टः, ( १५ १५ ) ईश्वरः सर्वभूतानां हृद्दे-शेऽर्जुनतिष्ठति ’ इत्याभ्यामुक्तम् । तत्रत्याक्षरस्वारस्याल्लभ्यमर्थमपलाप्य नेत्रेनिमील्य यथेच्छंवर्णितोर्थःकथं तत्वविदां हृदयंगमःस्यादिति विभाव्यताम् । द्वितीयस्यतु – सर्वभूतेषु पृथक्त्वेन स्थितं भगवन्तं यत्ज्ञानंतथा न विषयीकरोति, यद्वा–सर्व-भूतेषु अन्तर्यामिरूपं पृथक्त्वेन विषयीकरोति अन्तर्यामिरूपं भिन्नभिन्नं विषयी-करोतीतियावत् । नानाभावान् सर्वपदार्थान् पृथग्विधान् वेत्ति=विषयीकरोति, तत् ज्ञानं राजसमित्यर्थः । अयमावः – विष्णवन्यचेतनविषयकज्ञानस्य सात्विकत्वेपि परमात्मविषयजीवप्रतियोगिकाऽभेदज्ञानस्य, अन्तर्यामिरूपाणां भेदज्ञानस्यच, सत्वे राजसत्वमेवेति ! तृतीयस्य तु जीवेविष्णुत्वज्ञानं, समस्तजगत्वज्ञानंच तामसमित्यर्थः।

अन्येतु — ब्रह्मक्षत्रादिषु आत्मत्वजातिरस्ति इतिज्ञानं सात्विकम्। ब्राह्म-णादिषु तत्तदाकारभेदेन आत्माख्यभावापि भेदेन पश्यतीति यत् तज्ज्ञानं राजसम्, अल्पल्पफले प्रेतभूताद्याराधनकर्मणि सक्तं ज्ञानं तामसमिति श्लोकत्रयतात्पर्यमाहुः ! अतोनैतानि आत्मैकत्वे प्रमाणानि भवितुमर्हन्ति ।

एकस्य ब्रह्मणोऽविद्यावशान्नानात्वमिष्यते ।
इति नागेशवचनं न युक्तमिति चिन्तितम् ॥ १ ॥
यतोऽविद्यावशाद्ब्रह्म बहुभावं समश्नुते ।
इत्येवं पाणिनिर्नाह फणिराडपि नाब्रवीत् ॥ २ ॥

( २० - प्रतिभासमात्रशरीरत्व निरासः )

यच्चोक्तं 'विज्ञानान्तर्यामी' त्यादिपरमार्थसारवचनमुपन्यस्य 'प्रतिभास-मात्रविषयः मायावासनाऽविद्यापदाभिधेयभ्रमसंस्कारमूलकः प्रपञ्च' इति । तदपि चिन्त्यम् । तस्यप्रामाणिकैःप्रमाणत्वेनाऽपरिगणनात्, पतञ्जलिकृतत्वेच न निश्चया इतिपूर्वमेवोपपादितत्वात्, व्यासपाणिनिपतञ्जलिभिरेवमनुक्तेश्च । शास्त्रे क्वचिज्जगत्कारणत्वेनोक्ता मायातु प्रकृतिरीश्वरेच्छाचेति ब्रह्मविदः प्राहुः । प्रागुदाहृत-च्छान्दोग्यश्रुत्यादौ, "ममयोनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत (गी० १४ २) महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणिदशैकंच पञ्चेंद्रियगोचराः (गी० १३·१) सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अपएवससर्जादौ तासुवीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन्जज्ञे स्वयंब्रह्मा सर्वलोकपितामहः" इति । 'अन्तस्तद्धर्मोपदेशात्, संज्ञामूर्ती' ति सूत्रभाष्योदाहृतस्मृतिषु च वासनापरपर्यायमायातिरिक्तपदार्थैरेव प्रपञ्चसृष्टेरभिधानात् । सूत्रकृताच 'संज्ञामूर्ती' ति सूत्रेणत्रिवृत्कृततेजआदीनामेव जगत्कारणत्वोक्तेश्च । प्रतिभासमात्रशरीरत्वे तथाविधशुक्तिरजतादेरिव प्रपञ्चस्यार्थक्रियाकारित्वाभावप्रसंगाच्च । परमार्थसारेपि घटपटादिप्रपञ्चस्य प्रतिभासमात्रविषयत्वं नाभ्यधायि ।

नच — शुक्तिरजतदृष्टान्तदानेन तस्य तथात्वं तदभिमतमिति वाच्यम् — तद्दृष्टान्तप्रदर्शनस्य नश्वरत्वे तात्पर्यात्, 'भ्रान्त' इति सारोक्तेरपि नश्वरत्वएव तात्पर्यम् । अतएव — 'प्रकृतेरिदंकृतंयेने' ति प्रपञ्चस्यकृतिविषयत्वोक्तिः । संगच्छतेसारे तर्हि प्रतिभासशरीरं वस्तु कृतिविषयोभवति । शुक्तिरूप्यादावदर्शनात् । नश्वरत्वंतु दृश्यते कुलालादिकृतिविषयेघटे । एतद्दृष्टान्तएवनोपपद्यते इत्यन्यत्रविस्तरः तत्रप्रकृतेरित्यस्य संस्कारातिरिक्तं जगत्कारणंवस्तु आदायेत्यर्थः । कृतमित्यस्यकृतिविषयइत्यर्थः । स्वविभूत्याक्रीडमानस्येत्यत्रस्वविभूत्येत्यस्य स्वीयैश्वर्ययोगेन स्वसामर्थ्येनेतिवार्थः । तेन — उक्तसंस्कारातिरिक्तमेववस्तु जगतःकारणं, जगच्च न प्रतिभासमात्रविषय इत्युक्तंभवति । भ्रमविषयोहि न कृतिविषय इति सर्वलोकसाक्षिसिद्धम् । शुक्तिरजतादेर्निर्मातुरदर्शनात् । नागेशकृततद्व्याख्यानंतु न तत्र-

त्याक्षरानुगुणम्, सारेप्रयुक्तमायापदस्य आद्यपद्योक्तप्रकृतिपरत्वमीश्वरेच्छादिपरत्वंवा। भ्रम संस्काररूपाविद्याया आश्रयजिज्ञासायां 'परमात्मैवाश्रयस्तवातिरिक्ताविद्याया इवे'ति प्रतिबन्धुत्तरदानेन, सूत्रभाष्यकृतोभ्रमसंस्काररूपैवाऽविद्येतिमतं सूचित' मिति निरूपणेनच अनादिभावरूपाविद्यां व्यवस्थापयतामद्वैताचार्याणां शाङ्करसूत्रभाष्याद्यभिप्रायाऽनभिज्ञतां द्योतयति। नागेशोक्तेः मिश्राद्युक्त्यविरोधसंपादनं तु दुःशकम्। न च 'इह देवताधिकरण' इत्यादिमञ्जूषोक्तेर्न विरोध इति वाच्यम्—तथासंकोचे कारणाभावात्, अन्यत्र मिश्रादिभिर्नागेशोक्तरीत्या मायाया अनुपपादनात्। किंच—प्रपञ्चो यदि प्रतिभासशरीरः, तर्हि ज्ञानरूपः क्षणिकश्च स्यादिति हानोपादानाऽसंभवेन सर्वलोकव्यवहारोच्छेदः भगवता व्यासेन च विज्ञानवादः, क्षणिकवादश्च निराकृतो 'नाभाव उपलब्धेः, क्षणिकत्वाच' (ब्र. सू. २-२) इत्याभ्याम्। अतएव अभियुक्ता नानुमन्यन्ते इदं वादद्वयम्।

भागवते च—सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः। साद्रिद्वीपाऽब्धिभूगोलं सवाय्वग्नीन्दुतारकम् (८-३७) ज्योतिश्चक्रं जलंतेजो नभः स्वर्वियदेव च। वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः (३८) एतद्विचित्रं सहबीजकाल स्वभावकर्माशयलिङ्गभेदम्। सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजैः सहाऽऽत्मानमवाप शङ्काम् (३९) इति दशमे भगवदुदरे चराऽचरसमस्तप्रपञ्चो वर्तत इत्युक्ते र्न मायिकं जगदिति वदन्ति। न च—उत्तरश्लोके 'किंस्वप्न एतदुत देवमाया किंवा मदीयो बत बुद्धिभेदः' (४०) इति यशोदाशंकानुकारणात् भ्रमएव तज्ज्ञानमिति वाच्यम् 'अथो अमुष्यैव ममार्भकस्य यःकश्चनौत्पत्तिक आत्मयोगः (४१) अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा। यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतोऽस्मि तत्पदम्' (४२) इत्यध्यर्धश्लोकेन नायंभ्रमः किंतुममपुत्रस्य सहजोऽयमैश्वर्ययोगः इदमैश्वर्यं नमनुष्यमात्रसाधारणं, किंतुवाङ्मनसाद्यविषयविचित्रतरजगदाधारस्य भगवतएव संभवेत् अतो भगवानेव मम भाग्यवशात्पुत्रोऽभूदिति निश्चित्य भगवद्बुध्या तमनमदित्युक्तत्वेन तज्ज्ञानस्य भ्रमत्वायोगात्। श्लोकाक्षरार्थस्तु भागवतव्याख्याभिरवसेयः।

'पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाऽऽद्यस्तस्मिन्त्सलिल उरगेन्द्राधिशयने। पुमान् शेते सिद्धै हृदि विमृशिताध्यात्मपदविः स एवाऽद्याक्ष्णोर्यः पथि चरसि

भृत्यानवसिनः' (भाग० ४-७-४२) इति भगवदुदरे सर्वं जगदस्तीत्यन्यत्रापि प्रकरणे व्यासोक्तेः। 'उद्भवः क्षोभणोदेवः श्रीगर्भः परमेश्वरः' इतिसहस्रनामशाङ्कर भाष्ये श्रीगर्भ इति नाम्न 'श्रीः विभूतिः यस्योदुरेजगद्रूपा स्थिते'ति निर्वचनात् 'अनेननाम्ना उदरे समस्तलोकवस्त्वगुणो भगवत उक्त इति अन्येषां तद्याख्यानात्, कस्यचित्कविशेखरस्य 'अन्तर्विष्णोस्त्रिलोकी निवसती'तिपद्यस्य विष्णोरुदरे लोकत्रय-मस्तीति व्याख्यानाच्च न जगन्मायिकम्।

पण्डितकविसार्वभौमो भट्टमुरारि भगवद्गुणनिरूपणावसरे विरमतिमहाकल्पे नाभीपथैकनिकेतन स्त्रिभुवनपुरःशिल्पी प्रतिक्षणमात्मभूः। किमधिकरणं कीदृक् कस्य व्यवस्थितिरित्यसा वुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः' (२-श्लो)। इत्याह। अस्या-यमर्थः—विरमति = महाप्रलयेसमाप्ते, महाकल्पे = अन्यब्रह्मकल्पे प्राप्ते, सृष्टिकाले-सति, पुरःशिल्पी = आदौनिर्माता (प्रथमनिर्मातेतियावत्) शिष्टंस्पष्टम्। चतुर्मुखस्य प्रथमशिल्पित्वेन कथंचिदपि पदार्थानामाधाराधेयभावस्य, अवयवसंनिवेशस्य चाऽपरि ज्ञानात् तत्परिज्ञानाय भगवदुदरप्रवेशकथनेन भगवदुदरे सर्वप्रकारोपेतं वस्तु सूक्ष्मरूपेण वर्तत इति शास्त्रसिद्धोऽर्थः सूचितः। मायोपादानकानां, प्रतिभासमात्र-विषयाणां पदार्थानां चिरकालवर्तित्वायोगेन तेषां भगवदुदरे वृत्यसंगात् तद्दर्शनाय तत्प्रवेशोक्तिरसंगता स्यात्। तेन ज्ञायते नागेशोक्तं तदुभयमयुक्तमिति।

ननु—कविवचनमुत्प्रेक्षारूपं कथं शास्त्रार्थनिर्णयाय कल्पत इति चेत्, उच्यते—नायंकविः केवलं स्वमनीषिकया अमुमर्थमुत्प्रेक्षांचक्रे, किंतु आर्षं वचनं प्रमाणमास्थाय अभिदधातिस्म। किंतर्हि तत्, 'श्रीपतेरुदरंभूयः प्रविवेश पितामहः। तानेव लोकान् गर्भस्थानन्वास्यन् पद्मसंभवः' इति लैङ्गवचनम्। सर्वं जगत् भगवदुदरे सूक्ष्मरूपेणवर्तते इति वचनार्थः। अन्वास्यन्नित्यस्य पश्यन्नित्यर्थः। एतेन—हिरण्यगर्भो बौद्धान्पदार्थान् ज्ञात्वा सृजतीति नागेशोक्तं चिन्त्यम्। न चैवं पूर्वकल्पस्थितानुसंधाय सृजतीतिशंकराचार्यादिव्याख्यानं कथमुपपद्यते, उच्यते—उभयत्रप्रमाणसद्भावात् पूर्वकल्पस्थाननुसंधायउदरस्थान् दृष्ट्वा पदार्थस्वरूपं सम्यक् निश्चित्य सृजतीतितात्पर्यात्। ननु—"ज्ञानमेवपरंब्रह्म ज्ञानंबन्धायचेष्यते। ज्ञानात्मकमिदं विश्वं न ज्ञानाद्विद्यते परम्। विद्याऽविद्ये च मैत्रेय ज्ञानमेवोपधारय" इति विष्णुपुराण वचनसिद्धं

सर्वस्य ज्ञानस्वरूपब्रह्मात्मकत्वमितिचेत् ,शृणु—तत्र 'सत्यं ज्ञान' मिति श्रुतेः ब्रह्मणोज्ञानत्वोक्तिरुचितैव, 'बन्धकोभवपाशेन भवपाशाच्चमोचक' इत्युक्तेः तस्यबन्धकत्वमपीष्टमेव। अत्रायंविवेकः–येतु सकामा विहितं कर्मानुतिष्ठन्ति तेषां तत्तत्काम्यप्रदानेन सांसारिकसुखानुभावयितृत्वात् ज्ञानात्मनो हरेर्बन्धकत्वम्। येतु निष्कामाः विहितंकर्म भगवदाराधनरूपं कर्तव्यमिति धियाऽनुतिष्ठन्ति तेषांमुक्तिदानेन मोचकत्वमिति। इदं विश्वं समस्तं जगत् ज्ञानात्मकम् = ज्ञानरूपं ब्रह्म आदानादिकर्तायस्यतत्, तत्स्वामिक तन्नियम्यमितियावत्। ज्ञानरूपब्रह्मणोऽन्यत् परं उत्तमं न विद्यते, विद्याऽविद्येच = ज्ञानाऽज्ञाने अपि, ज्ञानमेव ज्ञानाधीने एव, तदधीनत्वात् राजा राष्ट्रमितिवत् सामानाधिकरण्यव्यपदेशः। अत्र ज्ञानं हरेः पुरुषोत्तमत्वज्ञानम्, अज्ञानं तद्व्यतिरिक्तं द्वन्द्वमोहादिजन्यम्। निरुक्तमिदं गीतायां सप्तमादौ 'कामैस्तैस्तैर्हृतज्ञाना' (२०) इत्यादिना इतिवचनतात्पर्यात् उक्तचोद्यं नावकाशं धत्ते। एतेन—इदंवचनमुपन्यस्य 'निरुपाधिब्रह्मैव विद्या, सोपाधितदेवाऽविद्येतितदर्थ' इति उपाधिविशिष्टंब्रह्मैव जगदिति सर्वस्यब्रह्मात्मकत्वाभिधान मयुक्तं शब्दमर्यादया तदुक्तार्थालाभात्। अत एव'स्वाशयमाह—निरुपेति ॥'इति कलायामवतारितमिदं वाक्यम्। तेन वचनार्थोऽन्योऽस्ति इति ज्ञायते। शुद्धस्य उपाधिसंबन्धो दुर्निरूपः तस्य निर्धर्मकत्वात्समाधौयोगिगम्यत्वमपि तथा अतो निरूपाधिसोपाधिविभाग एवानुचितः

'संज्ञामूर्ती'तिसूत्रेण त्रिवृत्कृतमवादिकम्।
जगतःकारणमिति श्रुत्यर्थं प्राह सूत्रकृत् ॥ १ ॥

वैदिकाग्रेसरस्येदं भवतीष्टंच पाणिनेः।
अबाधितमिदं तस्मात् स्यादेवेष्टं पतञ्जलेः ॥ २ ॥

तस्मात्संस्कारजन्यत्वं प्रतिभासशरीरता।
इति नागेशवचनं न मुनित्रयसंमतम् ॥ ३ ॥



## (२३ अकृतेतियोगसूत्रस्य भेदमायिकत्वपरत्वनिरासः)

यदत्र मञ्जूषायां(९८-१४) स्वाभिमतात्मैकत्वे योगसूत्रमपि अनुकूलमिति बोधनाय अन्तःकरणानां विभुत्वनिरूपणावसरे अदृष्टवासनादीनां साधारण्यात् 'सर्वेषां युगपत्सुखदुःखप्रसंगः' इत्याशंक्य 'सर्वस्यमायिकत्वेन (असत्यतया) जलनलिनीपत्रवददोषात् 'कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वा' (यो.सू०२-२२) दितिसूत्रेण तथाबोधना'दिति समाधाय "कथमेकमनष्टं नष्टंचेत्युपपद्यत" इत्यादिना आत्मनानात्वं मायिकमित्याह। तन्निर्मूलं, तथाहि—उपन्यस्तेसूत्रे आविद्यकार्थकत्वबोधकपदाश्रवणात, पूर्वोत्तरसूत्रयोश्च तथार्थकपदाश्रवणेन अनुवृत्यपकर्षयोश्चासंभवात्, एतत्सूत्रघटितपादस्य साधनपादत्वेन तत्र कस्यचिदपि साधनस्याऽऽविद्यकत्वानिरूपणात् सूत्राक्षरमर्यादया प्रकरणेन च तथार्थालाभात्, सूत्रेण तथाबोधनादिति नागेशोक्तमयुक्तमिति पतञ्जलिमते कस्यचिदपि वस्तुनो मायिकत्वाभावाच्च।

नच—एकस्यवस्तुन एकंप्रति नष्टत्वानष्टत्वयोरयोगात् अगत्या ऽन्यतरस्यमायिकत्वं कल्पनीयमिति वाच्यम्—'पुरुषनानात्वे सूत्रतात्पर्येण नष्टत्वानष्टत्वयोरधिकारिभेदेनोपपत्तेः। व्याख्यातमिदमेवमेव मिश्रादिभिः। किंच 'नच—प्रधानवदेकः पुरुषः, तन्नानात्वस्य जन्ममरणसुखदुःखभोगमुक्तिसंसारव्यवस्थया सिद्धेः, प्रकृत्येकत्वपुरुषनानात्वयोश्च श्रुत्यैव साक्षात्प्रतिपादनात् 'अजामेका'मितिश्रुतेरर्थ एवाऽनेन सूत्रेणाऽनूदित' इति योगसूत्रतात्पर्यं श्रुतितात्पर्यं च जीवनानात्व एवेत्यर्थकमिश्रग्रन्थविरुद्धम्। ततश्चायं सूत्रार्थः—किं पुरुषः प्रकृतिवदेकः, अथ नाना, इति संशये सिद्धान्तमाह—कृतार्थमिति॥ तत् = प्रधानम्। कृतार्थं प्रति = अलंबुद्धिविषयीकृतविषयेन्द्रियसुखदुःखादिसंविद्रूपभोगं पुरुषं प्रति, नष्टमपि = विरतव्यापारमपि (तत्पुरुषीयोपभोगोपयोगिविषयादिना अपरिणाम्यपि) अनष्टम् = व्यापारवत् (विषयादिनापरिणामि)कान् प्रति, अकृतार्थान् प्रति, अन्यसाधारणत्वात् = कृतार्थपुरुषव्यतिरिक्तपुरुषसाधारणत्वात् इति। अयमाशयः सर्वसाधारणमपि प्रधानं विषयविरक्तस्य विषयादिरूपेण परिणतं नोपकाराय भवति, अविवेकिनः (रागवतःपुरुषस्य) भोग्यवस्तुरूपेण परिणतं सत् उपकाराय कल्पते, एकस्यैव प्रधानस्य विरक्तरागिपुरुषभेदेन नष्टत्वमनष्टत्वंचोपपद्यत इति पुरुषनानात्वसिद्धिरिति।

सांख्ययोगौ भेदवादिनावित्येतत् सार्वलौकिकम् । सांख्यानां मते च जगतो मायिकत्वं (मिथ्यात्वं) नेति षष्टितंत्रे पंचशिखाचार्यैः—'गुणानांपरमं रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथंप्राप्तं तन्मायेव सुतुच्छकम्' इत्यनेन निरूपितम् । अस्यायमर्थः—त्रिगुणात्मकप्रधानकार्यभूतं (जगत्)वस्तुजातं, मायेव = मायानिर्मितमस्त्विव, यथा-मायाविना निर्मितंवस्तु अन्हायनश्यति, तथा प्रधानकार्यम्, आशु विनश्यति(नश्वरमितियाव)दिति । एवंच—सांख्यानां मते न जगत् मायिकं, किंतुसत्यम् अर्थक्रियाकारीत्यत जगदन्तःपातिभेदोपि तन्मते वास्तव एव । न च—तत्सूत्रे एकत्वश्रुतीनां च प्रमाणान्तरविरोधात् कथंचिद्देशकालविभागाभावेन भक्त्याप्युपपत्ते'रिति मिश्रोक्तेः, व्यवहारपरमार्थभेदादैकात्म्यनानात्वयोरुपपत्ति'रिति विज्ञानभिक्षूक्तेश्च पातञ्जलं सूत्रमौपाधिकभेदपरमिति वाच्यम्—भक्त्येत्युक्त्या एकत्वं गौणं नतु मुख्यम् तत्रापि कथं चिदित्युक्त्या च देशकालविभागस्य सदातनत्वेन तदभावस्यैवाभावेन तेन तथाकल्पनं क्लिष्टमिति मिश्राशयात् । भिक्षुग्रन्थे यथासंख्यान्वयेन ऐकात्म्यंव्यावहारिकं मुखचन्द्रयोरिव, परमार्थतो नानात्वंघटपटयोरिवेतिभिक्ष्वाशयात् । अत एव—विज्ञानभिक्षुणा 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' (यो०१-२४) इतीश्वरलक्षणसूत्रे ईश्वरस्य सर्ववैलक्षण्यं वदतः सूत्रकृतोऽभिप्रायनिरूपणावसरे सांख्ययोगयो रात्मनानात्व एवतात्पर्यमिति निपुणंनिरूपितम् । अयमत्र संक्षेपः—पतञ्जलिस्तावत्सांख्याचार्येष्वन्यतम इति सुप्रसिद्धम्, अतः सांख्यमत इव एतन्मतेपि जगत् आत्मनानात्वं च वास्तवमेवेति एतत्सूत्रं वास्तवभेदतात्पर्यकमितिवर्णनं न्याय्यम् । व्याख्यातृषु भाष्यकारादिषु कश्चिदपि एतत्सूत्रबोधितो भेदो मायिक इति नाब्रवीत् 'द्वैतिनोहि ते सांख्या योगाश्चे'ति श्रीशङ्कराचार्या आहुः, सूत्रमिदं मायिकभेदपरमिति न कश्चिदपि विपश्चित् व्याचष्टे, अतो नागेशव्याख्यानं न विद्वज्जना आद्रियन्ते । नच—'द्वैतिनोहिते' इति शाङ्करभाष्यस्य व्यावहारिकद्वैतवादिन इत्यर्थ इतिवाच्यम्—तथासति तन्मतखण्डनाय तेषां प्रवृत्त्ययोगात् । अयमपि योग[1]वृत्तौ मिश्राणांमार्गमनुसृत्य एतत्सूत्रं, व्याख्यत् । एव च मञ्जूषायां मायिकं भेदं बोधयति सूत्रमिति भाषणं योग सूत्रीयबहुव्याख्यानविरुद्धम् किंच श्रीशङ्कराचार्यादीनां योगतन्त्राभिप्रायानभिज्ञतां सूचयति ।

1. अविद्याया अनादित्वखण्डनावसरे 'योगवृत्तौस्पष्टंनिरूपित'मितिमञ्जूषोक्तेः योगसूत्रवृत्तिरपि अनेन कृतेति ज्ञायते ।

अक्रूतार्थेतिसूत्रेण मायिको भेद उच्यते ।
इतिव्याख्या योगसूत्र बहुव्याख्यात्र संमता ॥ १ ॥
न संमता योगसूत्र कृतश्चापि पतञ्जलेः ।
सांख्ययोगमते कश्चि त्पदार्थो मायिको न हि ॥ २ ॥

---

## (२४ जन्माद्यस्येति श्लोकार्थः)

ननु—'जन्[1]माद्यस्य यतोऽन्वयात्' (भाग० १-१-१) इति भागवताद्यपद्ये 'यत्रत्रिसर्गो मृषा' इति भगवत्कर्तृकसृष्टेः, तत्सृष्टस्यवा मृषात्वमभिधीयते भगवता व्यासेनेति नाशङ्क्यम् । यतोऽत्र बादरायणः परस्मिन् ब्रह्मणि त्रिगुणकार्यं मृषेत्यभिप्रैतीतितत्तात्पर्यम् । अक्षरार्थस्तु—यत्रेति दार्ष्टान्तिके सप्तमीश्रवणात् 'मृदा'मिति षष्ठी वैषयिकाधारस्य संबन्धित्वविवक्षया । यथाकेशोण्डूकादौ तेजस्त्वादिविषयको विनिमयः (भ्रमः) तथा, यत्र = यस्मिन् भगवतो रामकृष्णाद्यवताररूपेष्वपि, त्रिसर्गः = गुणत्रयकार्यसंबन्धः (तत्कार्यम्) मृषा = मिथ्या, स नास्ति, 'केवलोनिर्गुणश्च' (श्वेत०) निर्गुणम्' (गो०९३-) इत्युक्तरिति । यद्वा—अमृषेतिच्छेदः । विनिमयः कार्यम् । यत्रेति संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी ततस्त्रल् । त्रिपदं गुणत्रयात्मकप्रकृतिपरम् । अयमर्थः—यथा तेजःप्रभृतीनां कार्यम्, अमृषा = सत्यम्, अर्थक्रियाकारित्वात्, तथायत्संबन्धित्रिगुणात्मकप्रकृतिकार्यं महदादि, अमृषा = सत्यम्, मिथ्या नेति ॥ यद्यत्र ब्रह्मसृष्टस्यैव मिथ्यात्वमभिप्रैतीति ब्रूयात्, तर्हि—'निरस्तकुहक'मित्यनेन निरस्तमायिकत्वोक्तिरसंगतास्यात् । सत्यजगत्स्रष्टृत्वेहि तदुपपद्येत । अन्यथा—ऐन्द्रजालिकस्येव कुहकत्वं मायिकत्व(वंचकत्वम्)मेव भवेदिति तदसांगत्यं सुस्पष्टम् । ऐन्द्रजालिकेन सृष्टमपि न मिथ्येतिसांख्यमतम् । किं च 'असत्यमप्रतिष्ठंते' इति भगवद्वचनविरुद्धः जगदसत्यत्ववाद इतिप्राङ्निरूपितं न विस्मर्तव्यम् निरूपयिष्यतेचैतत् । विस्तरस्तु अन्यत्र द्रष्टव्य इति ।

---

1. जन्माद्यस्य यतोऽन्वयात्— इतरतश्चार्थेष्वभिज्ञस्स्वराट्, तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यं(यत्) सूरयः । तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा, धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परंधीमहि ॥

एतेन—प्रथमपरिच्छेदे स्थलद्वये 'विप्र पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन। स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते' इति कौर्मवचनमुपन्यस्य; सर्वं जगत् चित्तस्थमेव न बहिरास्ते इति यदाह नागेशः, 'अत्रकदाचने'त्युक्त्या सर्वःप्रपञ्चोबहिरसन्नेवेतियच्चाह कलायां वैद्यनाथः, तदुभयमसंगतं वेदितव्यम्। तथाहि स्वप्नादिषु अनुभूयते वस्तु, बोधेतु न दृश्यते, तत्कुत्रत्यमिति जिज्ञासायां जाग्रतिअनुभूतं संस्काररूपेण चित्तस्थमेव वस्तु स्वप्नादिरूपोद्बोधकसामग्र्या ऽनुभूयते नतु जाग्रति बहिर्विद्यमानं, स्वाप्नस्यान्यै-रननुभूयमानत्वादिति वचनतात्पर्यं नतु, बाह्यवस्तुनोऽसत्त्वे। योजनातु—हेविप्र संस्काररूपेणचित्तस्थमेव पृथिव्यादि स्वप्नादिषु सर्वैरनुभूयते, तत्तन्मात्रानुभवयोग्य त्वात्, बहिष्ठंन्तु स्वप्नादिषु नानुभूयते अस्यस्वाप्नाद्यवस्थानापन्नसर्वानुभवायोग्यत्वादिति। यत्सर्वानुभवयोग्यं तद्बहिष्ठम् यत्स्वप्तृपुरुषमात्रानुभवयोग्यं तत् संस्काररूपेण चित्तस्थमिति विवेकः, एवंच बहिः पदार्थोऽसन्नेवेत्यर्थो नानेन लभ्यत इति।

जन्मादिर्विप्रपृथ्वीति पद्ययो नैव मायिके।
तात्पर्यमितिसंक्षेपा दुक्त मन्यत्र विस्तरः॥ १॥

---

## (२५ ईश्वरस्य सर्वदेवतारूपत्वनिरासः)

मञ्जूषायां तद्धितार्थविचारे (१५२०-पु.) 'ऐन्द्रंहविः, ऐन्द्रोमन्त्रः' इत्यादौ तद्धितार्थो देवता'साच शद्बातिरिक्ता तिर्यगधिकरणे न कर्मसु देवता आधिक्रियन्त' इत्यर्थकेन 'नदेवतान्तराभावा'दितिसूत्रेण जैमिनिनाप्यङ्गीकाराच्चे'तिग्रन्थेन जैमिनिमते शब्दातिरिक्तदेवतासद्भावं प्रसाध्य,—'देवतात्वंच मन्त्रकरणकहविस्त्यागजन्यस्वर्गाति-रिक्तफलाश्रयत्वेनोद्देश्यत्वं, मन्त्रस्तुत्यत्वंचे'ति देवतात्वं निरुच्य, स्वाभिमतात्मैकत्व-स्थेम्ने 'उद्देश्यताच मन्त्रोक्तशद्बशरीरोभयावच्छिन्नेश्वरचैतन्यस्य' तदेवच मन्त्रोक्तमिन्द्रादि-पदवाच्यम्, 'इन्द्रंमित्र'मित्यादि मन्त्रवर्णात्। इन्द्रः सहस्राक्षो गोत्रभिद्वज्रबाहु, रित्यर्थवादबलात् तत्प्रदर्शितविग्रहहविर्भोजनैश्वर्यतृप्तिफलप्रदत्वानां नवाध'इतिग्रन्थेन तत्तच्छद्बबोध्यविग्रहविशिष्टेश्वरचैतन्यस्यैव देवतात्वं समर्थयते नागेशः। अत्रवदन्ति-'जैमिन्यङ्गीकाराच्चे'त्युक्तिस्तावन्न युज्यते नवमे देवताधिकरणे भाट्टदीपिकायाम्—

'जैमिनिमतनिष्कर्षस्तु शब्दएवदेवता प्रातिपदिकानुरोधेन तदर्थश्चेतनोऽचेतनोवाभवतु, तस्या विग्रहस्तु नास्त्येव अतस्तस्याः फलप्रदत्वं न, किंतु अपूर्वमेव कर्मजन्यफलप्रदम्, ममत्वेवंवदतोपि वाणी दुष्यति हरिस्मरणमेवशरणम्' इति खण्डदेवकृतजैमिनिमतनिष्कर्षस्य, तद्बोधिततदनुवादमात्रजनितदोषप्रायश्चित्तस्यच पर्यालोचनायां शब्दातिरिक्तदेवतासद्भाव इत्येतत् न जैमिनिसिद्धान्त इत्यवगमात्। उभयोरनयोः पण्डित प्रकाण्डत्वाऽविशेषेऽपि खण्डदेवकृतनिष्कर्षस्योपदेशपरंपरासिद्धत्वेन खण्डदेवोक्तिरेव बलवतीति सैवादरणीया। 'देवानान्त्वात्मोद्देश्यकत्यागासंभवात्, विग्रहस्याभावाच्च शक्तेरभावान्नाधिकार' इत्यादि तिर्यगधिकरणीय (६-१) पार्थसारथिमिश्राद्युक्तिः, एवमर्थककुमारिलभाषणं च तथाविधोपदेशपरंपरासद्भावे मानम्।

किंच— देवानां कर्मण्यधिकाराभावं बोधयता 'नदेवतान्तराभावात्' इत्यनेन कथमक्षरमर्यादया अतिरिक्तदेवतालाभ इति विभाव्यम्।

किंच—'सूत्रेणे'त्युक्तिरेव मञ्जूषाकृतोनागेशस्य पूर्वतन्त्रेऽन्यादृशं पाण्डित्यं द्योतयति। इदंवाक्यं जैमिनीयसूत्रपाठे क्वापि न दृश्यते। नापिव्याख्यातं प्रतिसूत्रं व्याकुर्वता भाष्यकृता शबरस्वामिना, वृत्तिकृताच राममिश्रेण। उत्तरमीमांसायां देवताधिकरणे देवानामधिकारो नेति चोद्यस्य संपोषणाय वाक्यमिदमुदाहरन्तः शङ्कराचार्या अपि सूत्रमिदमितिनाऽवोचन्। शा[1]बरभाष्यस्थं वाक्यमेतदिति सांप्रदायिकाः। शङ्करभाष्यटिप्पण्यामस्य वाक्यस्य सूत्रसंख्यालेखनम् 'इतिप्रथमसूत्राथ' इतिलेखनंच अनवधाननिबन्धनमिति जैमिनिमतानुयायिनः।

किंच—शांकरभाष्ये देवताऽधिकरणे (ब्र. सू०१-३-८) देवताया विग्रहादिराहित्यवादिजैमिनिमतं दूषयित्वा विग्रहवत्त्वस्य सिद्धान्तितत्वेन शब्दातिरिक्तदेवता नास्तीत्येव जैमिनिमतमिति खण्डदेवोक्तमेव युक्तम्। यदि—देवतायाः शब्दातिरिक्तत्वं जैमिनेरपिसंमतंस्यात् तदा विग्रहवत्त्वमपि अर्थवादादिबलेन सिध्यतीति शक्यं वक्तुम्। ततश्च शङ्करीयजैमिनिमतखण्डनमपि तदीयाऽभिप्रायाऽपरिज्ञानमूल-

1. 'कर्तुर्वा श्रुति संयोगा द्विधिः कार्त्स्न्येनगम्यते (६—१—२) इति सूत्रे, न देवानां, देवतान्तराभावात्, नह्यात्मानमुद्दिश्य त्यागः संभवति त्यागएवासौ नस्यात्; नऋषीणाम्, आर्षेयाभावात्, नभृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति, नचैषांसामान्यं 'प्रत्यक्ष'मितिभाष्यम्।

कमेव स्यात्। महाकविःश्रीहर्षोऽप्यस्य सरवा श्लेषेण प्रकृताऽप्रकृतमर्थं वणयन् देवानां विग्रहो नेतिजैमिनिर्मन्यत इत्याह, 'विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये। विग्रहं मखभुजामसहिष्णु व्यर्थतां मदशनिं स निनाये' (नै०५-३९) त्यनेन। विश्वरूपकलनात् = मत्स्यकूर्माद्यनेकावतारधारणात्, नानार्थकसूत्रकरणादित्यर्थः। सर्वपदार्थसाक्षात्करणादित्यप्यर्थो व्यज्यते। शिष्टंस्पष्टम्।

किंच–शब्दाऽतिरिक्तदेवता यदि जैमिनिसंमता तर्हि–सैव कर्मणाऽऽराधिता फलप्रदा भवितुमर्हतीति भगवता सूत्रकृताबादरायणेन'फलमत उपपत्ते' (ब्र. सू. ३-२-३९)रित्यनेन ईश्वरः फलप्रद इतिसिद्धान्तयित्वा धर्मः(यागः) अपूर्वद्वाराफलद इति जैमिनिमतं 'धर्मं जैमिनिरतएवे' (३-२-४१)तिसूत्रेणोपन्यस्य धर्मापूर्वयोरचेतनत्वात् तयोर्दातृत्वासंभवेन उक्तदिशा सर्वाध्यक्ष ईश्वरएव फलप्रद इतियुक्तःपक्ष इति'पूर्वंतु बादरायणो हेतुव्यपदेशात् (ब्र. सू. ३-२-४२) इतिसूत्रेण तन्मतनिराकरणमसंगतंस्यात्।

किंच-जैमिनिमते अतिरिक्तदेवतादिसद्भावसाधने कालान्तरभाविस्वर्गादिफलोत्पादकापूर्वास्तित्वादिसमर्थनपराणि 'चोदनापुनरारम्भ' (२-१-५) इत्यादीनि बहून्यधिकरणानि जैमिनिनाऽनारम्भणीयानि भवेयुः विग्रहवद्देवताप्रसादादेव फलोत्पत्तिसंभवात्

यच्चानेन अभिहितम् ईश्वरचेतन एक एवोद्देश्यत्वेन देवता मन्त्रोक्तेन्द्रादिपदवाच्यो दीयमानंद्रव्यमश्नाति 'इन्द्रंमित्रंवरुण मग्निमाहु रथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः' (ऋ. सं. २-३-२२) तद्यदिदमाहुः, 'अमुंयजाऽमुंयजेत्येकैकदेवं, एतस्यैव सा विसृष्टिः एष उ ह्येव सर्वेदेवा (वाजसनेयके) इत्यादिभि स्तस्यैव सर्वदेवतात्वेन प्रतिपादना'दिति शब्दातिरिक्तापि देवता ईश्वरएवेति।

अत्रेदंवक्तव्यम्-'शब्दातिरिक्तदेवताऽस्ति, विग्रहोप्यस्ति तस्या' इतिवचनं तावत्सुन्दरम्, इदं च–सर्वैर्मीमांसकातिरिक्तै रास्तिकजनैः सशिरःकम्पं सश्लाघमादरणीयम्। भगवतोत्तरमीमांसाकृता 'तदुपर्यपिबादरायणः संभवात्' (ब्र. सू. १-६-२६) इत्यादिना भगवदुपासनायां तेषामधिकारोऽस्तीति समर्थितत्वात्। यदि तेषामतिरिक्तत्वाभावः, विग्रहाभावश्च तदा उपासनायां प्रवृत्त्ययोगेन तदधिकरणारम्भो व्यर्थःस्यात्। परंतु तस्यास्तन्मते उक्तमीश्वरत्वम्, इन्द्रादिरूपेण हविर्भोजनम्, शब्दातिरिक्तत्वं फलदत्वं

चायुक्तम् । जैमिनिना तथानुक्तेः 'जैमिनिनाप्यङ्गीकाराच्चे'त्युक्तिः तस्या ईश्वरत्वाद्युक्तिश्चासंगता, मीमांसकमत ईश्वराभावात् । अतएव—भूषणसारे नेश्वरसंकेतः शक्तिः मींमांसकानामीश्वरभावात् तत्संकेतग्रहाभावेन अर्थोपस्थित्यादेरभावप्रसंगादित्युक्तं शक्तिवादे। 'कस्ये' (४-२- )दितिसूत्रेकैयटस्तु—'यागसंप्रदानं देवता, मन्त्रस्तुत्यश्चार्थ' इत्येव देवतापदार्थमाह 'अग्निर्वै देवानामवमो विष्णुःपरमःतदन्तरेण अन्याःसर्वादेवताः, (ऐ. ब्रा. १-) योविज्ञाने तिष्ठन्, य आत्मनि तिष्ठन्, ईश्वरः सर्वभूतानाम् (गीता) इत्यादिषु ईश्वरातिरिक्तानामनेकेषां देवादीनां सद्भावस्य हरौतदुत्तमत्वादेश्च जोघुष्यमाणत्वेन चेतनैक्यायोगात् ।

चेतननानात्वस्य पूर्वमुदाहृतबहुप्रमाणसिद्धत्वेन एकस्यैवेश्वरस्य इन्द्रादिपदवाच्यत्वं तत्तद्रूपेण तत्तद्देवतात्वमिति चिन्त्यम् । छान्दोग्ये 'अथयेचास्येहजीवाः, एवमेवेमाःसर्वाःप्रजाअहरहर्गच्छन्त्य एतंब्रह्मलोकंनविन्दन्ति अनृतेनहिप्रत्यूढा'(८-३-२) इत्यादौ जीवा इत्यादिबहुवचनश्रवणम्, अष्टमेषष्टादिषुखण्डेषु 'एकशतं वर्षाणि ब्रह्मचर्यं वसत इन्द्रस्य प्रजापतेःसकाशात् ब्रह्मविद्याग्रहणश्रवणं भगवतो लक्ष्मीपतेरन्यस्य भगवत्पदवाच्यता नेति प्रतिपादनावसरे भगवता व्यासेन हरेरेव सर्वोत्तमत्वनिरूपणं तत्रत्यश्रीधरीयं च चेतनैक्याभावे मानम् ।

ननु—'सत्वंरजस्तम इति प्रकृतेर्गुणास्तै र्युक्तः परः पुरष एक इहाऽस्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्वतनो नृणां स्युः' (भाग. १-२-२३) इति एकस्यैव हरेः पालनादिकर्मभेदेन नामभेद इति व्यासोक्तेः हरिविरिञ्चिहराणामेकत्वं तदभिमतमिति वाच्यम्—नानेनाऽभेद उच्यते, किंतु—'तत्रतत्र स्थितोविष्णु स्तत्तच्छक्तीः प्रबोधयन् । एकएव महाविष्णुः कुरुते सर्वमञ्जसे'त्याद्युक्तेः विरिञ्चादिष्वपि अन्तस्थितो हरिः सृष्ट्यादिकंकुरुते तत्रतत्रस्थितत्वात् मंञ्चस्थानां मञ्चपदवाच्यत्ववत् विरिञ्चादिपदवाच्यत्वमस्तीति बोध्यते इत्यदोषात् । न च—नारायणकलाः शान्ता भजन्ति ह्यनसूयवः' (भाग, १-२-२६) इत्यादौ नारायणकलात्वोक्तेरैकत्वमिति वाच्यम्, नारायणकलासदृशा इत्यर्थः नतु तत्स्वरूपभूता इत्यदोषात् । एवंजातीयकाः श्रुतिस्मृत्यादय एवमेव व्याख्यातव्याः । शास्त्रदीपिकायामात्मैकत्ववादस्य (१-१-पा०) निराकृतत्वेन मीमांसकमतरीत्या नेदं युज्येतेति ज्ञेयम् ।

'इन्द्रंमित्र'मित्यादिश्रुतेस्तु इन्द्रादिशब्दै र्योगबलेन प्रतीयमानगुणसम्बन्धेन आदित्यस्याऽग्नेर्वा स्तुतिरिति वेदभाष्ये माधवाचार्यै र्व्याख्यातत्वेन अग्न्याद्यन्यतर देवतापरत्वं, नतु नागेशोक्तदिशा ईश्वरपरत्वम् ।

किंच–चेतनैक्यं वदतोमते ईश्वरान्यचेतनाभावेन ईश्वरस्यच शुद्धस्वभावत्वेन आविद्यकधर्मसंबन्धस्यच वक्तुमशक्यतया औपाधिकभेदस्यापि वक्तुमशक्यत्वात् । कर्मकर्तुरभावेन यागस्यैवाभावप्रसंगेन तज्जन्यफलभोक्तुरभावेन (स्वर्गादिफलतदनु-भवित्रोरप्यभावेन) सर्वं वेदादिकमप्रमाणं स्यात्, उन्मत्तभाषितं, बालभाषितंवा, स्यादिति तदभिमतचेतनैक्यं निष्प्रमाणमेव भवेदिति विभाव्यम् । नच–उपाधिसं-बन्धेन सर्वमुपपद्यत इतिवाच्यम्—शुद्धे वस्तुनि तत्संबन्धायोग इत्युक्तत्वात् ।

ननु–ऋग्वेदभाष्योपोद्घाते 'तस्मात्परमेश्वरात् यज्ञात् = यजनीयात् (पूज्यात्) सर्वहुतः = सर्वैर्हूयमानात, ननु—इन्द्रादीनामेव सर्वैर्हूयमानत्वात् कथमिदमित्याक्षेपे 'इन्द्रंमित्रंवरुण'मितिमंत्रवर्णात् इन्द्रादिरूपेण परमात्मनोऽवस्थानादविरोध' इति समाहितं माधवाचार्यैः, तदनुरोधेन मंजूषाकृदवोचदितिचेत्, न–पुरुषसूक्तभाष्ये तस्माद्यज्ञात् = पूर्वोक्तमानसयागात्, सर्वहुतः = सर्वात्मकः पुरुषः यस्मिन्यज्ञे हूयते सोऽयं सर्वहुत इतिमाधवाचार्येण व्याख्यातोयं मंत्रैकदेशः । भट्टभास्करेणापि–तस्मात् = मानसात् सर्वात्मा पुरुषः पशुत्वेन हूयते यस्मिन्निति सर्वहुत, अधिकरणे क्विप् इति व्याख्यानात्, 'इन्द्र' मित्यादेरग्न्यादिपरतया व्याख्यातत्वाच्च उपोद्घातोक्तार्थे प्रामाण्याऽनिश्चयात् । ईश्वरस्येन्द्रादिरूपत्वे मानाभावइति पूर्वमुक्तत्वाच्च । एतेन–भाष्योपोद्घातयोरीश्वरस्य सर्वात्मकत्वं भाषितमिति न विरोधइतितु चिन्त्यं, तस्यार्थस्य प्रमाणसिद्धत्वाभावात् । 'सर्वहुत'इत्यस्यतु–सर्वः = पूर्णः, व्याप्तोवाहूयतइत्यर्थः । सर्वशब्दस्य एतदुभयार्थ-कत्वे मानमुक्तं 'वासुदेव' इति श्लोक व्याख्यावसरे । यद्वा—सर्वैर्हूयत इति कर्मणिक्विपि सर्वैर्हूयमान इत्यर्थः । वैष्ण[1]वयागेषु हरेस्सर्वैर्हूयमानताऽस्त्येव ।

किंच–हवनंनाम प्रीणनं 'प्रीणनेपीतिभाष्य'मिति कौमुद्यामुक्तेः, तच्च–स्वस्व-विषयकप्रीतिप्रसादादिपदाभिधेयस्वोत्तमदेवादिसमवेतेच्छानुकूलो व्यापारः, सा चेच्छा अयं ममभक्तः ईप्सितमिदं फलं प्राप्नोतु, मांवा प्राप्नोतु इत्येवंरूपा । तादृशव्यापारः

---

1. माधवाचार्यभट्टभास्कराभ्यां पुरुषसूक्तस्यविष्णु (नारायण) परत्वव्यवस्थापनादेवमुक्तम् ।

स्तुतिरूपः, कृतस्य श्रौतस्मार्तकर्मणो भगवति समर्पणंवा, तत्र—अनादिनिधनंविष्णुं सर्वलोकमहेश्वरम्। लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् (सहस्रनाम. ६) इति प्रीतिद्वारास्तवनस्य फलोपायत्वस्मरणात्, 'कायेन वाचा मनसेन्द्रियेण बुद्ध्यात्मनावाऽनुसृतः स्वभावात्। करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् (भाग. ११-११-३७) यत्करोषि यदश्नासि यज्जुहोषि ददासियत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' (गी. ९-२७) इति अनुष्ठितस्यविहितस्यकर्मणः सर्वस्य समर्पणस्मरणात्, 'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः। संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि' (गी. ९-२८) इति अर्पणस्य भगवता फलस्मरणाच्च।

ननु—'सर्वश्चप्रजापति'रिति 'कस्ये' (पा. सू. ४-२-२५) दितिसूत्रभाष्यंसर्वस्य ब्रह्मात्मत्वे मानम्, तत्र—'कार्यकारणयोरभेदादिति भाव' इतिकैयटोऽव्याख्यत्। कारणभूतब्रह्मणः सर्वात्मत्वेन सर्वरूपप्रजापतिवाचकत्वेन कशब्दस्य सर्वनामसंज्ञा भविष्यतीति भाष्यस्य प्राकरणिकार्थः। ततश्च—अनेनभाष्येण सर्वस्यब्रह्मात्मत्वं तत्संमतमिति जानीम इतिचेत्, उच्यते 'इदंभाष्यमुत्तरभाष्यं चेतिद्वयं द्वयोरेकदेशिनोः प्रौढोक्तिमात्र' मित्युद्द्योते, शेखरेच, उक्तत्वेन न सिद्धान्तिसंमतम्। किंच—'सर्वश्चप्रजापति'रितिभाष्यमादाय 'अतएवोक्तं 'सर्वं समाप्नोषि ततोऽसिसर्व' इतिगीतायामुक्त'मिति उद्द्योतेन ब्रह्मणःसर्वत्वे न सर्वात्मकत्वंहेतुः, किंतु—सर्वव्यापनमितिभाष्याभिप्रायो वर्णितइति ब्रह्मप्रपञ्चयोर्भेदएव भाष्यसंमत इतिसिद्धेः ब्रह्मणस्सर्वात्मत्वे नेदंभाष्यं मानमिति।

'तद्यदिद' (३-४-३) मित्यादेरयमर्थः—अमुंयज अमुंयजेति यत् एकैकंदेवमाहुः = एकैकंदेवमुद्दिश्य यत् यजनविधानं, तदिदं एतस्यैवसाविसृष्टिः (प्रेषः) भगवदुद्देशेनविधीयमानयजनविधिरेव। तत्रहेतुमाहुः—एषइति॥ सर्वेदेवा एषउएव = भगवन्नियम्यत्वेन तदधीनाएव, ब्रह्मशब्देनोच्यन्ते। हि = 'यःपृथिव्यांतिष्ठन् (बृ. ५-७-३) इत्यादि श्रुत्यादिषु प्रसिद्धमिति। तत्र—पृथिवी, अप्, अग्नि, अन्तरिक्ष, वायु, दिव्, आदित्य, दिक्, चंद्रतारक, आकाश, तमः, तेजः, सर्वभूत, प्राण, वाक् चक्षुः, श्रोत्र, मनः, त्वक्, विज्ञान, (आत्मा) रेतः, इति पृथिव्यादिरेतोन्तैरेकविंशतिशब्दैरेकविंशतिखन्डिकागतैः तत्तदभिमानिदेवताग्राह्या इति शङ्कराचार्यैर्व्याख्यातम्। 'यंपृथिवीनवेद यः पृथिवीमन्तरो यमयति' इति श्रुतिगतैरेव वाक्यै

रन्तर्याम्यज्ञानबोधकैः पृथिव्यादिपदं तदभिमानिदेवतापरमितिस्पष्टं बोध्यते अन्यथा पृथिव्यादीनामचेतनत्वेन अवेदनस्य स्वतःसिद्धेः तदुक्तिर्व्यर्था स्यात्। एष उएवसर्वे-देवा' इतिसामानाधिकरण्यव्यपदेशस्तु तदधीनत्वन्यायेन राजाराष्ट्रमित्यादिवत् बोध्यः।

ननु—नियम्यानां यजनंकथंभगवद्यजनं भवेदितिचेत्, उच्यते—भगवान्नियमयति सर्वानिति वेदप्रामाण्यवादिनः सर्वे आचार्या उदाहृतश्रुतिबलेन एककंठा वदन्ति अतोऽत्र नकोपि प्रत्यवस्थाता। सर्वान्नियन्तुः सर्वाध्यक्षत्वं स्वतःसिद्धम् तेनविना सर्व-नियमनायोगात्। यजनंनाम प्रीत्युत्पादकोव्यापारः सर्वेषां देवानांचात्मीयत्वेन तेषां यजनमपि आत्मयजनमिव आत्मनः प्रीतिकरमेवेति आत्मा प्रसन्नो भवति तद्याजिषु। लोकेपि राजादय आत्मीयजनसन्माननेन तत्कर्तरि प्रीतोभवतीति सर्वानुभवसिद्धम्। 'लभतेचततःकामान्मयैवविहितान्हितान्' (गी० ७-२२) इति अन्ययजनेपीश्वरएवफलद इतिगीताचार्यः, 'ब्रह्मदृष्टिरुत्कर्षात्' (४-१-५) इतिसूत्रे, 'सयएतमेवंविद्वानादित्यं-ब्रह्मेत्युपास्ते' (छा. ३-१९-४) इत्यादिना आदित्योपासनंविधीयते तन्नकार्यमफलदत्वात्, किंतु—ब्रह्मोपासनमेवकार्यं फलदत्वादितिप्राप्ते, आदित्योपासनमेवकार्यं तत्रापि फलं-ब्रह्मैव दास्यति सर्वाध्यक्षत्वात् 'फलमतउपपत्ते'रित्युक्तेरिति आत्मीयोपासनेन स्वयंप्रीतः सन् फलंप्रददातिभगवानिति शङ्कराचार्याः। अथवा—इन्द्रादिपदं तत्तत्पदवाच्येन्द्रादि-देवतान्तर्यामिपरंसत् अन्तार्यामिणं परमात्मानमाहेतिश्रुत्यर्थः। अन्तर्यामिणमुद्दिश्य सर्वाणिकर्माणि कुर्वन्ति अन्तर्यामिणः स्वस्वाध्यक्षस्य यजनेन इन्द्रादयोपि प्रसन्नाभवन्ति, यथा लोके राजादीनां सभाजनेन अमात्यादयः प्रसन्नचित्ताभवन्ति। भोक्तारंयज्ञ-तपसां सर्वलोकमहेश्वरम्। सुहृदंसर्वभूतानां ज्ञात्वामां शान्तिमृच्छति' (गी० ५-२९) अहंहिसर्वयज्ञानां भोक्ताच प्रभुरेवच। न तु मामभिजानन्ति तत्त्वेनाऽतश्च्यवन्तिते' (गी. ९-२४) इतिसर्वयज्ञभोक्तृत्वं हरेर्भगवानाह। इदंचस्वस्य स्वीयानांच यजनेनेति ज्ञेयम्।

अत्र युधिष्ठिरस्य राजसूययागे सर्वलोकमहेश्वरस्य कृष्णस्य अग्रपूजनेन सर्वे राजानो महर्ष्यादयश्च प्रसन्ना अभूवन्, अर्हणांकुर्वन्तंसहदेवमभितुष्टुवुः, देवाश्च-प्रसन्नाःपुष्पवर्षं ववर्षुरितिभारतीया सभापर्वगता कथात्रानुसंधेया।

ननु—ईश्वरस्यैव 'भोक्तार'मित्यादिप्रमाणबलात्सर्वयागेषु भोजनमित्यङ्गीकारे नागेशमतादविशेष इति न मन्तव्यम्, नागेशस्तावत् एकस्यैवेश्वरचेतनस्य उपाधिवशात्

इन्द्रादिरूपता तेनचरूपेण यागेषुभोजननित्याहेति तन्मते इन्द्रादिदेवाः न पृथक् सन्तीति वस्तुस्थितिः। भेदवादिनांमतेतु 'अग्निर्वैदेवानामवमो विष्णुःपरमस्तदन्तरेण सर्वा अन्या देवता' इत्यादिश्रुतिबलात् हविर्भुजोदेवाः वस्तुतः सन्तिबहवः, तेषांविष्णुरुत्तमः, सच सर्वान्तर्यामीसन् हविर्भुङ्क्त इति सर्वयागेषुदेवानामन्तर्यामिणोविष्णोश्च भोजनमिति वस्तुस्थितिरिति महानस्ति विशेषः। अतएव—'देवान् देवयजो यान्ति पितॄन्यान्तिपितृव्रताः। भूतान् भूतयजोयान्ति यान्तिमद्याजिनोपिमा'मितितत्तदाराधकानां तत्तत्प्राप्तिकथनं संगच्छते। इन्द्रत्वादेरौपाधिकत्वे उपाधिनिवृत्तौ इन्द्रादेरपि अभावेन प्राप्यस्याऽभावात्तत्प्राप्तिकथनासंगतिः।

किंच—'अतिरिक्तदेवतायाः जैमिनिनाप्यङ्गीकाराच्चे'त्येतत् स्वोक्तिविरुद्धम्। तथाहि—लिङर्थनिरूपणप्रकरणे 'जैमिनिर्भारतोक्तेषु केषुचिदर्थेषु सन्दिहान एकदा मार्कण्डेयमेत्य पप्रच्छ भगवन् छिन्धि मे संशयमिति, सतु नमेऽवसरः, वसन्तिविन्ध्ये चत्वारः पक्षिणः तान् पृच्छेत्यवोच'दितिमार्कण्डेयादा'विति पुराणकथामनूद्य, तस्याशयः—व्यासशिष्योप्यय मशुद्धचित्तो व्यासोक्तं न साधुमन्यते, ईश्वरः फलदो न; किंतु कर्मैवफलदं देवतिर्यगादीनां व्यासोक्तंज्ञानाधिकारं युक्तं न मन्यते, अतस्तिरश्चां शिष्योभूत्वा तेषांज्ञानाधिकारे ज्ञाते सर्वत्रव्यासोक्ते विश्वासीभवेत् तन्मुखादेव देवासुरसंग्रामकथाश्रवणेन तेषामविग्रहत्वाऽभिमानंच त्यक्ष्यति'इतिवदन् जैमिनेः 'देवानां विग्रहोनेति तात्पर्यमाविष्कृतवान्' तथा—तत्रैवपराशरस्मृतिव्याख्यायां माधवाचार्यो जैमिनिमतानुसारिणो जहास ईशसिद्धिभयाद्वेदशास्त्राप्रामाण्यमीयुषाम्। शास्त्रकृज्जैमिनिमुनिः केन मानेन सिध्यती'ति, अत्र ईशसिद्धीत्युपलक्षणं देवताविग्रहादेरपि। अत्र देवताच विग्रहश्च देवताविग्रहौ तावादी यस्येतिविग्रहः। आदिना तासां फलदत्वादेर्ग्रहः। देवतापदेन शब्दातिरिक्तेन्द्रादिदेवतायाश्च ग्रहः। ईश्वरस्य, देवतायाः, तद्विग्रहस्य, तासां फलदत्वादेश्च सिद्धिभयादिति माधवाचार्यवचनार्थः। अनेन इश्वरादिसाधकवेदादेरप्रामाण्यवादिनो जैमिन्याद्याः, एवंच—अतिरिक्तदेवतासाधकवेदादिरप्रमाणं तेषांमत इत्युक्तंभवति। ततश्च तत्र ईश्वरदेवता विग्रहाद्यभावे जैमिनेराशयमभिदधता अत्र'जैमिनिनाप्यङ्गीकाराच्चे'त्यभिधानं स्वपूर्वग्रन्थविरुद्धम्। ननु—प्राप्तोपदेशस्य जैमिने र्देवताया विग्रहादिकमभिमतमिति वृत्तिपरिच्छेदमञ्जूषातात्पर्यम्, अप्राप्तोपदेशजैमिनितात्पर्यवर्णनपरो लिङर्थप्रकरणस्थमञ्जू

षाग्रन्थइति न विरोधइतिचेत्, उच्यते—जैमिनेरुपदेशोत्तरकालिकीं मनसोवृत्तिं परिज्ञातुं भगवानेकएव सर्वान्तर्यामी प्रभवति, नतु तदन्ये, तत्रापि अस्मदादयोऽल्पज्ञाः। तदीयतन्त्रेणैवहि तदीयमतस्थितिरवगन्तव्या नतूपायान्तरेण। अतएवहि तत्तदाचार्य-सिद्धान्तनिरूपकास्तत्तदाचार्याणां वाक्यमेवप्रमाणतयोदाहरन्ति। नागेशोपि जैमिनीय-सूत्रोपन्यासे नैव तन्मतनिष्कर्षमकार्षीत् तदुदाहृतंसूत्रमुत्तरावस्थायां प्रणीतमिति केनमानेन निर्णीयते तेनाऽऽयुष्मता। लिङर्थप्रकारणस्थतदीयमञ्जूषाग्रन्थतो जैमिनिरुपदेशा-त्पूर्वमेव पूर्वतन्त्रं प्रणीतवानिति शक्यतेवक्तुम्। अन्यथा—'तदभिप्रायपरिज्ञानोपाया-भावेन 'अयमाशय'इत्यादिना विग्रहाद्यभावे तस्य तात्पर्यवर्णनं कथं संगच्छेत। तद्वचनेनहि तत्तात्पर्यंज्ञात्वा तदाशयो वर्णनीय इत्यलमतिविस्तरेण।

सूरयः खण्डदेवाद्याः पूर्वतन्त्रार्थवेदिनः।
पार्थसारथिमिश्राद्यैः कृतान् ग्रन्थान्विमृश्य तु ॥ १ ॥

देवताया विग्रहादि नेति चक्रु र्विनिर्णयम्।
नाऽब्रवीज्जैमिनिर्मुनिः कण्ठतो विग्रहादिकम् ॥ २ ॥

तस्मान्न संमतस्तस्य नागेशकृतनिर्णयः।
इतिजानन्तु विद्वांसो मात्सर्यादिविवर्जिताः ॥ ३ ॥

---

## (२६ मयडर्थविचारः)

यच्च-'तत्प्रकृतवचनेमय' (पा. सू. ५-४-२१) डितिसूत्रार्थविचारेब्रह्मणो निर्धर्म-कत्वप्रतिपिपादयिषया 'आनन्दमयोब्रह्म, चिन्मयंब्रह्मे'त्यादौ अयमेवमयट्, तत्र प्राचुर्यं निर्धर्मकत्वं व्यावहारिकमपरिच्छेद्यत्वंच, अनन्तत्वश्रुतेः........प्राणमयादावपि अयमेव-मयट्, विकारार्थस्याऽऽज्ञस्येनोपपत्त्यभावात्। शुद्धिमन्त्वेपि शुद्धिरावरणनाशरूपेति न विरोधइतिवृत्तिकृत'इत्यन्तेन अर्थतश्शब्दतोवा वृत्तिग्रन्थानुवादरूपेणग्रन्थेन [1]'वल्लीद्वये,

1. द्वितीयवल्याम् 'अन्योन्तर आत्माप्राणमयः, एतं प्राणमयमात्मानमुपसंक्रामती' त्यादौ, तृतीयवल्याम् 'एतं प्राणमयम्...उपसंक्रम्ये' त्यादौ,

शु[1]द्धिमंत्रेच श्रूयमाणोमयट् प्राचुर्यार्थक इतिप्रत्यपादि नागेशेन मञ्जूषायाम् ।

तत्रविचारः—विकारार्थस्याऽस्येनोपपत्त्यभावादित्युक्त्या 'इदंतुवक्तव्य'मित्यादिना वृत्तिकृन्मतंदूषयित्वा आनन्दमयशब्दे विकारेमयडिति आनन्दमयाधिकरणे विकारेमयडिति शंकराचार्यकृतसिद्धान्तो न समीचीनः, विकारेमयडिति शांकरेभाष्योक्तिश्चिन्त्या'द्व्यचश्छन्दसी'(पा. सू. ४-३-१५०)ति छन्दसि द्व्यचएव विकारेमयड्विधानात् आनन्दशब्दस्य त्र्यच्त्वात्तदप्राप्तेरिति केश्चित् शाब्दिकैः कृतचोद्यनिरासाय भाष्याद्यनुक्तसूत्रप्रत्याख्यानाद्युपायपञ्चकनिरूपणपरमनोरमाग्रन्थः, एतदर्थकोऽन्योपि ग्रन्थोऽयुक्तइतिस्पष्टमुक्तंभवति ।

अत्र ब्रह्मणो निर्धर्मकत्वमयुक्तं तत्रमानाभावात् । ननु—'एकोदेवः सर्वभूतेषुगूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे(श्वे. ६-११)तिश्वेताश्वतरश्रुतिः प्रमाणं, तत्र'निर्गुणश्चेत्युक्तेः,'निगुर्ण' इत्यस्यधर्मरहित इत्यर्थादितिचेत्, न, गुणपदस्य तत्पदवाच्यसत्वादिगुण इतिशाब्दमर्थं परित्यज्य अशाब्दधर्मसामान्यार्थकत्वे मानाभावात् । नच—गुणपदंवृत्तिमत्परमिति धर्मसामान्यवाचकमिति वाच्यम्—मुख्यार्थस्याऽबाधेन लक्षणायां मानाभावात् 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । असक्तंसर्वभृच्चैव निर्गुणंगुणभोक्तृचे'(गी, १३-१४)तिश्लोकव्याख्याने शंकराचार्यैः निर्गुणपदस्य सत्वादिगुणरहितमिति व्याख्यानात् अत्रापि तस्यैवाऽर्थस्य न्याय्यत्वाच्च । यदि निर्गुणपदं नागेशोक्तार्थकं, तर्हि—'एकोदेव'इत्यादिना अनेकगुणविधानमनर्थकंस्यात् । नच—य एकत्वादिगुणकः स निर्गुणइति उद्देश्यविधेयभावेन अन्वयः ततश्च अनुबादकत्वात्पूर्वेषां, न वैयर्थ्यमिति-वाच्यम्—एवंतर्हि निर्गुणत्वानुवादेन एकत्वादिकंविधीयते इत्यपिवक्तुंशक्यतया तदिष्टासिद्धेः । नच—उद्देश्यवचनंपूर्वं विधेयस्य ततःपर'मितिन्यायेन इत्थंयोजनाया अयोगइतिवाच्यम्—अपृक्तएकाल्प्रत्ययः (पा. सू. १ २-४१) समर्थः पदविधिः (पा. सू. २-१-१) इतिसूत्रे विधेयस्य पूर्वनिर्देशदर्शनेन तन्नियमस्याऽसार्वत्रिकत्वात् ।

किंच—उद्देश्यविधेयभावेनान्वयएवदुर्घटः समुच्चायकचशब्दश्रवणात् । एक-

1. अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मेशुध्यन्ता'मिति प्रव्रज्याहोममन्त्रे प्राणमयादीच । मूले प्राणशब्दस्यधारणात् एवमुक्तम् । अन्नमयस्यत्यागे तत्रान्तरत्मनोऽश्रवणं कारणमुक्तं कलायाम् ।

त्वादिधर्मतदभावयोःसामानाधिकरण्यायोगात् अस्मत्प्रदर्शितयोजनैव ज्यायसी । नच 'नमः शान्ताय घोराय मूढाय गुणकर्मणे । निर्विशेषाय साम्याय नमो ज्ञानघनायच' (भाग० ८-३-१२) इतिभागवते निर्विशेषायेत्युक्ते निर्धर्मकत्वं भगवतः प्रमितमितिवाच्यम्—तस्यनिर्विकारायेत्यर्थेन शमादिप्रधानवासुदेवादिरूपवत्त्वेपि जीववत् गुणकृतविकारशून्यत्वे तात्पर्यात् । इदं हेतुगर्भं विशेषणम्, अतएव—साम्यायेत्युक्तम् । सर्वत्र समइतितत्तात्पर्यम् । शान्तायेत्युक्तिरेव निर्विशेषायेत्यस्योक्तार्थेमानम् । निर्धर्मकत्वेहि शमोक्तिः कथं संगच्छेत । एवंजातीयाः श्रुतिस्मृतय एवमेव व्याख्येयाः । श्रीधरीयेतु 'गुणधर्मिणे'इतिपठित्वा सत्त्वादिधर्मानुकारिण इति व्याख्यातम् ।

व्यावहारिकमपरिच्छेद्यत्व'मिति तु न युक्तम्, श्रुतौ तादृशार्थपदाश्रवणात् । यद्यन्तरेणापि शब्दं तथात्वंब्रूषे तर्हि अशाब्दमर्थं कः प्रेक्षावान् श्रद्दधीत । किंच—सत्यत्वादेरपि तच्छ्रुतिबोधितस्य व्यावहारिकत्वापत्त्या ब्रह्मणःसत्यत्वमपि नेति शक्यं वक्तुम् । एकवाक्यबोधितेषु एकस्य पारमार्थिकत्वम्, अपरस्य व्यावहारिकत्वमितिकल्पनं प्रबलप्रमाणमन्तरा न शक्यम् । प्राचुर्यस्यनिर्धर्मकत्वे व्यावहारिकापरिच्छेद्यत्वेच वस्तुतो ब्रह्मणि धर्मादि नास्तीत्येवोक्तं भवतीति आनन्दोऽपि नास्तीत्युक्तंभवेत्, ततश्च-प्राचुर्यार्थकमयटा भगवति न गुणातिशयःसंपादितोभवति नागेशेनेति तदाश्रयणंव्यर्थम् । प्रस्तुते वस्तुनि गुणातिशयं बोधयितुंहि प्राचुर्ये मयटमाश्रयन्ति धीमन्तः प्रयोक्तारः । मयटश्चाप्येष स्वभावः—यत्स्वव्यधिकरणेस्वसजातीयाल्पत्वबोधकत्वं, यथा—प्रकाशमयः सविता, इत्यादौ सवितुरन्यस्मिन् प्रकाशाल्पत्वं प्रतीयते । क्वचित्तु—स्वाधिकरणेस्वविजातीयाल्पत्वबोधकत्वम्, यथा—अन्नमयम्, अत्रअन्नंबहु, तदितरत् अल्पमितिप्रतीयते । यथाप्रमाणं प्रयोगेषु व्यवस्था । प्रकृते आनन्दमय इत्यत्र आनन्दविजातीयदुःखादेर्ब्रह्मणि सत्त्वे प्रमाणाभावेन ब्रह्मातिरिक्तेचेतने आनन्दाल्पत्वप्रतीतिरिति प्राचुर्यमयटः प्रयोजनं वक्तव्यं नतु ब्रह्मणोनिर्धर्मकत्वसिद्धिरिति प्रामाणिकाः ।

अत्र वृत्तिकृत्पदेन किं प्रसिद्धोबोधायनः, उतान्यः कश्चित् विवक्षितइति विचारणायां, केचिदाहुः—नात्रस बोधायनोविवक्षितो भवेत् यतोऽत्रब्रह्मणोनिर्धर्मकत्वं प्राचुर्यमित्युक्तम् । बोधायनस्तु ब्रह्मणोनिर्धर्मकत्वम्, 'सत्य'मित्यादिश्रुतिबोधितापरिच्छेद्यत्वस्यापारमार्थिकत्वंचनाभ्युपैतीति 'भगवद्बोधायनकृतांविस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः

संचिक्षिपुः, तदनुसारेणसूत्राक्षराणिव्याख्यास्यन्त' इतिश्रीमद्रामानुजमुनिवर्याणां वचन-बलेन निश्चिनुमः। यद्यपि 'एकआत्मनःशरीरेभावात्'(ब्र, सु०३-३-५३) इतिसूत्रे 'अतएवच भगवतोपवर्षेण प्रथमेतन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरकेवक्ष्याम इत्यु-द्धारःकृत' इतिशंकरभाष्योक्तेः, (११०-पु) वृत्तिकारो भगवानुपवर्षोपि प्रथमतंत्रे. 'आत्मा........वक्ष्यामइत्याहे'तिपाराशर्यविजयकृदुक्तेश्च । अन्यःकश्चिदस्तिवृत्तिकृत्, सतुपाणिनेराचार्यवर्षनाम्नोभ्राता सोत्रविवक्षितोऽस्त्विति शक्यंवक्तुम्, तथापि तस्यब्रह्मणो-निर्धर्मकत्ववादितायां प्रमाणाभावः। कोभवेदत्र वृत्तिकृदितिचेत्, एतत्सदृक्षःकश्चिद्वि-पश्चित् अयमेववेति गृहाण। स्पष्टीकृतंच गुरुचरणैर्व्याससूत्रवृत्ता' विति देवतातद्धितार्थ-प्रकरणस्थकलाव्याख्यानात् नागेशोब्रह्मसूत्रस्यापि वृत्तिमतानीदितिप्रतीमः।

'विकारेमय'डितिशांकरभाष्यन्तु'द्व्यचश्छन्दसी'तिनियमस्य प्रायिकत्वाभिप्रायेण-प्रवृत्तम्। मनोरमातु स्वैरंप्रवृत्ता न रमयति विदुषांमनांसि। एतेन—मनोरमानु-सारिणो बोधिन्यादिग्रन्थाश्च व्याख्याताः।

अत्रकलायां'वस्तुत'इत्यादिना मयडन्तानांप्राचुर्यात् एकजातीयप्रयोगनिर्वाहाय अयमपिअत्यन्तस्वार्थिकमयडन्तःप्रयुक्तइति सूत्रार्थः। 'तत्प्रकृते'तिसूत्रे तदितियोग-विभागात् अत्यन्तस्वार्थिकस्यापि विधानमितिउपपादितं गुरुचरणैर्व्याससूत्रेन्दौ शेख-रेचेत्युक्तम्। अत्रेदंवक्तव्यम्—आनन्दमयाधिकरणे आनन्दमयःकिंपरमात्मा अथ जीव इतिसंशये ब्रह्मशब्दाभ्यासात्परमात्मेति आद्यसूत्रेणसिद्धान्तयित्वा आनन्दमय-शब्दस्य विकारार्थकमयडन्तत्वेन न परमात्मा वाच्य इतिप्राप्ते प्राचुर्यार्थक मयडन्तत्वात्तस्य शब्दस्य परमात्मैववाच्य इति'विकारशब्दा'[1](ब्र. सू. १-१-१३)दित्यनेनाह सूत्रकारः, सर्वेआचार्या अपि एवमेववर्णयान्तिसूत्रार्थम्। एवंचात्यन्तस्वार्थिकमयडन्तप्रयोगसाधने सूत्रकृदादीनां तात्पर्यमिति न शब्दमर्यादयालभ्यते। कॢप्तसाध्यांशानुवृत्तिं परित्यज्य साध्यांशान्तराध्याहारे गौरवम्। किंच 'तत्प्रकृते'तिसूत्रेतदितियोगविभागो भाष्ये न दृश्यते। भाष्याऽदृष्टयोगविभागस्याऽप्रामाणिकत्वं वदता नागेशेन तादृशयोगविभा-गमाश्रित्य अत्यन्तस्वार्थिकमयड्विधानोपपादनम्, तन्मूलकेदृशब्रह्मसूत्रार्थवर्णनंच कथ-मुपपद्येत। किंच—स्वार्थेमयटि तात्पर्यकल्पने प्राचुर्यादितिशब्दस्वारस्यभङ्गः, तेनहि आनन्दातिशयो ब्रह्मणि बोध्यते तदतिशयश्च आनन्दवल्या बृहदारण्यादौच स्पष्टं

प्रतिपादितइतिश्रीशङ्कराचार्यादिभिराचार्यैं भाष्यादौ निपुणंनिरूपितं, लाघवात्स्वार्था-दितिवक्तव्ये प्राचुर्यादिति व्यर्थं स्यादित्यलम् ।

वल्लीद्वये शुद्धिमन्त्रे मयट् प्राचुर्यबोधकः ।
निर्विशेषं परंब्रह्म प्राचुर्यं धर्मशून्यता ॥ १ ॥
इतिनागेशवचनं प्रमाणविकलं विदुः ।
असंमतं भाष्यकृतो नादर्तव्यं सुधीजनैः ॥ २ ॥

## (२७—अविद्याविचारः)

यच्चोक्तंनागेशेन मञ्जूषायांप्रथमपरिच्छेदे'प्रपञ्चोप्येवमेवे'त्यादिना'अलंप्रसक्तानुप्रसक्त्ये'त्यन्तेन ब्रह्माद्वैतप्रतिपादनावसरे मायानामकश्चित्पदार्थोब्रह्मणःप्रपञ्चसृष्टौ सह-कारिणी साच संस्कारसमूहरूपा, अतएवजगन्मायिकम् । अविद्यातु तज्जन्या, नाऽनादिः, अत्रैवतात्पर्यं श्रीशङ्कराचार्याणामपि, 'नहिब्रह्मातिरिक्तमजंसंभवति सदेव-सौम्येदमग्रआसी'दिति'सामान्यात्तु' (३-२-३२) इतिसूत्रे ब्रह्मातिरिक्तवस्तुसामान्य-स्याऽनादित्वंप्रतिषेधतामविद्यानादित्वस्याऽसंमतत्वावगमात्। किंच—सर्वाऽसंमताऽविद्या-विषये, अध्यासभाष्ये प्रश्नोत्तरानुपलम्भेन सा न भाष्यसंमता, किंच'अनाद्यविद्यायाः कारणत्वे अप्रामाणिकवस्त्वभ्युपगमः, सर्वस्य ब्रह्मैककारणकत्वसिद्धान्तभङ्गः, अद्वैत-हानिश्चे'तिदोषानुद्भाव्य अविद्याया अनादिभावत्वम्, जगतस्तत्कारणकत्वंचायुक्तमिति ।

अत्र—'एतद्विषयप्रश्नोत्तरानुपलम्भात् न सा भाष्यसंमतेत्युक्त्या, अनिर्वाच्या-नाद्यविद्यापरिकल्पितः इयमनादिरतिनिरूढे'त्यादिभामतीकाराणां मिश्राणां वचनम्, अविद्यासाधनानुमानेस्वप्रागभावे'त्यादिविशेषणंदेयमिति पञ्चपादिकाविवरणकाराणां वच-नम्, 'प्राक्कोटिराहित्यमनादित्वमध्यासस्ये'तिवार्तिककृद्वचनम्, अनादिभावरूपत्वेसति ज्ञाननिवर्त्यत्वमविद्यात्व'मिति चित्सुखाचार्यवचनम्, तच्चाऽनादि, तदुपाधेर्मायाया(अवि-द्यायाः) अनादित्वात्, अनाद्यविद्यायाःकारणत्वमितिवेदान्तपरिभाषाकृद्धर्मराजाध्वरीन्द्र-वचनम्, जीव ईशो विशुद्धा चि त्तथाजीवेशयोर्भिदा । अविद्या[1]तच्चितो योगः इति श्रीशङ्करमतानुयायिवृद्धतमानांवचनम्, अनाद्यविद्याविलसितमिदंसमस्तंजगदिति-

1. तदितिभिन्नंपदंलुप्तषष्ठ्यन्तं अविद्यायाइतितदर्थः । तच्चितोरित्यपपाठः, त्यदादीनिसर्वैर्नित्यमित्येकशेषेण द्वन्द्वबाधात् ।

तद्वर्ग्याणांवचनम्, तदीयानामनाद्यविद्यासाधनोद्यमनम्, मूलकारणाविद्यारूपभावपदार्थ-निमित्तक'इतिमिथ्याज्ञाननिमित्त'इति अध्यासभाष्यीयानन्दगिरीयादिव्याख्यानंच शङ्कर-भाष्यभावाऽपरिज्ञानमूलकमितिसूचितंभवति । किंच 'एवमयमनादिरनन्तो नैसर्गिको-ऽध्यास'इति अध्यासभाष्ये ऽध्यासस्यानादित्वोक्तिः 'नहिब्रह्मातिरिक्ताऽजंसंभवती'ति सामान्या'त्त्वितिसूत्रभाष्येण विरुद्धा, तेन ब्रह्मान्यस्याऽनादित्वनिषेधात्, 'अतस्मिन् त-द्बुद्धिरध्यासः तमध्यासंपण्डिता अविद्येतिमन्यन्त'इतिभाष्येण अविद्याध्यासयोरर्थान्तरत्वा-भावाभिधानात् अविद्याया अनादित्वे एतद्भाष्यतात्पर्यात् ।

अत्रवदन्ति-'प्रसक्तानुप्रसक्तचे'त्युक्तेः, पाणिनीयवचनानुदाहृतेःपरमार्थसारवच-नोदाहृतेश्च निरूपणमिदं न पाणिनिमतानुरोधेन, किंतुपरमार्थसारकृन्मतानुरोधेनेति-प्रतीयते, तत्रचब्रह्मातिरिक्तानादिवस्तु नेतिनोक्तं, किंतु अनादेः प्रकृतेःपरः(उत्तमो-भिन्नश्च)विष्णुनारायणवासुदेवोपेन्द्रहर्यादिपदाभिधेयो भगवान्परंब्रह्म, प्रकृतिमायाविभू-त्यादिपदवाच्यस्वभावभूतस्वशक्त्या विचित्रविविधप्रपञ्चं निर्मिमीते । साचशक्ति रनादि र्विष्णोरधीना अचेतना अतएव न स्वतन्त्रा, जगत्सृष्ट्यादौ विष्णोः सहकारिणी, एवं विधनारायणविज्ञानं मुक्तिसाधनमिति निरूपितम्, किंच—'परंपरस्याःप्रकृते'रित्याद्यपद्येन, 'स्वभावभूता मायैषां'(१६)इतिआर्ययाच मायाया अनादितोक्ता, 'स्वभावभूते'त्यस्य-स्वतोविद्यमानेत्यर्थात् । नच आद्यपद्येनप्रकृतेरनादित्वंकथंसिद्धमितिवाच्यम्'प्रकृतेरनादि-त्वेपि अचेतनत्वान्नस्वातन्त्र्य'मितिव्याख्याने राघवानन्दमुनिकृते अनादित्वोक्तेः सूल-स्यापितत्रैवतात्पर्यात् । किंच—विष्णोःप्रकृतेःपरत्वं न कादाचित्कं किंतु सदातनमेवेति प्रकृतेरपि सदातनत्वम(अनादित्वम)र्थसिद्धमिति आद्यपद्यतात्पर्यम् ।

ननु अप्रामाणिकमनादिभावरूपाविद्याख्यंवस्त्वितिचेत्, न 'अनादिमायया सुप्त' इत्यादिप्रमाणसिद्धत्वात् । नच अनादित्वेसर्वस्यब्रह्मैककारणकत्वसिद्धान्तभङ्गइतिवाच्यम् पराधीनसत्ताकत्वमात्रेण तत्कारणकत्वोपपत्तेः[1] । नच—अद्वैतहानिः—प्रागभाववत् अस्या नाशदर्शनेनाऽनन्तत्वाभावात् अनाद्यनन्तवस्तुसत्त्वएवतद्दोषात । यद्वा—समानसत्ताकव-स्त्वन्तरसत्वे तद्दोषप्रसङ्गः, अविद्याया अनादित्वेऽपि ब्रह्मसत्तासमानसत्ताकत्वाभावात्

1. ततश्चजन्यत्वंद्विविधं पराधीनसत्ताकत्वम् उत्पत्तिमत्त्वंचेति । तत्राद्यमनादिवस्तुनः, तदितरस्य द्वितीयमितिविवेकः । अविद्यादेरनादित्वेपि ईश्वराधीनसत्ताकत्वेन जन्यत्वमिति न ब्रह्मैककारणकत्वसिद्धान्तभङ्गः ।

नास्यदोषस्यावकाश इति सिद्धान्तलेशसं ग्रहव्याख्यानादितोऽवगम्यते ॥ अनादिवासना-रूपा माया त्रिगुणा 'अजामेका'मिति श्रुतिप्रतिपाद्या, ब्रह्मैककारणकंजगदिति वदताभवतापि एवमेववक्तव्यम् अन्यथा मायायाःसहकारिणीत्वे ब्रह्मैककारणकत्वभंगः, तस्याःजन्यत्वे अजामिति श्रुतिविरोधः तया तस्या अजन्यत्वोक्तेः, श्रुत्याचानादित्वसिद्धौ अद्वैतहानि-रितिदोषः तवापिमते आपतति। नच—अस्मिन्कल्पेऽजन्यमिति श्रुत्यर्थेन न दोषइति वाच्यम्—प्रतिकल्पमस्याः श्रुतेःसत्त्वेन तत्रापिअत्रकल्पेऽजन्यमित्यर्थवर्णनसंभवेन अना-दित्वस्यैवसिद्धेः । मायायास्सहकारिणीत्वाभावे जगतोमायिकत्वोक्तिरसंगता स्यात् ।

'नहिब्रह्मातिरिक्तमजंसंभवती'तिभाष्यस्यतु तदतिरिक्तंस्वतन्त्रमजं नास्तीत्यर्थेना-ऽदोषइतितत्संप्रदायविदः । अतएव शाङ्करेगीताभाष्ये'प्रकृतिंपुरुषंचैव विद्ध्यनादी उभावपी'(गी. १३-१९)तिश्लोकव्याख्यावसरे प्रकृतिपुरुषेश्वराणामनादित्वं, तत्र प्रकृतिपुरुषयोरनादित्वानङ्गीकारे ईश्वरस्येश्वरत्वमनुपपन्न'मित्युक्तम्। प्रकृतिपुरुषयोरनादि-त्वेपि ईश्वराधीनसत्ताकत्वमस्ति ईश्वरस्य सर्वस्वामित्वात् । ततश्चतस्येश्वरत्वमुपपद्यते इतितद्भावः। स्पष्टीकृतमेतत् गूढार्थदीपिकायाम्, श्रीधरीयेच तच्छ्लोकार्थवर्णनावसरे ।

अद्वैतसिद्धौच दृष्टिसृष्टिवादे सर्वेषांसृष्टत्वे'जीवईशोविशुद्धाचि'दितिप्राचांवचन-विरोधः तत्रजीवादीनांषण्णामनादित्वोक्त्या तेषामजन्यत्वादित्याशङ्क्य अनाद्यतिरिक्त-सृष्टिविषयएव दृष्टिसृष्टिस्वीकारादितिसमाहितम्, 'जीवब्रह्मविभागस्याऽनादित्वेने'ति-तत्रैववादे स्पष्टम्, तत्रैव अविद्यायाःचिन्मात्राश्रयत्वविचारे नापिजीवस्यसादित्वापत्तिः उपाधिबिम्बसंबन्धानादित्वेना ऽनादित्वोपपत्ते'रितिब्रह्मातिरिक्तस्य संबन्धस्य, जीवस्यचा ऽनादित्वमुक्तम् । अतएव 'सच प्रत्यगात्माऽनादिसिद्धः तस्मिन्नैसर्गिकत्वस्या ऽनादित्व-मर्थसिद्धमित्यध्यासभाष्य पञ्चपादिकायां पद्मपादाचार्यैरुक्तं प्रत्यगात्मनोऽनादित्वम् ।

किंच—वैषम्यनैर्घृण्याधिकरण (ब्र. सू. २-१-१२) शाङ्करभाष्येब्रह्मातिरिक्त-सृष्टिहेत्वनादिवस्तुसत्ता प्रतिपादिता। किंच 'भ्रमात्संस्कारतोप्यन्या मण्डूकमृदुदाहृतेः। अविद्याऽनादिभावात्मा मतावाचस्पतेरिहे'तिदेवताधिकरणीयकल्पतरुणापि अनादि-भावरूपाऽविद्या वाचस्पतिसंमतेत्युक्तम् । तत्रेहेत्यस्य श्रीशङ्करीयाणांमते इत्यर्थः, देव-ताधिकरणइति संकोचेकारणाभावइति पूर्वप्रकरणे निरूपितम्। ननु पराधीनसत्ताकत्वं-जन्यत्वमित्यङ्गीकारे वियदादेरपि तथात्वाभ्युपगमेन जन्यत्वंसुवचमिति वियदादेरुत्पत्ति-

साधनप्रयासो व्यर्थइति वियदधिकरण्यनुत्थितिप्रसंगइतिचेत्, उच्यते—'आत्मन आकाश' इत्यादावकाशस्योत्पत्तिश्रवणात् तदनुत्पत्तिवादः श्रुतिविरुद्धइतिबोधनाय तत्समर्थनमावश्यकम्, अविद्याया उत्पत्तेः क्वाप्यश्रवणेन 'अनादिमयया' इत्यनादित्वश्रवणेन ब्रह्मणः सर्वनियामकत्वश्रवणेनच एवमङ्गीकृतमिति । अधिकमद्वैतग्रन्थेषु द्रष्टव्यम् ।

किंच-'अस्तिकर्माख्यमनादिवस्तु शुभाऽशुभं प्राणिनांजन्मान्तरकारण' मित्यर्थक 'नकर्माऽविभागादितिचेन्नाऽनादित्वात्' (ब्र. सू. २-१-३६) इतिव्याससूत्रविरुद्धं नागेशवचनम् । तेनचसूत्रेणाऽनादिवस्तुकिंचिदस्तीति[1] प्रतिपादनात् ।

अविद्यायाअनादिभावत्वकथनं 'यावद्विकारंतुविभागोलोकवत्' (ब्र. सू. २-३- ) इतिसूत्रेण कार्यत्वस्यभेदव्याप्यत्वबोधकेन आकाशस्येवाविद्याया अपि अतथात्व(कार्यत्व) बोधनात् तद्विरुद्धमितिदूषणमपि न समीचीनम्, आकाशादिभूतोत्पत्तिविषय एवविचारस्य तत्रकृतत्वेन अविद्यायाःकार्यत्वबोधनेसूत्रस्य तात्पर्याभावात् । यदुक्तंतत्र 'ब्रह्मणो ऽधर्मकत्वेनकिंचिन्निरूपितभेदोब्रह्मणिने' ति न तस्यजन्यत्वमिति, तच्चिन्त्यम्, ब्रह्मणोऽधर्मकत्वंवदतोऽस्यमते प्रतियोगित्वस्यापिधर्मस्यब्रह्मणिअसंभवेन अविद्यायांशुद्धब्रह्मभेदस्यसत्त्वात् कार्यत्वमायाती' ति स्वोक्तिविरोधात् । ततश्चब्रह्मणोपिकिंचिन्निरूपितभेदवत्ता सुवचेति तस्यापिकार्यत्वापातः । किंच 'यावद्विकार' न्त्वितिसूत्रभामतीकल्पतरुपरिमलादिग्रन्थानवलोकनेनवा, तत्रतदुक्तमसंगतमिति प्रतिपिपादयिषयावा, [2]अयमत्राऽविद्यानादित्वं दूषयतीतिभाति । तत्रहिसूत्रे भामत्यां ब्रह्म(आत्मा)न्यत्वेसतिविभक्तत्वादितिहेतुरुक्तः, कल्पतरौच 'विकाराः = पराधीनसत्ताकाइत्यर्थः, एवंचविभक्तत्वमविद्यादौ नानैकान्तं (नव्यभिचरितं) तस्य प्रागभाववत्त्वाभावेपी' त्याद्युक्तम्, परिमलेच-अविद्यादावित्यादिना 'षडस्माकमनादय' इत्युक्तजीवेश्वराद्यर्थान्तरसंग्रहइत्युक्तम् । एतेनप्रबन्धत्रयेण अविद्याद्यनादित्वंभाष्यकृत्संमतमितिप्रतिपद्यते, मिश्रादयोहि न कदाचिद्भाष्यकृदनभिमतमर्थंप्रतिपादयेयुः, भाष्येप्यविद्यादीनामनादित्वं तत्रतत्राऽभिहितम् । अतो 'नसा भाष्यसंमते' तिनागेशोक्तिश्चिन्त्यैव । एतेन 'संभृष्टाध्यास' इतिआनन्दगिरीयाध्यासभाष्य व्याख्यानम्, मूलकारणाविद्यारूपभावपदार्थनिमित्तकइत्यर्थ' इति 'मिथ्या ज्ञाननिमित्त' इत्यन्येषामध्या-

---

1. सृष्टेरनादित्वात् कर्मणोऽप्यनादित्वम्, क्षेत्रज्ञतत्कर्मणामनादित्वमितिवा, सूत्रतात्पर्यम् । अत्रावान्तरविचारस्त्वन्यः 2. नागेशोमञ्जूषायाम् ।

सभाष्यव्याख्यानंचानूद्य'तन्ने'त्यादिना तद्दूषणमपि चिन्त्यम्। अविद्यानादित्वस्य भाष्य-संमतत्वोक्तेः। अयंतावन्महद्भिराचार्यैर्विवृतार्थानि सूत्राद्यक्षराणि अन्यथायोजयतीति-सुव्यक्तं मञ्जूषादृशाम्। अत्रेदमुदाहरणम्—'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य' (ब्र. सू. २-३-७) इतिसूत्रे अकारप्रश्लेषमकृत्वा प्रतिज्ञाभंगःस्यात् इति व्याख्याय प्रतिज्ञाऽऽपादनपरतया सूत्रखण्डं योजयित्वा अहानिरिति अकारप्रश्लेषेण प्रतिज्ञाया अहा-निरनुपरोधइति श्रीशङ्कराचार्यकृतसूत्रव्याख्यानादस्मदीयं व्याख्यानं वरमितिसूचयति नागेशः। यद्यपि अकारप्रश्लेषतदभावयोः फलाविशेषः, अथापिसौत्राक्षराणियोजयितुं वयमेव समर्थाइति वैदुष्याभिमानप्रदर्शनमेवप्रयोजनमिति वेदितव्यम्। एवमनेनबहूनां सूत्राणां स्वसमीहितार्थपरतया विलक्षणा योजनाकृता, साच एतत्कृतव्याससूत्रेन्दुनामक-ग्रन्थतोऽवसेया। इदंज्ञेयम्—अविद्यापदार्थस्वरूपनिर्णयविषये अद्वैताचार्याणां प्रमाद-एवेतिबोधनायैव ब्रह्माद्वैतनिरूपणमुपक्रान्तं मञ्जूषायामिति अक्षरार्थमार्मिका इति।

अविद्याभ्रमसंस्कार रूपा शङ्करसंमता।
न त्वनादिर्भावरूपे त्याह नागेशपण्डितः ॥ १ ॥
तच्चाऽद्वैतमताचार्य बहुग्रन्थविरोधतः।
न युक्तमिति मन्यन्ते श्रीशङ्करमतानुगाः ॥ २ ॥



## (२८ अनिर्वचनीयत्ववादविचारः)

यच्चमञ्जूषायां द्विवि[1]धप्रपञ्चस्यमायिकत्वंप्रसाध्य'मायामात्रमितिमात्रपदेन अनिर्व चनीयोत्पत्तिवादमपिनि[2]राकरोती'त्यादिना शुक्तिरजताद्यनिर्वचनीयपदार्थस्वीकर्तृ श्री-शङ्कराचार्यमताऽनुयायिनामद्वैताचार्याणां मतनिरसनम्, एतच्चप्रतिविधास्यते, प्रति-विधानंच मतद्वयनिष्कर्षसापेक्षमिति प्रथमं स संक्षिप्यते—तत्र—अध्यासभाष्यव्याख्यायां भामत्यां'मृगतृष्णाजलादि न सत्, नाऽसत्, नापि न सदसत् (किंतु)अनिर्वचनीय'-मितिमिश्रग्रन्थस्य, एवंजातीयकस्या ऽन्येषामद्वैताचार्याणां ग्रन्थस्य, अद्वैतसिद्धौ[3] अज्ञा-नवादेऽनिर्वचनीयत्वलक्षणनिरूपणप्रकरणस्थस्याऽसद्विलक्षणत्वेसतिसद्विलक्षणत्वेचसति-

1. जाग्रत्स्वाप्नप्रपञ्चस्य। 2. सूत्रकृद्व्यासः। 3. मैसूरुराजकीयसर्वविद्यालये मुद्रितपुस्तके।

सदसद्विलक्षणत्व'मितिग्रन्थस्यच पर्यालोचनायां, सत्, असत्, अनिर्वचनीयमिति वस्तु-त्रिविधं, तत्र-सत् ब्रह्म, असत्=शशविषाणादि, अनिर्वचनीयंतु शुक्तिरूप्यं, जगच्च। तत्राद्ययोर्नोत्पत्तिः, तृतीयंतु उत्पत्तिमत्, सदसाद्विलक्षणत्वमनिर्वचनीयत्वमितिवस्तुस्थिति-रद्वैतिनां मते। नागेशस्यमतेतु-सत्, असदितिद्विविधमेववस्तु, तत्र ब्रह्मसत्, असत्तु-ब्रह्मान्यत्सर्वम्, तच्च—जाग्रत्प्रपञ्चः, स्वप्नोऽर्थः, शुक्तिरजतादि. शशविषाणादि, अनिर्वचनीयत्वंच—सत्त्वेननिर्वक्तुं, असत्त्वेनचनिर्वक्तुमशक्यंयत्तत्त्वम्, शाङ्करा-द्वैताचार्याणामभिमतमनिर्वचनीयत्वलक्षणंतु न युक्तं न सूत्रकृद्व्यासासंमतं मायामात्रेति मात्रेत्युक्तेरितिस्थितिः।

तत्र'सदसद्भिन्नत्वमनिर्वचनीयत्व'तिति अद्वैत्यभिमतस्याऽनिर्वचनीयत्वलक्षणस्यसद्भिन्न-त्वेऽसत्त्वंप्राप्नोतिअसद्भिन्नत्वेचसत्त्वमितिसत्त्वासत्त्वोभयानाक्रान्तवस्त्वसिद्धिरिति दूषण-मयुक्तम्, अस्यदोषस्य नागेशमतेपि संभवात्, यश्चोभयोः समोदोषःपरिहारोपिवासम' इतिन्यायात्। तथाहि जगदसदितिवदन्नागेशः प्रष्टव्यः-किंभवान् शशविषाणादिवत् जगदसदिति मन्यते, अथसत्पदवाच्यब्रह्मान्यदिति। नाद्यः, जगतोऽर्थक्रियाकारित्वेन शशविषाणतुल्यत्वाभावात्। नद्वितीयः, ब्रह्मभेदस्यजगति सर्वैरङ्गीकारात्, कस्याप्य-निष्टाभावात्। एवंच-जगतिभवताब्रह्मशशविषाणभेदोऽङ्गीकृतोभवतीति श्रीशङ्करमतानु-याय्यद्वैताचार्यसंमतोभयभेदवैलक्षण्याभावेन तेषांमतेभवतोद्धाटितोदोषः तवमतेप्या-पततीति। किंच-जगतोऽसत्त्वे'असत्त्वेननिर्वक्तुमशक्यमितिभाषणं व्याहतम्। अस्य-तन्निर्वनरूपत्वात्। किंच-असत्त्वेननिर्वक्तुमशक्यत्वेसत्त्वंप्राप्नोतीति न जगतोऽसत्त्वा-सिद्धिः। यच्चोक्तं तदनन्यत्वसूत्रेण, मायामात्रेतिसूत्रेणच मायिकत्वस्यैवसिद्धेरितदपिन, ताभ्यांसूत्राभ्यां तथाऽलाभइति, मात्रपदस्यकेवलार्थकत्वं नेतिच, उत्तरप्रकरणयोर्निरूपयि-ष्यते। स्वोत्प्रेक्षितमेव श्रीशङ्कराचार्याणामपिसंमतमितिबोधनाय'अविद्याकल्पिते'त्यादि-भाष्यमेवमेवव्याख्येयम्'ईश्वरस्यात्मभूतेअनिर्वचनीये' इत्यादिभाष्यस्याप्ययमेवार्थः, एवं जातीयकमन्यदपिभाष्यमेवमेवव्याख्येयम्'इत्यादिना केषांचिद्भाष्यवाक्यानां स्वसमी-हितार्थपरतयाऽर्थवर्णनेनतत्रैवमेवेत्यादिकथनेनच प्राचामाचार्यदेशीयानां तद्भाष्यव्या-ख्यानदूषणम्, तदपि नसहेरन् आचार्यचरणशरणा अद्वैतिनः। तदुक्तार्थस्यभाष्य-कृदाद्याचार्यासंमतत्वात् युक्तियुक्तत्वाभावाच्च। अत्रनागेशव्याख्यानस्यप्राचांव्याख्यानस्य-

च युक्ताऽयुक्तविचारो ग्रन्थगौरवभिया न कृतः। ख्यातिबाधान्यथानुपपत्त्याच अनिर्वच-नीयंवस्तु अंगीकर्तव्यमिति अद्वैतिनांग्रन्थेषुस्पष्टम्। परमार्थसारव्याख्याकृद्राघवानन्द-मुनिरपि जगतः सदसदन्यत्वमेवेतिवदति इदंतुबोध्यम्—श्रीव्यासपाणिनिपतञ्जलिभिर्ज-गतोऽसत्त्वाद्यनुक्तेर्नेदमसत्त्वादि व्यासाद्यभिमतम्, 'असत्यमप्रतिष्ठंते'(गी.)इत्याद्युक्तेः, जगतोऽनिर्वाच्यत्वव्यवहारस्तु—पदार्थानां हानोपादानहेतुभूतावाङ्मनसगोचरविलक्षण-स्वाभाविकधर्मवत्त्वेनेति।

जगतोब्रह्मवत्सत्त्वं नाऽसत्त्वं शशशृङ्गवत्।
तस्मात्तदुभयान्यत्त्वं युक्तं शास्त्राविरोधिच ॥ १ ॥
अतो ऽद्वैतमताचार्यै स्तथोक्तस्यच दूषणम्।
नागेशपण्डितकृतं रोचते न विदां हृदे ॥ २ ॥



## (२९ जगन्मायिकत्वेतदनन्यत्वस्थलसंमतिनिरासः)

यदप्युक्तंमञ्जूषायां 'यद्यपि जाग्रत्प्रपञ्चस्यापि'तदनन्यत्वमारम्भणशब्दादिभ्य' (ब्र. सू. २-१-१४) इतिसूत्रेण मायामात्रत्वमुच्यतइति, अत्रवदन्ति—न तेनसूत्रेण जगतोमायिकत्वमुच्यते, तत्र तादृशार्थकपदाभावात्, अनन्यत्वोक्तिस्तु'मुखंचन्द्र'इत्या-दाविव सादृश्यमूलिका, सादृश्यंच सत्यत्वेनेति जगतःसत्यत्वमेव बोधयतीति शक्यं वक्तुम्। 'येनाऽश्रुतम्, वाचारम्भण' (छा. ६)मित्यादिप्रतिज्ञादृष्टान्तवाक्ययोरपि मायि-कार्थकपदाश्रवणात्ताभ्यामपि न जगत स्त[1]थात्वसिद्धिः। नच अनन्यत्वोक्तिरेव प्रपञ्चस्य वस्तुत्वाभावंबोधयन्ती मायिकत्वमपिगमयतीतिवाच्यम्—लोकेतथाऽनुभवाभावात्। नहि लोकेकश्चित्'मुखंचन्द्र' इत्यादौस्सामानाधिकरण्यनिर्देशेनमुखस्यचन्द्रतादात्म्यतात्पर्येण मुखस्यवस्तुत्वाभावादिकं प्रतीयतेइतिवक्ति। किंच-घटपटादिप्रपञ्चस्याऽचेतनत्वेन ब्रह्मण-श्चेतनत्वेन चेतनाऽचेतनयोरनन्यत्वायोगात् तथोक्तेः कार्यस्य कारणाऽविनाभावे तात्पर्य-मितिवक्तव्यम्। अविनाभावश्च'तत्सृष्ट्वातदेवानुप्राविशत् (तै. उ. २) विष्टभ्याह-मिदंकृत्स्नमेकांशेन स्थितो जगत्' (गी. १०) इतिश्रुतिस्मृतिप्रमाणप्रमितः। किंच घटशरावादयः सर्वेविकारा नैकमृत्पिण्डप्रभवा इति सर्वसाक्षिसिद्धम्।

1 मायिकत्वसिद्धिः।

श्रुत्यर्थस्तु एकेन=विज्ञातेनेश्वरेण, अविज्ञातम्=अज्ञातमपिवस्तु=विज्ञातम्=सादृश्याद्विज्ञातंभवति, अत्र सादृश्यप्रयोजकधर्मः सत्त्वम्। विकारः = कार्यजातम्, घटशरावादि, वाचारंभणम् = वागिन्द्रियेण, भिन्नभिन्नशब्देन व्यवह्रियते, घटादीनां सर्वेषामपि मृत्तिकेत्यपिनामधेयमस्ति, मृद्विकारत्वात्, सत्यम् वास्तवमिति। अयंभावः- घटशरावादीनामाकारभेदेन भिन्नशब्देन व्यवहारेपि कारणगुणस्य तदंशस्यच कार्येपि सत्त्वेन कारणवाचकशब्देनापि व्यवहारः संप्रतिपन्नइति। कारणगुणसंपर्कःकार्येऽप्यस्तीति महाकविश्रीहर्षोप्याह—'स्वर्गापगा हेममृणालनीनां नालामृणालाग्रभुजो भजामः। अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते' (नैषधं. ३-१७) इति। श्लोकार्थःस्पष्टः। यद्वा अश्रुतं=श्रुतफलशून्यम्, येनश्रुतेन=श्रुतेनपरमात्मना, श्रुतं=श्रुतफलकंभवतीत्यर्थः, केवलकर्मकाण्डादिश्रवणादि न फलाय भवति परमात्मश्रवणादौ तु फलवद्भवति। जगज्ज्ञानं ज्ञातेब्रह्मणि जगदीश्वरत्वज्ञानकारणमिति ईश्वरज्ञानेन जगज्ज्ञानं सफलमिति तात्पर्यम्। मृत्कार्येघटादौ मृत्त्वेनज्ञाते तत्रनिक्षिप्तं दध्यादि शुक्तादिदोषयुक्तं न भवतीति निश्चयात् तत्रदध्यादि निक्षेपे प्रवृत्तिः जायते

किंच अनेनप्रतिज्ञादृष्टान्तेन ईश्वरादन्यत् ज्ञातव्यंवस्तु अस्तीत्येव ज्ञायते, नतु अन्यन्नास्तीति। यद्यन्यस्य ज्ञेयस्याऽभावे तात्पर्यं, तदाऽविज्ञातमित्यादिपदस्वारस्यभङ्गः, येनाऽश्रुतंनेत्येतावदेव 'वाचैवकेवलमारभ्यते वागालम्बनमात्रं न वस्त्वस्तिकिंचि'दिति नाक्षरमर्यादया लभ्यते। किंच कारणानन्यत्वं कार्यस्य परिणामिकारणस्थल एव नतु निमित्तकारणस्थले। ईश्वरस्तुजगतो निमित्तकारणमिति अवोचाम पूर्वमेव। अतोऽनन्यत्वोक्तेरसदुक्त एवार्थेतात्पर्यमुक्तम्। एतेन'तत्तत्प्राणिकर्मवशाद्विभ्रमरूपां सृष्टिं स[1]करोति' इत्यपिचिन्त्यम्, जगतोविभ्रमरूपत्वे मानाभावात्। सृष्टेःपूर्वं प्राणिनाम् (ईश्वरातिरिक्तजीवानाम्) अभावेन'प्राणिकर्मवशा'दिति च नयुक्तम्। किंच वासनारूपभ्रमस्यधर्मत्वेन आश्रयमन्तरा स्थितिर्दुर्निरूपा, नच ईश्वर आश्रयः, तस्यनिर्धर्मकत्वेन यथार्थज्ञानवत्त्वेन चभ्रमायोगात्, आत्मैकत्ववादिनस्त[2]स्यमते ईश्वरान्यजीवस्यसृष्टेःपूर्वंमभावेन स भ्रमाश्रयइत्यपि न। ततश्च आश्रयाभावेन वासनाऽस्तित्वंदुर्घटम्। उक्तंच शङ्कराचार्यैः 'नभावोऽनुपलब्धे' (ब्र. सू. २-२-३०)रितिसूत्रे'अपिच वासना नाम संस्कारविशेषः संस्कारश्च नाऽऽश्रयमन्तरेणाऽवकल्पते, एवंलोके दृष्टत्वा'दिति। अतः कस्यचिदपि-

1. ईश्वरः। 2. नागेशस्य।

वस्तुनो मायिकत्वंवक्तुं न शक्यम् । नच आध्यासिकसंबन्धेन ब्रह्मैव वासनारूपाविद्याश्रय इतिवाच्यम् अध्यासस्याऽऽरोपरूपत्वेन अध्यस्तस्यच मिथ्यात्वेन(असत्त्वेन)ब्रह्मणि भ्रमो नास्त्येवेत्युक्तंभवतीति तस्य कर्तृत्वायोगात् । आदिसृष्टौ वासनास्तित्वस्य दुर्वचत्वाच्च। नच तदा जन्मान्तरीया सा गृह्यतइतिवाच्यम्—तथासति तस्याअनादित्वापत्तेः, ब्रह्माऽन्यानादिवस्तुनिराकुर्वता एवंवक्तुमशक्यत्वात् । किंचजगतो ब्रह्मानन्यत्वे सत्यत्वं, चेतनत्वंच स्यात् । मृत्पिण्डदृष्टान्तोपि मृत्कार्यस्यघटादेर्मृत्त्वेन ज्ञानमात्रे तात्पर्यवान् विज्ञातमितिपदश्रवणात्। शाब्दस्यार्थस्यपरित्यागे अशाब्दस्यार्थस्यपरिग्रहेकारणाभावात्। एतेनभोग्यवस्तुजातस्य 'भोक्ताभोग्यं प्रेरितारंच मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मचैवे' (श्वे)तिश्रुत्युपन्यासेन ब्रह्मत्वोक्तिरपि चिन्त्या । श्रुतौब्रह्मत्वव्यपदेशस्तु तदधीनत्वन्यायेन राजाराष्ट्रमितिवत् । अन्यथा भोग्यजडवस्तुनोपि चेतनत्वापत्तिः । किंच—'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ एतांदृष्टिमवष्टभ्य नष्टात्मानो ऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयायजगतोऽहिताः ॥' (गी. १६-९) इति असुरस्वभावा एवजगदसत्यमित्याहुः, अतएव ते जगतः अहिताःशत्रव इत्यर्थः। तेषां स्वरूपमाह—'प्रवृत्तिंचनिवृत्तिंच जना न विदुरासुराः । न शौचं नापिचाचारो न सत्यं तेषु विद्यते'(गी. १६-७) इत्यनेन जगदसत्यत्ववादिनोजनस्य शौचाचारसत्यवचनाऽभ्युदयनिःश्रेयससाधनप्रवृत्तिनिवृत्तिधर्मज्ञानविधुरता स्वरूपमितिभगवदाशयः । 'ये जगदसत्यंवदन्ति ते ऽनृतवादिनो मायिन'इति श्रीशङ्कराचार्या गीतार्थमाहुः । श्रुतिरप्येषाभगवती'कविर्मनीषीपरिभूःस्वयंभू र्याथातथ्यतो ऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्य' (ई. ८) इति यथार्थान् (वास्तवान्) पदार्थान् सृजति भगवानितिस्पष्टंवदति । किंच—अस्यसूत्रस्य जगतोमायिकत्वे तात्पर्यवर्णनं 'तद[1]न्तरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्ननिरूपणाभ्या'(ब्र. सू. ३-१-१) मिति तार्तीयीकप्रथमपादीयबह्वधिकरणविरुद्धम् । तत्रहि—जगतो मायातिरिक्ताऽबादिपदार्थोपादनकत्वमुक्तम्। वेत्थयदितोऽधि प्रजाः प्रयन्ति, वेत्थयथापुनरावर्तन्ते, वेत्थपथोर्देवयानस्यपितृयाणस्यचव्यावर्तना, वेत्थयथा पञ्चम्यामाहुतौपुरुषवचसोभवन्ति' (छा. ५-२) इतिछन्दोगानामाम्नायेअबादिभूतान्येव शरीरोत्पत्तौकारणमिति अभिहितम् । एवं वाजसनेये अष्टमेद्वितीयस्मिन्ब्राह्मणेपि श्रूयते । परमार्थसारव्याख्येनेराघवानन्दमुनिना प्रपञ्चस्यब्रह्मानन्यत्वंतु'परस्यप्रपञ्चावस्थिति

1. देहान्तरप्रतिपत्तौ

हेतुत्वा'दिति आद्यपद्यव्याख्यानावसरे प्रतिपादितम् ।

ननु—'भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः । वर्तयन्स्वानुभूत्येह त्रीन् स्वप्नान्धुनुते मुनिः' (भाग. ७-१५)इतिभगवता बादरायणेन सर्वाद्वैतमुच्यतइति जगतो मायिकत्वसिद्धिरिति न भ्रमितव्यम्, भागवतस्य कार्यकारणयो र्विद्यमानभगवद्रूपाणां भेदाभावरूपभावाद्वैतम्, इतरदेवताराधनं न कार्यमिति क्रियाद्वैतम्, आत्मादीनामीशातिरिक्तानधीनत्वरूपं द्रव्याद्वैतंच चिन्तयेत्, एवंभावयन् त्रीन्स्वप्नान् जाग्रदाद्यवस्थासु जायमाननश्वरपदार्थज्ञानानि धुनुते=नाशयति, जाग्रदाद्यवस्थां न प्राप्नोति मुक्तो भवतीत्यर्थात्। एवंच-स्वरूपैक्यपरतया व्याख्यानंचिन्त्यम् । अस्य श्लोकस्यार्थविवरणपराणा मुत्तरश्लोकानामयमेवाभिप्रायः, नतु कार्यकारणयोरैक्ये तात्पर्यम्। 'तत्सृष्ट्वातदेवानुप्राविश'दितिश्रुतिः कार्येषु भगवदस्तित्वबोधिका । भगवान्सूत्रकारोपि कारणत्वेनचाकाशादिषु यथाव्यपदिष्टोक्तेः' (ब्र. सू. १-४-१५) इतिसूत्रेण आकाशादिष्वपि तत्कार्याणां वाय्वादीनां ब्रह्मकारणकत्वसिद्धये ब्रह्मास्तित्वमाह । अतएवोक्तमभियुक्तैः 'भूतंभूताभिमानीच तद्देहोऽन्तर्नियामक'इति । ननु—अन्यैस्तीर्थकरैरेवंसूत्राशयो न वर्णित इति चेत्, ब्रूमः । सर्वैराचार्यैः सर्वेषां ब्रह्मकारणकत्व श्रौतसिद्धान्तपरिपालनाय अयमर्थोऽङ्गीकार्यः । अयं च श्रौतसिद्धान्तः । 'यतोवाइमानिभूतानि, आत्मनआकाशः संभूतः, तत्तेजोऽसृजत्' इत्यादयःश्रुतयोहि आकाशादि सर्वं ब्रह्मकारणकं वदन्ति, तत्सृष्ट्वातदेवाऽनुप्राविश'दित्यादयस्तु ब्रह्मणोऽनुप्रवेशं सृज्यमानेषुसर्वेषु बोधयन्ति, भगवान्सूत्रकारश्च 'जन्माद्यस्ययत'इति सूत्रेण दृश्यमानंसर्वं ब्रह्मकारणकमिति सिद्धान्तयति, 'कारणत्वेने' तिसूत्रे श्रीशङ्कराचार्याअपि 'क्वचिदाकाशस्य, क्वचित्तेजसः, क्वचिदपां प्रथमंसृष्टिःश्रूयते, अतः सृज्यमानानां क्रमे विगानेपि न स्रष्टरि विगानं सर्वत्रेश्वरादेव सृष्ट्युक्ते'रितिसर्वस्य ब्रह्मकारणकत्वमेवेति निर्णयन्ति। एवंचसर्वस्यब्रह्मकारणकत्वेश्रुतितात्पर्यम् । यदिसृज्यमानेष्वाकाशादिषु न भगवद्रूपमस्ति, तदा अग्न्यादेर्भगवत्सृष्टत्वं कथंस्यात्, कथंच स्रष्टरि विगानं न स्यात्, कथंच श्रौतसिद्धान्तः सूत्रकृत्सिद्धान्तश्च, संगच्छेतेतिविभाव्यताम् ।

तदनन्यत्वसूत्रेण कथ्यते मायिकं जगत् ।<br>
इति नागेशविदुषो भाषणं नैव युज्यते ॥ १ ॥

श्रुतौ सूत्रे तादृशार्थपदं यस्मान्न वर्तते ।
तस्मादशाब्दमर्थं तं श्लाघन्ते न हि पण्डिताः ॥ २ ॥

## (३० मायामात्रेतिसूत्रविचारः)

यदत्रस्वाप्नस्यमायिकत्वे 'मायामात्र'(३-२-३)मितिसूत्रोपन्यसनं, तदपिचिन्त्यम्—तत्सूत्रस्य[1]तत्रतात्पर्याभावात् । तथाहि—तत्रमायापदमीश्वरीयविचित्रशक्तिपरम्, 'एकस्त्वमेव भगवन्निदमात्ममायया मायाख्ययोरुगुणया महदाद्यशेषम् । सृष्ट्वाऽनुविश्य पुरुष स्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि' (भाग. ४-९-७) इत्यत्र विचित्रेश्वरशक्तेर्मायेति अभिधेत्युक्तत्वात् , परमार्थसाख्याख्याने राघवानन्दीये आद्यपद्यव्याख्याने प्रकृतिमायादिपदयोरीश्वरशक्तिरिति व्याख्यानाच्च मात्रपदं माधातोः 'हुयामाश्रुभसिभ्यस्त्रन्नि'त्युणादिसूत्रेण कर्मणि त्रनि निर्मितमित्यर्थकम् । 'नतत्ररथाः, अथरथाः (बृ. ४-३-१०) इत्यादिविषयवाक्यबलेन रथादिकमितिशेषः सन्ध्येनिर्मातारंचेतिवर्तते । निर्मात्रेतितृतीयान्ततयाविपरिणम्यते । अयमर्थः—निर्मात्रा = परमेश्वरेणस्वाप्नरथादिकं, मायामात्रम् = तदीयया विचित्रशक्त्या निर्मितम्, कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् = जाग्रत्पदार्थवत् सामस्त्येन उचितदेशकालवृत्तित्वेन अनभिव्यक्तस्वरूपत्वात् भासमानस्वरूपत्वादिति । अयंभावः—स्वप्नद्रष्टृपुरुषीयतात्कालिकानुभवमात्रयोग्यं स्वाप्नं वस्तु सृजति ईश्वरः, तदीयशक्तेर्वैचित्र्यंच तथाविधवस्तूत्पादकत्वमिति । अथवा—मायापदमीश्वरीयेच्छापरम् 'महामायेत्यविद्येति नियतिर्मोहनीतिच । प्रकृतिर्वासनेत्येव तवेच्छाऽनन्तकथ्यत'इतिअभियुक्तोदाहृतप्रमाणे भगवदिच्छापर्यायेषु पठितायाः प्रकृतेः 'मायांतुप्रकृतिं विद्यान्मायिनंतु महेश्वरम् (श्वे- ) इतिश्रुतौमायात्वोक्तेः । मात्रपदं कर्मणित्रन्नन्तं । परमात्मना इच्छयानिर्मितं स्वाप्नगजादिकमिति सूत्रार्थः । शिष्टंपूर्ववत् । इच्छार्थेमायापदस्य प्रयोगोपि महाकविभारविकृतौकिराते—'अथस्वमायाकृतमन्दिरोज्ज्वलं ज्वलन्मणि व्योमसदां सनातनम् । सुराङ्गना गोपतिचापगोपुरं पुरं वनानां विजिहीर्षया जहुः' (८-१) इति । स्वमायया = स्वेच्छाविशेषेणेतिमल्लिनाथः । गोपतिचापः = इन्द्रधनुः, तद्वर्णसदृशवर्णगोपुरशोभितंपुरं

1. स्वाप्नस्य मायिकत्वे ।

जहुरितिसंबन्धः । 'इच्छामात्रं प्रभोःसृष्टिरिति सृष्टौविनिश्चिते'(मांडूको० )तिसृष्टि-सामान्यस्य भगवदिच्छामूलकत्वोक्तेः । अस्तुवा मायापदंवासनापरं तथापितन्निर्मितस्य स्वाप्नपदार्थस्य न शशविषाणवदसत्त्वं वक्तुंशक्यम् । संस्कारस्यचसत्यत्वात् स्वाप्नस्यजाग्रत्पदार्थवदर्थक्रियाकारित्वात् । अतएव— जाग्रतीव स्वप्नेपि संभावितनारीसंयोगादिना चरमधातुस्खलनंसंभवति । अतएवच महर्षयः स्वप्ने परदाराभिमर्शनादेः पापहेतुत्वंस्मरन्तः स्मरन्ति संभावितत्तद्दोषपरिहाराय प्रायश्चित्तम्, वर्णिनांयतीनांच प्रायश्चित्तविशेषंच । अतएवच— उत्तमपुरुषलक्षणे'स्वप्नेप्यन्यवधूकथा'इति स्वाप्नपरदारकथाभावादिः निवेशितः। यदि स्वाप्नमसत् तर्हिपरदाराभिमर्शनादेः पापहेतुत्वस्मरणं तस्यप्रायश्चित्तस्मरणंच व्यर्थं'स्यात् । किंच–स्वप्ने चरमधातुनिस्सरणेन संजातव्याधेःचिकित्सांविदधत आयुर्वेदविदइति सर्वेषामनुभवसिद्धम्, यदि स्वाप्नमसत्स्यात् तेनव्याधिर्नोत्पद्येत तस्यार्थक्रियाकारित्वायोगात्तस्यचिकित्साविधानं व्यर्थंभवेत् । इयान्विशेषो जाग्रत्स्वाप्नवस्तुनोः, जाग्रद्वस्तूनि कतिचित् चिरकालवर्तीनि, कतिचित्तु अचिरकालिकानि, स्वाप्नवस्तूनितु सर्वाणि अचिरकालिकान्येवेति । महाकविकालिदासादिभिः—'स्वप्नोनु मायानु मतिभ्रमोनु क्लिष्टंनु तावत्फलमेव पुण्यम् । असन्निवृत्त्यै तदतीतमेव मनोरथाना मतटाः प्रवाहाः'(शा. ६-अ.) इतिस्वाप्नमायिकपदार्थयोर्भेदस्य दर्शितत्वेन, लोकेप्युभयोरनयो र्भेदेनैव व्यवहारेण स्वाप्नस्य मायिकत्वमयुक्तम् । एतेन—जाग्रत्प्रपञ्चस्य मायिकत्वंसमर्थयमानेन यदुक्तं'प्रपञ्चोपिदीर्घस्वप्नएवास्माकमित्याशयादि'तितदपास्तम् । स्वाप्नमायिकत्वस्यैव दुर्निरूपत्वात् । किंच-स्वाप्नजागरितवस्तुनोर्वैधर्म्यस्य(भेदस्य) 'वैधर्म्याच्चनस्वप्नादिव' (ब्र. सू. २-२-२९)दिति सूत्रेणप्रदर्शितत्वात्स्वप्नदृष्टान्तेन जागरितवस्तुनो न मायिकत्वंशक्यंवक्तुं व्यासमते, वैधर्म्यंचोपपादितंश्रीशङ्कराचार्यप्रभृतिभिः, 'निद्राग्लानंतुमेमनः तेनैषाभ्रान्तिरुद्भूवेति, अपिच—स्मृतिरेषा यत्स्वाप्नदर्शनम्, उपलब्धिस्तुजागरितदर्शन'मित्यादिभिः, निद्रादिदोषमूलंस्वप्नदर्शनं, जागरितंतु न तादृशमित्यन्यैरुक्तम् । इतरैश्च'स्वाप्नमिदं न जागरित' मित्यादिबाधतदभाववत्त्वधर्मवैषम्यात् न स्वप्नदृष्टान्तो युक्त इत्युक्तम् । एवमेवान्येप्याचार्या आहुः ।

मायामात्रेतिसूत्रेहि हरीच्छाशक्तिबोधकम् ।
मायापदं तत स्तेन स्वाप्नोऽर्थस्तु न मायिकः ॥ १ ॥

वासनावाचकत्वेपि न स्वाम्रं मायिकं भवेत् ।
सत्याहि वासना तस्मान्नागेशोक्तं न युज्यते ॥ २ ॥

—०००—

## (३१ नासद्रूपेतिश्लोकार्थविचारः)

यदत्र मञ्जूषायां(१-प.) 'नासद्रूपा नसद्रूपा माया नैवोभयात्मिका । अनिर्वाच्या ततोज्ञेया मिथ्याभूता सनातनी' तिबृहन्नारदीयवचनं स्वाभिमतमायापरतया व्याख्याय, तेन प्रतिषिद्धमेव सदसदात्मकत्वमभ्युपयन् [1]तत्त्वे विरोधमाशङ्क्य सत्त्वमारोपितं परमार्थतस्तु अवास्तवमितिवारयन् तत्रप्रमाणतया 'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मक' (मनु. १-११)मितिमानवं वचनमुदाहृत्य तत्र 'सदि' त्यस्य आरोपितं सत्त्वमित्यर्थवर्णनम्, यच्च—त[2]स्यवचनस्याऽविद्यापरत्वं मन्वानः 'अव्यक्तपदवाच्या सूक्ष्माऽविद्या, व्यवहारकाले सा स्थूलविद्यायाःकारणमिति तस्याएवकारणत्वेन निर्देशः 'अव्यक्तंकारण' मितीदमेववचनं प्रमाणत्वेनोदाहरणम्, तदुभयं चिन्त्यम्, तत्र-सत् = वेदान्तसिद्धत्वात्सत्त्वभावम्, असत् = प्रत्यक्षाद्यगोचर' मिति कुल्लूकभट्टादिभिर्व्याख्यानात् । किंच—अयंश्लोकः 'आपोनारा' (१०)इतिपूर्वश्लोकनिर्दिष्टस्य भगवतोनारायणस्य कार्यब्रह्मसृष्टिकर्तृत्वादिगुणनिर्धारणाय प्रवृत्तः, तस्य श्रुत्यैकवेद्यत्वात् उक्तसत्त्वासत्त्वमुपपद्यते । ननु-नवयं तथामन्यामहे किंतु अविद्यास्वरूपनिरूपणार्थ एवैष श्लोकइतिचेत्, आस्तांतावदेवमभिमानो भवतां, नायंशास्त्रार्थव्यवस्थापनाय प्रभवेत् । श्लोकस्तु नारायणगुणप्रतिपादनपरएव । 'तद्विसृष्टः पुरुषो लोके ब्रह्मेतिकीर्त्यते' इत्युत्तरार्धे 'तद्विसृष्ट' इतिकार्यब्रह्मणो नारायणसृष्टत्वोक्तेः । ननु—ब्रह्मणोऽव्यक्तपदवाच्याविद्यासृष्टत्वमेव तेनोच्यत इतितु न मनोहरम्. तस्याअचेतनत्वेन सृष्टिकर्तृत्वायोगात् । श्रुत्यादयोहि अचेतनस्य प्रधानस्य कर्तृत्वंवारयन्त्यः, नारायणस्यैव कर्तृत्वंक्रियासमभिव्याहारेण प्रतिपादयन्ति । 'योब्रह्माणंविदधातिपूर्वम्, (श्वे.) तस्मादेतदन्नंब्रह्मे(मु)त्यादयस्तु नारायणएवब्रह्माणमसृजदितिविशिष्य वेदयन्तीति प्रतिपद्यन्ते विचक्षणाः । किंच उदाहृतं नारदीयंवचनं श्रीशङ्कराचार्यमतानुयायिनामभिमते ऽनाद्यविद्यास्वरूपे, सदसद्विलक्षणाऽनिर्वचनीयस्वरूपेच, प्रमाणंभवितुमर्हति, नतु नागेशाभिमतमायास्वरूपे, तत्र 'सनातनी, नैवोभया-

---

1. उभयभिन्नत्वे । 2. मानवस्य ।

त्मिका। अनिर्वाच्ये'त्युक्तेः। अतोवृथाप्रास्यति नागेशोऽपराध्यतिच महत्सु। अव्यक्तं प्रधानमिति कला, तन्मूलभूतैत[1]च्छ्लोकव्याख्याच चिन्त्यैव प्रकरणविरोधात्, नारायण-महिमवर्णनस्य प्रक्रान्तत्वात।

नागेशमतमायायां न प्रमाणमिदं व[2]चः।
किंतुमानं भवेदेतदद्वैताचार्यसंमते॥ १॥
अनाद्यविद्यारूपेऽर्थे चानिर्वाच्यत्वलक्षणे।
सनातनीत्यादि[3]पद श्रवणादिति बोध्यताम्॥ २॥

---

## (३२ ऋतेऽर्थमितिश्लोकार्थविचारः)

यच्चस्वाभिमतवासनारूपमायायां प्रमाणतया 'ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत-चात्मनि। तद्विद्यादात्मनोमायां यथाभासोयथातमः' (भाग. २-९-३३)इतिश्लोक-मुदाहृत्य, 'यदात्मनिप्रतीयेत, यच्च न प्रतीयेत, तत् = प्रत्ययाऽप्रत्ययरूपम्, आत्मनो-मायांविद्यात्, असदर्थप्रकाशनस्यैव मायात्वात्'इतितदर्थवर्णनम्। तच्चिन्त्यम्—'यथा-ऽऽत्ममायायोगेने' (२-९-२६)तिमायास्वरूपप्रश्नात्'वीर्यंहिरण्मयंदेवो मायया व्यसृजत् त्रिधे' (भाग. २-१०-१३) त्यादौ तस्याः सृष्टिसाधनतोक्तेःततःपरत्रश्लोकेषु माया-प्रसक्तेः, जगत्सृष्ट्यादिसाधनभगवदायत्तज्ञानापवारकवस्तु अत्रमायाशब्दवाच्यम्। तस्याःसामर्थ्यमाहायंश्लोकः। अयमर्थः—यत् = यस्मात्, ऋतेऽर्थम् = अर्थंविनापि (तदभावेपीतियावत्) प्रतीयेत = असत्यविद्यमानमसत्त्वम्, भासते आत्मनिच विद्यमानं भेदपारतन्त्र्यादि न प्रतीयेत=न भायात्, तत्=अन्यथाज्ञानाऽज्ञानसाधनं वस्तु, मायांविद्यात् = मायापदवाच्यंजानीयात्। अविद्यमानवस्तुविषयकज्ञानविषये आभासइतिदृष्टान्तः, विद्यमानार्थाज्ञाने तमइति। आभासोद्वित्वादिश्चन्द्रे, तमस्तु—ज्योतिर्मण्डलमध्यगतोराहुः। यथावस्थितार्थविषयकज्ञानापहारकत्वं मायाया भगवतै-वोक्तम्'माययापहृतज्ञाना(गी. ७-१५) इति। ईदृश्यपिमाया निवर्तते भगवत्प्रतिपत्त्येति 'दैवीत्येषे'तिभगवतैवोक्तम्। भागवतव्याख्यानेषु बहुधाव्याख्यातोऽयं श्लोकः।

1. मानवश्लोकेत्यर्थः। 2. नासद्रूपेतिवचनम्। 3. आदिना नैवोभयात्मिका। आनिर्वाच्येत्याग्रहः।

सैषा माया विमोहयन्ती भगवद्विमुखान् कार्याकार्यविवेकरहितान् कुर्वन्ती अकार्यंच कारयन्ती कुयोनिषु जनयतीति भवति सृष्टिहेतुः । किंच—मायाशब्दस्यानेकार्थकत्वात् ईश्वरशक्तावपि मायाशब्दप्रयोगदर्शनात् तत्सामर्थ्यप्रतिपादनपरोऽयंश्लोकइतिसुवचम् ।

ऋतेऽर्थंयदितिश्लोको न प्रमाणं भवेदिति ।
मायास्वरूपे नागेशसंमते प्रतिपद्यताम् ॥ ८ ॥



## (३३ शब्दस्य एकत्वनिरासः)

यदत्रमञ्जूषायां प्रथमपरिच्छेदेवाचकशब्दं लक्षयित्वा तस्यैकत्वमभिहितंनागेशेन, अत्रेदंचिन्त्यम्—भगवता भाष्यकृता पाणिनीयस्यास्य शास्त्रस्य विषयप्रयोजनेनिरूपयता 'अथशब्दानुशासनं केषांशब्दानां लौकिनांवैदिकानांचे'तिशास्त्रविषयस्यशब्दस्य बहुत्वोक्ते नैकत्वंयुक्तम्, न च व्यञ्जकानां बहुत्वेन तदभिप्रायकं भाष्यमिति वाच्यम्, नागेशमते वाचकस्यस्फोटस्यैव सत्यत्वेन तदतिरिक्तानां व्यञ्जकानामसत्यत्वेन ग्रन्थादावसत्यस्य विषयत्वेन निरूपणायोगात् ।

नच—'एकइन्द्रो ऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्र भवती'तिसरूपसूत्रभाष्यं वाचकस्यशब्दस्यैकत्वे मानमितिवाच्यम्, तस्यभाष्यस्य इन्द्रशब्दस्य एकत्वे तात्पर्येण घटपटादिशब्दान्तराभावाऽसाधकत्वात् । इदं च'इतीन्द्रव'दित्यत्र शब्दप्रादुर्भावेऽव्ययीभाव' इतिकैयटोद्योतानुसारेणोक्तम् । वस्तुतः—तत्रइन्द्रशब्दस्यार्थपरत्वेपि प्रकृतानुगुण्यं सुसंपादम् । तत्प्रकारस्तु—उत्तरमीमांसायां देवताऽधिकरणे देवताया विग्रहवत्त्वेपि 'सामर्थ्यविशेषात् सर्वत्र युगपत्संनिधानमेकस्यैवेन्द्रस्य, अथवा एकत्रैव स्थितमिन्द्रादिदैवतं तैस्तैर्दीयमानं हविर्युगपदुपतिष्ठते, यथाबहुभिः समर्प्यमाणा नमस्क्रियादय एकत्रस्थितानाचार्यादीन् गच्छन्ती'तिशङ्कराचार्यैरुक्तदिशाभाष्यार्थोबोध्यः। भाष्ये 'इन्द्र आहूत' इत्युक्तेः, आह्वानस्य लोकेप्रायेण चेतेनविषयएव दर्शनात् अत्रार्थ एवभाष्यतात्पर्यंयुक्तम्, अन्यथा'इन्द्रशब्द उच्चारित' इत्येववदेत् । नन्वेवंभाष्यार्थे वर्णिते इतिशब्दोव्यर्थ इतिचेत्, न—इतीतिभिन्नं पदमुक्तविषयविशेषलाभार्थमित्यवैयर्थ्यात् ।

किंच—'शब्दानांप्रतिपत्तौ प्रतिपदपाठः कर्तव्यः, नेत्याह, अनभ्युपायएष शब्दानांप्रतिपत्तौ प्रतिपदपाठः, एवंहिश्रूयते'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रति-

पदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तंजगामे'ति पस्पशास्थमहाभाष्योदाहृत-श्रुत्या वाचकशब्दबहुत्वावगमात्। अवाचकानेव शब्दानुपादिशदिन्द्राय बृहस्पतिरितितु न प्रामाणिकानांहृद्यम्। श्रुतिसिद्धमबाधितमर्थमपलपितुमीश्वरोपिनाधिकरोति। प्रयुक्तानामिदमन्वाख्यान'मितिभाष्ये, नित्येषुशब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्य मनपायोपजनविकारिभि'रिति 'दाधा आद्यन्तावितिसूत्रभाष्येच'प्रयुक्तानांशब्देष्वि'ति बहूवचनप्रयोगश्च नित्यानां वाचकशब्दानां बहुत्वेप्रमाणम्। येनोच्चारिते'त्यादिभाष्ये'येन, सशब्द'इतिएकवचनंतु जात्यभिप्रायकम्। यदि'येने'त्यादिभाष्यव्याख्यानकैयटदिशा एकएवशब्दःशास्त्रविषय इत्युच्यते तर्हिएकस्यैव विषयत्वे शास्त्रमेवानारम्भणीयंस्यात्, 'नैकमुदाहरणंयोगारंभंप्रयोजयती'तिन्यायात्। नच—व्यञ्जकानुशासनद्वारा शास्त्रं स्फोटानुशासनं व्यञ्जकाश्च बहव इति न दोषइतिवाच्यम्—तथाभाष्यकृदादिभिरनुक्तेः। तेषां कल्पितत्वेन आणयतिवट्टयतीत्यादीनामिव शास्त्रविषयत्वायोगात्। तेषांतदविषयत्वेच तदनुशासनद्वारा स्फोटानुशासनमित्येतद्दूरोत्सारितमिति प्रसिद्धशब्दातिरिक्तस्फोटस्यैवासिध्या तत्रएकत्वादिविचारो गगनकुसुमदलगणनकल्पएव। ननु—एकविषयकत्वे शास्त्रमनारम्भणीयमित्येतन्नयुक्तं ब्रह्मणएकत्वेपिवेदान्तशास्त्रारम्भदर्शनादितिचेत्, इदमुच्यते—अस्त्यत्र दृष्टान्तवैषम्यम्, सर्वाध्यक्षस्य ब्रह्मण एकत्वेपि तत्रविचार्यमाणानां गुणानांबहूनांसत्त्वेन तद्विचाराय शास्त्रारंभोन्याय्यः, स्फोटस्यतु एकत्ववादिनस्तस्यनिर्धर्मकत्वाभ्युपगमेन अखण्डे विचार्यधर्माणामभावेनशास्त्रारम्भोव्यर्थः। नच ब्रह्माप्यखण्डमितिवाच्यम्—वेदान्तशास्त्रमारभमाणेन महर्षिणा ब्रह्मणोऽखण्डत्वानङ्गीरात्। पाणिनिनाप्याचार्येण क्वापि ब्रह्मस्फोटयोरखण्डत्वानुक्तेः। निरूपितमिदं पुरस्तात्पदादीनामखण्डत्वनिरसनावसरे। ननु—सूत्रद्वयभाष्यस्य'वर्णादीनांसर्गादौसृष्टिः, प्रलये नाश इतिपक्षेइदम्, प्रयोगेश्रूयमाणाः शब्दाएव वाचकाइतिमतेनेदमिति उद्द्योतेव्याख्यानेन वाचकबहुत्वं न भाष्यकृत्संमतमिति तात्पर्यमितिचेत्, उच्यते—सूत्रद्वयभाष्येपि वाचकैकत्वसाधकपक्षान्तरानुपन्यासात् शब्दमर्यादया लब्धाऽबाधितार्थपरित्यागे कारणाभावात् सूत्रद्वयोद्द्योतोऽनादरणीय इति। ननु—'आद्यन्ता'वितिसूत्रे'अथवा—एतयाऽऽनुपूर्व्या ऽयं शब्दान्तरानुपदिशति, प्रकृतिम्, ततोवलाद्यार्धधातुकं, ततःपश्चादिकारम्, यस्मिन् तस्यागमबुद्धिर्भवति'इतिसागमकानामादेशत्वोपपादनतृतीयप्रकारप्रदर्शनभाष्यस्य असत्यप्रकृति प्रत्ययोपदेशेन सत्यस्य वाचकपदस्य व्युत्पादनंक्रियते, रेखागवयन्यायेनेव सत्यगवय-

स्ये'तिकैयटेन व्याख्यानात्, भाष्यं श्रूयमाणानां वस्तुतो नार्थवाचकत्वं किंतुतेन बोध्यस्य नित्यस्यतत्वमित्यत्र मानमितिचेत्, न, स्फोटवादिनांमते स्फोटातिरिक्तस्य सत्यत्वाभावेन इतव्यादेरवान्तरसमुदायस्यापि असत्यत्वेनतद्बोधनद्वारा वाचकबोधनतात्पर्यकस्य। अथवा यत्तावदयं सामान्येनोपदेष्टंशक्नोति तावदुपदिशति, प्रकृतिम्....तेनाऽयंविशेषेण शब्दान्तरं समुदायं प्रतिपद्यते' इतिपूर्वभाष्यस्याऽनुत्थितिप्रसंगात्। 'शब्दान्तरंसमुदाय मिति भाष्यमादाय'तव्याद्यपेक्षया भिन्नमितव्यादी'ति उद्द्योतेव्याख्यानात् पूर्वभाष्यस्यापि कल्पितशब्दएव शास्त्रविषयइति नागेशतात्पर्यात्। यद्वा– नागेशकृतव्याख्यारित्या अथवेतिपक्षद्वयभाष्ययोः समानविषयकत्वलाभात् 'अथवे'त्युत्तरभाष्यस्यानुत्थिति प्रसंगः। किंच-'नित्यंपद'मितिकैयटमादाय व्याकरणाऽनिष्पाद्यमित्यर्थ'इतिव्याख्यानेन कल्पितएव साक्षादुपदिश्यते तेनवाचकस्यबोधनमिति अलाभात्, पक्षद्वयस्यापि समानविषयकत्वेन आद्याऽथवेतिपक्षे वाचकस्यैवाऽनयाप्रणाल्या व्युत्पादनम् उत्तराथवेतिपक्षे कल्पितस्य साक्षाद्बोधनं, तेनवाचकस्याखण्डस्यबोधनमिति भेद, इति पक्षद्वयस्य वैलक्षण्यनिरूपणासंगतिः, नागेशोक्तदिशा पक्षद्वयेपि कल्पितस्यैव साक्षाद्बोधनमिति लाभात्। तर्हि पक्षद्वयस्य कोभेदइतिचेत् अधिकारिभेदात्भेदः, तथाहि–संज्ञापक्षे ज्ञानगौरवम्, 'आडजादीना'मितिसूत्रयतः पाणिनेर्नाभिमतः स पक्ष, इतिमत्वा पक्षान्तरमाह–अथवेति॥ अयंचसिद्धान्तिनइति उद्योते। भाष्येअयम् = पाणिनिः, तेनाय'मित्यत्राऽयंशब्दो बोद्धृपरः। अयंचपक्षो दाधेतिसूत्रोक्तएव अनेन तव्यबुद्धिप्रसंगे इतव्यबुद्धिः कार्या, ततः तद्विशिष्टो भवितव्यादिशब्दो वाचको बोध्यइतिबोध्यम्। अयंच मध्यमाधिकारिकः। द्वितीयोऽथवेतिपक्षस्तु ऊहापोहकुशलोत्तमाधिकारिकः। अयंभाष्यार्थः– एतयानुपूर्व्या = अनेनक्रमेण, अयं = पाणिनिः, शब्दान्तरम् = वाचकशब्दम्, उपदिशति = बोधयतीति॥ प्रकृत्याद्युपदेशमात्रेण स्वप्रतिभयैव अवान्तरसमुदायोपदेशमन्तरापि शास्त्रीयसर्वकार्यविशिष्टसमुदायं प्रतिपद्यत उत्तमाधिकारीतिभावः। ततश्च 'नित्ये'ष्वित्यादिभाष्यपर्यालोचनायां वाचकशब्दस्य बहुत्वमेव युक्तमिति भाति।

वाचकस्यतु शब्दस्य नैकत्वं भाष्यसंमतम्।
इतिभाष्यं समालोच्य संगिरन्ते सुधीजनाः॥

## (३४ स्फोटस्याऽनार्षत्वनिरूपणम्)

किंच—'इदंच शिष्टसमाचारात्प्रक्रियादशायां स्वीकार्यम्, परमार्थदशायांतु—पदे न वर्णा विद्यन्ते वाक्येष्ववयवा नहि(च)। वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चने' तिवाक्यपदीयोक्तदिशा स्फोटं सिद्धान्तयतां क्वाऽस्य पूर्वपक्षस्यावसर' इति'एओङ्' तिसूत्रशेषे कौस्तुभेवाक्यपदीयोक्तदिशेत्युक्त्या, 'तद्व्यतिरिक्तः स्फोटो नादव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापित' इति पस्पशान्हिककैयटे'वाक्यपदीये' इत्युक्त्याच स्फोटवादे भर्तृहरिवचनमेव मूलं नतु मुनित्रयवचनमिति कैयटादिभिरेव स्पष्टमभिधानात् पाणिनीयसूत्रानुदाहरणात्, स्फोटो न मुनित्रयसंमत इति वदन्तीति कृतं विस्तरेण।

स्फोटे मानं कैयटादौ हरिवाक्य मुदाहृतम्।
न पाणिनीयं वचनं तस्मात्सो ऽनार्ष ईर्यते ॥ १ ॥



## (३५ वाचकस्याखण्डत्वनिरासः)

यत्तु'अखण्डान्येवपदानी' त्युक्त्वा'इदमपि' 'आद्यन्ता, वितिसूत्रभाष्य' इत्युक्तं मञ्जूषायां, तदपेशलम्—'अइउ'णादिषु बहुषुसूत्रेषु'नित्येषुशब्देषु कूटस्थैरवि[1]चालिभिर्वर्णैर्भवितव्य' मितिभाष्ये कूटस्थस्य वर्णघटितत्वोक्त्या सखण्डत्वमेव भाष्यकृत्संमतत्वावगमात्। क्वापिभाष्येऽखण्डत्वस्य स्पष्टमनुक्तेः। एतेन—'तेनच बोधकस्याऽखण्डस्य बोधन' मिति'आद्यन्ता' विति सूत्रस्थद्वितीयाथवेतिपक्षभाववर्णनं चिन्त्यम्, तेना ऽनेनच भाष्येण तादृशार्थालाभात्। किंच—अखण्डत्वे निर्धर्मकत्वावश्यंभावेन तस्य वाचकत्वं कथंस्यादिति विभाव्यताम्। ननु—अध्यस्यते तत्रतदितिचेत्, तेनतत्र तन्नास्तीत्येवेत्युक्तं भवतीतिज्ञेयम्। 'भाष्येवर्णपदेन प्रकृतिप्रत्ययागमादय' इतिमञ्जूषोक्तेश्च सखण्डत्वं शक्यंवक्तुम्। 'अइउ'णितिसूत्रस्थनित्येष्वित्यादिभाष्यपर्यालोचनायां वर्णैरित्यस्याक्षरैरित्येवार्थो युक्तइतिभा[2]ति। कलायांतु—द्वितीया'ऽथवे'तिभाष्यम्, तत्रत्यकैयटोद्द्योतौच प्रमाणतयोपन्यस्य, तैः अखण्डत्वलाभप्रकारो नोपपादितः। किंच—'वाक्यादपोद्धृत्य पदान्यन्वाख्यायन्त' इतिभाष्यं शब्दानां सखण्डत्वएव प्रमाणम्, अपोद्धरणस्य समुदा-

1. देशान्तरप्राप्तिरहितैः। कूटपदार्थविवरणमिदम्।
2. प्रकृत्यादि परत्वेवा, वर्णपरत्वेवा तत्त्वसिद्धौनकोपिप्रतिबन्धः।

यादेकदेशाऽऽदानरूपत्वात्। 'अपोद्धरणं = कल्पनम्, कल्पनयाप्रविभज्ये'तिकलादि-व्याख्यानंतु नाक्षरमर्यादालभ्यमिति शब्दार्थतत्त्वविदो न साधुमन्यन्ते। अङ्गाधिका-रस्थानि सूत्राणिसखण्डत्वे प्रमाणानि। अखण्डत्वं न व्यासादिसंमतमितिपूर्वं निरूपितम्।

वाचकस्य सखण्डत्वे भाष्यं मानं प्रदर्शितम्।
अखण्डत्वे वाचकत्व धर्मस्तत्र कथं भवेत्॥ १॥

## (३६ स्फोटे भाष्यसंमतिनिरासः)

ननु'स्फोटःशब्दो, ध्वनिः शब्दगुण'इतितपरसूत्रभाष्योक्तेः, स्फोटो भाष्यसंमत आर्षःपाणिनेश्च संमत इतिचेत्, ब्रूमः—तत्र स्फोटपदस्य स्फुट्यते=व्यज्यते इति कर्मव्युत्पत्त्या व्यङ्ग्योनित्यइति, स्फुटत्यस्मादर्थ इतिव्युत्पत्त्या वाचकइतिवाऽर्थात् तेन भाष्येण हरिकैयटदीक्षितनागेशादिभि र्लक्षितलक्षणस्फोटाऽसिद्धेः। तथाहि वर्णानामु-त्पत्तिवादिना मात्राकालादिना ह्रस्वदीर्घादिभेदवत् द्रुतादिवृत्तिभेदेनाप्यकारादिव्यक्तीनां भेदात् यस्यांवृत्तौ तपरकरणं, तत् तदन्यवृत्तिमदकारादीनां दीर्घादीनामिव व्यावर्तकं स्यात्, ततश्चवृत्त्यन्तरे ऐसादयो न प्राप्नुवन्तीत्याशङ्किते'वृत्त्यन्तरेऐसादयोवक्तव्या' इतिशङ्किताशयानुरोधेन समाधिमादावभिधाय, वस्तुतो वर्णानां नित्यत्वे वृत्तिभेदेन नाऽकारादिव्यक्तिभेदो ऽनुभूयते, अत ऐसादिवचनं न कार्यमितिबोधयन् 'सिद्धन्त्वव-स्थितावर्णा'इतिसदृष्टान्तं समाध्यन्तरमभ्यधात् भाष्यकारः। तस्यायंभावः—भिन्नभिन्न-पुरुषेण चिराऽचिरगमनशीलेन प्राप्तः क्लृप्तपरिमाणविशेषोऽध्वा यथा न भिद्यते, एकरूप एवाऽऽस्ते, तथा वर्णोपि चिराऽचिरोच्चारणकर्त्रोच्चरितो न भिद्यतेइति। ननु—अध्वनःक्लृप्तपरिमाणविशेषतया न भेदप्रसंगः, वर्णस्तु न तथाविधः अतोयं विषमो दृष्टान्तइति उक्तेऽर्थेऽविश्वासेन पुनःसन्दिहानं प्रति दृष्टान्तान्तरेण उक्तंवर्णनित्यत्वं द्रढयति भाष्यकृत् ए[1]वं तर्हीत्यादिना॥ अत्र स्फोटशब्दः कैयटकौस्तुभोद्योतमञ्जूषापर्या-लोचनायां व्यंग्यपरइतिज्ञायते। शब्दः=अकारादिवर्णः, स्फोटः=व्यंग्यः, वर्णानां नित्यत्वेन तस्यतत्त्वम्। ध्वनिः=वैकृतध्वनिः, वैकृतत्वंच—आलस्यादिप्रयोज्यत्वम्, सच विलंबितादिवृत्तिः, शब्दगुणः=वर्णस्यस्वरूपाभिव्यक्त्यनन्तरं व्यज्यमानतत्तद्वर्ण-

1. एवंतर्हिस्फोटः शब्दः ध्वनिः शब्दगुणः (भा॰)

निष्ठोधर्मः वर्णस्योपकारकः, तस्यतत्वंच—तत्तद्वृत्तिविशिष्टतया वर्णोपलब्धिमात्रहेतुत्वम् । अतःस धर्मो दीर्घादिव्यावर्तकह्रस्वत्वादिवत् वृत्त्यन्तरविशिष्टवर्णव्यावर्तको न भवति । दृष्टान्तंवक्तुं पृच्छतिभाष्ये—कथ[1]मिति ।। भेर्याघाघातवदिति ।। अत्राघातशब्दो भावघञन्तः भेर्या आघातइति षष्ठीसमासः ततस्तृतीयान्ताद्वतिः । स्फोटइतिशेषः । स्फोटः भेरीताडनजन्यशब्दतुल्यो भवतीत्यर्थः । अयंभावः—यथाविंशत्यादिभिन्नभिन्नसंख्याकपदगमनशीलै र्भिन्नैःपुरुषैः श्रूयमाणोभेरीशब्द एकविधएव, तथाऽवर्णोपि वृत्तिभेदेन श्रूयमाण एकविधएव, पुरुषनिष्ठविजातीयगमनस्य भेरीशब्दभेदापादकत्वाभाववत्, वृत्तिभेदस्यापि अकारादिवर्णव्यक्तिभेदापादकत्वाभावः । तथैवशब्दस्वरूपतत्वविदामनुभवात् । अत्रदृष्टान्तदार्ष्टान्तिकशब्दयोरनित्यत्वनित्यत्ववैषम्येपि एकविधोपलब्धिविषयतामात्रेण दृष्टान्तदार्ष्टान्तिकभावइति । भाष्ये दृष्टान्तवाक्यतात्पर्यमाह—त[2]द्यथेति ।। भेर्याघात इति ।। अत्र भेरीमाहन्तीतिकर्मण्यण् । उपपदसमासः । आहत्येति ।। शब्दंश्रृण्वन्निति शेषः । अक्षरार्थःस्पष्टः । भाष्ये—स्फोट[3]इति ।। अस्य दृष्टान्तशेषत्वे 'अथापी'त्यादिः । विजातीयगमनशीलपुरुषेण श्रुतोपीत्यर्थः । स्फोटस्तावानेव = भेरीदण्डसंयोगरूपताडनकालिकपरिमाणविशिष्टएव, भवति=श्रूयमाण इत्यादिः । कथं शब्दस्य तावद्रूपं तथाविधत्वमित्यत आह भाष्ये—ध्व[4]निकृतात्विति ।। पुरुषनिष्ठव्यापारविशेषकृत दृढतरदृढतमसंयोगजन्यध्वनिपदाभिधेयशब्दीयविजातीयधर्मप्रयोज्येत्यर्थः । दृष्टान्तशेषत्वे योजानाक्लेशमसहमानः कैयटःस्फोटस्तावानेवेति दार्ष्टान्तिकोपन्यास इत्याह अत्रकल्पे एवमित्यादिः । एवंभेरीशब्दवत्, स्फोटोपि=अकारादिरपि, तावानेव= उत्पत्तिकालिक (अभिव्यक्तिकालिक) ह्रस्वत्वादिविशिष्टएव, भवति = वर्तते । न तत्र भेदइतिभावः । भाष्येवृत्तिस्तु न भेदकारिणीत्याह—ध्वनीति ।। वृद्धिरिति ।। महत्त्वमित्यर्थः । इदमुपलक्षणमल्पत्वस्यापिति ।। महत्त्वादितु चिराऽचिरकृतोच्चारणजन्याऽनुनिष्पादिध्वनिकृतमिति तात्पर्यम् । नागेशस्तु—'अस्तिभेरीशब्देपि स्फोटो ऽत इदंवाक्यं दृष्टान्तदार्ष्टान्तिकोभयपर'मितिमंजूषोद्योतयोराह । तत्पक्षे यथातथेत्यध्याहृत्य भाष्यवाक्यमावृत्य योजनीयम् । शब्दार्थतत्त्वविदग्रेसरो भाष्यकारः स्वानुभूतिसिद्धमर्थं

1. कथं; भेर्याघातवत् (भा.) 2. तद्यथा भेर्याघाघातो, भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिं शत् । 3. स्फोटस्तावानेव भवति । 4. ध्वनिकृता-त्ववृद्धिः (भा.)

(वर्णनित्यत्वं)अन्तेवासिजनेभ्य उपादिशदिति प्राञ्चो विपश्चितः। उक्तमर्थंसंक्षिपति कारिकया भाष्यकारः—ध्वनिरिति॥ ('ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते। अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः') अस्यार्थः—ध्वनिः=व्यञ्जकः शब्दः, स्फोटः=व्यंग्यःशब्दः, अल्पोमहांश्च=ध्वनिविशेषः इदंद्वयम्=चिराऽचिरोपलब्धिजनकत्वे अल्पत्वमहत्वे। तादृशः = शब्दानांसंबन्धि, ध्वनिः = वैकृतध्वनिः, लक्ष्यते=ज्ञायते,। ध्वनेःशब्दसंबन्धित्वं तदुपलब्धिजनकत्वेन, उक्तद्विविधशब्दसत्त्वे प्रमाणमाह—उभयमिति॥ व्यंग्यत्वंव्यञ्जकत्वेंचेत्युभयम्। स्वभावतः=स्वरूपेणेत्यर्थः। शब्दस्य तादृशस्वभावत्वात् न तत्र प्रमाणान्तरापेक्षा, अथापि—योगिप्रत्यक्षगोचरोभवति इतिभावः। तत्व्यवस्थामाह—केषामिति॥ तदुभयमित्यनुषङ्गः। अयमर्थः—केषांचित्=व्यक्तानांशब्दानां तदुभयं व्यङ्ग्यत्वंव्यञ्जकत्वं च, अव्यक्तानांतु ध्वनिरेवेति। कौस्तुभेपि इदंभाष्यादि इत्थमेवव्याख्यातम्। ततश्च—भाष्ये, कारिकायांच, स्फोटपदं व्यंग्यइत्यर्थकं, स्फुट्यतइतिकर्मणिघञन्तं बाहुलकादिति। अयमत्रनिष्कर्षः—इदंभाष्यं वृत्तिभेदे व्यक्तिभेदइति वर्णानांकार्यतावादिना चोदिते वर्णस्य नित्यत्वात् वृत्तिभेदेपि न भेदइतिव्युत्पादनाय प्रवृत्तं, न तु वाचकस्य विलक्षणस्फोटत्वव्यवस्थापनायेति।

'अथवा उभयतःस्फोटमात्रंनिर्दिश्यते रश्रुतेर्लश्रुतिर्भवति' इति 'एओङ्'सूत्र भाष्यमपि वर्णैकदेशस्य ग्रहणाऽग्रहणविचारे अग्रहणपक्षे कॢप्तमित्यादौ ल्वाऽसिद्धिशङ्कां परिहर्तुं प्रवृत्तमिति न हर्याद्यभिमतस्फोटसिध्यनुकूलम्। तस्य चायमर्थः—उभयत्र 'रः, ल' इतिस्थान्यादेशयोः स्फोटमात्रम्—स्वतन्त्रवर्णवर्णैकदेशोभयसाधारणधर्ममात्रम्, तादृशश्च धर्मो रेफलकारान्यतरतत्सदृशवर्णैकदेशतदुभयवृत्तिः उभयोरेकरूपेण भानप्रयोजकः, सतु न स्वतन्त्रवर्णबोधकपदेन ग्रहणप्रयोजकः। अत एव—'रश्रुतेर्लश्रुतिर्भवती'तिवक्ष्यति। निर्दिश्यते = व्यक्तिद्वारा सूत्रकृता उच्चार्यते। एवमुक्तौ फलितमाह—रश्रुतेरिति॥ रस्य श्रुतिः = श्रवणं यत्र स रश्रुतिःतस्य रश्रुतेः। एवमेव लश्रुतिरित्यस्यापिविग्रहः। अथवा—श्रुतिरितिकर्मणि क्तिन् श्रूयमाणइत्यर्थः। रः श्रुतिः श्रूयमाणो यत्रेतिबहुव्रीहिः, श्रूयमाणरेफाधिकरणं ततश्च—योरेफावभासः, तस्य रेफावभासवतः लकारावभास आदेशोभवतीति विशिष्टार्थः। कृप्, कृपूइत्यनयोरेफावभासवत्त्वात् तयोः कल्पूकॢल्पूइत्यादेशौ क्रमेणभवतः, वर्णतदेकदेशयो रेफावभास प्रयोजकधर्मवत्त्वात्। अतएव—अत्रस्फोटपदं स्फुटतिविकसते शब्दः अस्मादितिअक-

भासजनकधर्मपरमित्याहुः । कैयटस्तु—अन्तर्भूतानन्तर्भूतरेफलकारव्यंग्यसामान्यं स्फोट इत्याह। कौस्तुभेपि-'एओङ्' सूत्रशेषे 'क्रृपोरोल' इत्यत्र स्वतन्त्राऽस्वतन्त्रसाधारणी जातिरनुवाद्ये विधेयेच विवक्षिते'तिवदता दीक्षितेन एतत्कैयटार्थएव विशदीकृतः । नागेशस्तुईदृशजातिसद्भावे मानाभावेन'रजातेरितिवक्तव्ये रश्रुते'रितिवदतो भाष्यकारस्यापि तादृशजातिसद्भावेऽसंमत्यनुमानेनच उभयसाधारण जात्यंगीकारे वर्णैकदेशग्रहणपक्षएव पर्यवसानात् अग्रहणपक्षोपक्रमेण प्रवृत्तस्यास्यभाष्यस्य उपक्रमविरोधम्, 'नरसिंहत्वादिवत् विलक्षणोऽयंवर्ण'इति'रषाभ्या' (पा. सू. ८-४-१)मितिसूत्रकैयटविरोधंच प्रदर्श्य क्वापि वास्तवरेफाभावेन'रेफावभासवतःस्फोटस्य लकारावभासःस्फोटो भवती'ति'रश्रुते'रिति भाष्यस्यार्थं वर्णयति । अत्रेदंवक्तव्यम्—ब्रह्मातिरिक्तस्य वस्तुसामान्यस्य भ्रमप्रकारत्वेन मिथ्यात्वंवदतो नागेशस्य वस्तुसामान्यस्य मतं पाणिन्याद्यनभिमतमिति पुरस्तादसकृदावेदितम्, अतोऽस्त्येवपाणिन्यादिमते वास्तवो रेफादिः। अतएवोक्तं भगवता'रश्रुते'रिति, अन्यथाअवभासस्येत्याद्येव ब्रूयात् । 'मायिकत्वेपि सर्वस्य नाऽसत्त्वं शशविषाणवदिति सारे सारकृता, 'पंचकोशादिवत्तस्मात्'इतिकारिकाव्याख्यानशेषे, 'नच—अलीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोधः, तस्या अलीकत्वाऽसिद्धेर्वक्ष्यमाणत्वादिति, 'पंचकोशादिवत् प्रकृतिप्रत्ययविभागस्यापि मायिकत्वेन, नात्यन्ताऽसच्छशविषाणवदलीकत्व'मिति तत्रैव दर्पणकारेणचोक्तेः, मायिकपदार्थस्याऽसत्त्वाभावेन वर्णतत्समुदायपदादेरसत्त्वाभावात् । एतेन ब्रह्मातिरिक्तं सर्वं मायिकमतोऽसदिति मञ्जूषोक्तमपास्तम् । नच तेन जगदसदिति नोक्तमितिवाच्यम्—शुक्तिरजतादेः भ्रमविषयस्य बहिस्तद्देशेचाऽसत्त्वमुपपाद्य 'प्रपञ्चोप्येवमेव मृगतृष्णादिदृष्टान्तेन प्रपञ्चस्यशास्त्रेवर्णनात् तदुक्तं परमार्थसार'(२९-२४)इति मञ्जूषोक्तेः मृगतृष्णोदकादेश्चासत्त्वस्य पूर्वग्रन्थे उपपादितत्वेन जगतोपि तेनासत्त्वस्योक्तप्रायत्वात् । शशशृङ्गशुक्तिरूप्याद्योरविशेषएव तन्मते । 'सदसद्भिन्नमनिर्वचनीय'मितिमतखण्डनावसरे सदसद्भेदाधिकरणवस्तुनो ऽप्रसिद्धेरिति तेनोक्तत्वात् । यदिशुक्तिरूप्यादेः शशविषाणाद्विशेषः तर्हि भेदद्वयाधिकरणवस्तुनःसत्त्वेन अद्वैतिसंमताऽनिर्वचनीयलक्षणस्य तत्कृतखण्डनमसंगतं स्यात् । शुक्तिरजतादिस्थलइव, अत्रबाधज्ञानानुदयात् अवभासेत्युक्तिरयुक्ता । नचैवं ग्रहणपक्षएवान्तर्भवतीति उपक्रमविरोधस्तदवस्थइतिवाच्यम्—ग्रहणपक्षे तत्त्वबुद्धिः, अग्रहणपक्षे तत्सदृशत्वबुद्धिरिति भेदात् । मुख्येसंभवति विना मानं सदृशस्य ग्रहणं न स्यात् अतः'क्रृपोरोल'इत्यत्र न

मुख्यव्यक्तिनिर्देशमात्रे सूत्रकृतस्तात्पर्यम्, किंतु—मुख्यव्यक्तितत्सदृशव्यक्त्युभयोर्ग्राहकधर्मनिर्देशे, अत उभयोर्ग्रहणं भवतीति भाष्याशयः।

यदिवर्णवत्ता पदानां न स्यात् रेखागवयन्यायेन साधुत्वानुशासकंशास्त्रं शब्दानां नित्यत्वपक्षे इत्यभियुक्तव्यवहारासंगतिः। रेखागतगवयगतसंस्थानसंनिवेशेन गवयोबोध्यते यथा, तथा नित्यशब्दगतगकारादिवर्णव्यंजकरेखाविन्यासेन नित्यो गवादिशब्दो बोध्यत इतिहि तदर्थः। इदंज्ञेयम्--अस्तेर्लोटि एधीतिरूपे रेखास्थानीयाऽसधातुगतवर्णादर्शनात् तेनन्यायेन शास्त्रमनुशासकमित्येतत् न युक्तमिति'आद्यन्तौ'वितिसूत्रोद्द्योतो नयुक्तः, प्रक्रियावाक्ये शास्त्रप्रवृत्त्युत्तरं निष्पन्नम् एधीतिरेखास्थानीयं तेनबोध्यतेएधीत्यर्थवाचकः शब्दोनित्यः तत्ररेखास्थानीयगतवर्णोपलम्भात् तेनन्यायेन शास्त्रमनुशासकमितियुक्तमिति। नच—नृत्वसिंहत्वानाक्रान्तनृसिंहत्ववत् निरवयवं वर्णान्तरं तदितिवाच्यम्—वर्णान्तरत्वेपि निरवयवत्वे मानाभावात्। नहि नृसिंहस्य नरत्वाद्यनवच्छिन्नत्वेपि निरवयवत्वमस्ति।

तस्यादितउदात्तमर्धह्रस्वम्, (पा. सू. १-२-) एचोऽप्रगृह्यस्यादूराद्धूतेपूर्वस्याऽर्धस्योत्तरस्येदुतौ (पा. सू. ८-२-१०७)इतिप्लुतादिकार्यविशेषंच विदधता सूत्रकृता, भाष्यकृताच'ऐचोश्चोत्तरभूयस्त्वात्'इतिवदता, वर्णैकदेशानां वर्णग्रहणेन ग्रहणाऽग्रहणविचारं कृतवता वर्णानां सावयवत्वाभ्युपगमात्। अत एतेषांनिरवयवत्त्वम्, तत्समुदाये समुदायत्वबुद्धेरतात्विकत्वम्, तत्र अवयवसद्भावाश्रयणंच भ्रांतिमूलमित्यादिनिरूपणं वर्णेष्ववयवानही'तिदृष्टान्तेन'पदे नवर्णा विद्यन्ते वाक्येष्ववयवानच। वाक्यात्पदानामत्यन्तं प्रविवेको नकश्चने'तिवाक्यपदीयोक्तं पदवाक्ययो र्निरवयवत्त्वंच निर्मूलम्। 'नित्येषुशब्देषु' इत्यादिभाष्ये पदवाक्यरूपशब्देषु वर्णैर्भवितव्यमित्युक्तेः तेषांसावयवत्वस्य भाष्यकृत्संमतत्वात्। नच भाष्यंव्यञ्जकविषयं वाक्यपदीयंतु स्फोटविषयमितिवाच्यम्—अतिरिक्तस्फोटस्वरूपस्यैव भाष्यानारूढत्वात्। भाष्याद्यनुग्रहरहितार्थप्रतिपादकवाक्यपदीयं कथं पाणिनीयैरुपादेयंस्यात्। नच सावयवत्वे जन्यत्वंस्यादिति न नित्यत्वंशब्दानामितिवाच्यम्, त्रिगुणात्मकमूलप्रकृतेः सावयवाया जन्यत्वादर्शनात्। शब्दानां नित्यत्वपक्षे समुदायाऽप्रसिद्धिचोद्यस्यापि नावसरः।

किंच—पदान्तस्य (पा. ८-४-३७) सात्पदाद्योः (पा. सू. ८-३-१११) षःप्रत्ययस्य (पा. १-३-६) इणःषीध्वंलुङ्लिटांधोंगात् (पा. सू. ८-३-७८) इत्यादि-

भिः पदावयवप्रत्ययावयवनिबन्धनानि कार्याणि, अलुगुत्तरपदे (पा. ६-३-१) उत्तरपदस्य (पा. सू. ७-३-) एकाजुत्तरपदेणः (पा. सू. ८-४) पूर्वपदात् (८-४) हृद्भगसिन्ध्वन्ते-पूर्वपदस्यच (पा. ७-३-१९) तद्धितार्थोत्तरपदसमाहारेच" (२-१-५१) इत्यादिभिः समासे पूर्वोत्तरपदनिबन्धनकार्याणिच विदधता सूत्रकृता पदवाक्ययोरपि सावयवत्वस्य बोधितत्वेन तयोर्निरवयवत्वोक्तिः शास्त्रप्रवर्तकाचार्यानभिमतैव। अतःसा प्रामाणिकैर्ना-दर्तव्या। किंच—वर्णादीनां निरवयवत्वे नास्ति प्राचामाचार्याणां वचनानुग्रहः। अस्तिच तेषांसावयवत्वे 'नित्येषुशब्देष्वि'तिभाष्यानुग्रहः। तत्रशब्देष्वित्यस्य वर्णपदवाक्यरूप-शब्देष्वित्यर्थः। एतेन—यदुक्तंसमर्थसूत्रेकैयटेन'तत्वतो निरवयवान्येव केवलमसत्य-प्रक्रियाश्रयेणाऽन्वाख्यायन्ते'इति तदपास्तम्, 'नित्येषु शब्देषुवर्णैर्भवितव्य'मिति-भाष्योक्ते नित्यशब्दानां सावयवत्वसिद्धेः, असत्यार्थानुशासके शास्त्रत्वस्यैव दुर्वचत्वात्। 'तत्त्वविषयकयथार्थज्ञानजनकशब्दसमुदायो हि शास्त्रमित्याचक्षतेऽभिज्ञाः। किंच—असत्यस्योपदेशे तत्रैव वर्तमानाः सत्यं कदापि न भजेरन्। अभिमतनगरं यियासूनां कापथोपदेशे तत्रैवभ्रमन्तो यथा नगरंकदापि न प्राप्नुवन्ति। किंच—समर्थसूत्रे शब्दानां निरवयवत्वं नैरर्थक्यंच निराचक्रे नागेशः केचित्तुपक्षोपन्यासमुखेन, 'उप-लभ्यमानाऽवयवानां नैरर्थक्ये, समुदायस्यनिरवयवत्वेच मानाभावः, नित्यत्वंतु अनि-ष्पाद्यत्वमात्रेण वक्तुंशक्य'मिति ग्रन्थेन। एतेन—नित्यत्वसावयवत्वे परस्परपरिहारेणैव वर्तेते इतिनियमो नेति बोधितम्।

अस्ति स्फोटपदं भाष्यं एओङ्तपरसूत्रयोः।
आद्येतु तत्पदं धर्मपरं तत्सूत्रभाष्यतः॥ १॥
द्वितीये स्फोटभिन्नस्य नित्यशब्दस्य वाचकम्।
इति निर्णीयते तस्मा न्मञ्जूषोक्तं न युज्यते॥ २॥
अतो भाष्यं ब्रह्मसमस्फोटसिद्धौ न साधकम्।
इतिभाष्यविदां पादपद्म माश्रित्य भाषितम्॥ ३॥



## (३७ स्फोटे भागवतसंमतिनिरासः)

ननु—भगवता व्यासेन भागवते 'शृणोति य इमं स्फोटं सुप्ते श्रोत्रेच शून्य-

दृक् । येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः' (१२-६-५) इति प्रणवस्य स्फोटत्वोक्तेः व्यासादिमहर्षिसंमतः स्फोट इतिचेत्, उच्यते—स्फुटत्यर्थो ऽस्मादनेन वेति अपादाने, करणेवा घञि निष्पन्नः स्फोटशब्दो वाचकपर्यायः । यद्वा—पूर्वं प्रसक्तस्य वर्णत्रयात्मकस्य प्रणवस्य 'इमंस्फोट'मित्यनुवादात् प्रणवपर्यायः सः । यद्वा—'येनवाग्व्यज्यत'इत्युत्तरार्धे वक्ष्यमाणतया वेदाद्यभिव्यंजकत्वेन प्रणवस्य स्फोटत्वोक्तिः, अतस्तत्रस्फोटपदं व्यञ्जकमित्यर्थकम् । श्लोकार्थस्तु—यः परमात्मा, श्रोत्रेसुप्ते—श्रोत्रेन्द्रियेनिर्व्यापारे, शून्यदृक्—शून्येपि सर्वेन्द्रियव्यापाराभावेपि दृक् ज्ञानी, इमंस्फोटम्—प्रणवरूपं स्ववाचकंशब्दम्, शृणोति । प्रणवः कीदृश इत्यतआह—येनेति ॥ येन=प्रणवेन, वाक् = सर्ववेदाः, यस्य प्रणवस्य, आत्मनआकाशे = परमात्मनोहृदयाकाशे, इतिश्रीधराचार्यः । परमात्मैवैतं शृणोति नान्यइति एतद्भावः 'सुप्तःश्रोतेव शून्यदृक्' इतिसंहितापाठ इतिकृत्वा, सुप्तः = सुषुप्त्यवस्थामापन्नः, शून्यदृक् = शून्यः परमात्मा, तंपश्यतीति तथा, ब्रह्माऽपरोक्षी योब्रह्मज्ञानी, स सुप्तःसन्, श्रोतेव = परमात्मेव, स्फोटं शृणोति, इतिविजयध्वजाचार्यः । स्फोटस्यश्रोता परमात्मा ब्रह्मज्ञानीचेतिभावः ।

इदमत्रज्ञेयम्—प्रथमस्कन्धेचतुर्थेऽध्याये संग्रहेणनिरूपितं वेदाद्यधिगतिक्रमम्, 'पैलादिभिर्व्यासशिष्यै र्वेदाचार्यै र्महात्मभिः । वेदा वै कतिधा व्यस्ता एतत्सौम्याऽभिधेहि नः'(भाग. १२-६-१) इत्यादिना विस्तरेणनिरूपयता शब्दप्रपञ्चसृष्टिं करवाणीति संकल्पवतो भगवतोनारायणस्य हृदयाकाशे कश्चिन्नादो घण्टानिनादसंनिभः इच्छामात्रेण प्रथमं प्रादुरभूत् । तस्माद्वेदादिसर्वविद्याबीजभूतः प्रणवो ऽभिव्यनक्तिस । तस्माच्चाक्षरसमाम्नायाद्यभिव्यक्तिद्वारा वेदादिसर्वमभिव्यानक्, सच प्रणवो नारायणस्य वाचकः 'येनवाग्व्यज्यते, स्वधाम्नोवाचकः साक्षात् ब्रह्मणः परमात्मन'इत्यादिनिरूपितम् । नच 'परमेष्ठिन' इतितत्रोक्तं तेनच 'परमेष्ठीपितामह'इतिकोशात् चतुर्मुखस्यैवग्रहणमितिवाच्यम्—परमेष्ठिपदस्य परमात्मवाचकत्वेन सर्वस्यब्रह्मकारणकत्वसिद्धान्तेनच परब्रह्मग्रहणस्यैवोचितत्वात् । परमेस्थाने तिष्ठतीति परमेष्ठी, किन्औणादिकः । नच 'वृत्तिनिरोधाद्विभाव्यत' इतिभगवतैव पूर्वमुक्तत्वेन सर्वप्रत्यक्षगोचरःस इतिवाच्यम्—योगिदृष्ट्या तथोक्तेः । योगिनोहि योगबलात् ब्रह्मेव तमपि प्रत्यक्षीकर्तुं समर्थाः । यद्वा यथा अस्माभिः कर्णपुटे पिहिते नादविशेषो ज्ञायते, तथा प्रणवव्यंजकोनादो विभाव्यते इतिदृष्टान्तोक्तिःअलौकिकं लोकदृष्टान्तेन बोधनीय'मितिसर्वतान्त्रिकाणां समयात् ।

किंच भागवतपर्यालोचनायां सर्वप्रत्यक्षागोचरनादाभिव्यङ्ग्यत्वं प्रणवाख्य-स्फोटस्य प्रतीयते, वैयाकरणंमन्यैस्तु परश्रोत्रग्राह्यवैखरीनादव्यंग्यतोच्यते, अतोवैया-करणोक्तेः भागवतस्यच भिन्नविषयत्वेन नेदंभागवतं तेषामनुकूलम् । एतेन 'धार्यन्ते यै स्त्रयो भावा गुणानामर्थवृत्तयः' इतिसत्त्वादिगुणादीनां त्रयाणांभावानां(रूपप्रपंचस्य) सृष्टिकथनात् नामरूपोभयप्रपंचोपादानत्वं स्फोटस्य भगवताव्यासेनोक्तं, तदनुसारेण अस्माभिरपि तथोक्तमित्यपास्तम् । भगवदुक्तप्रणवाख्यस्फोटस्य भवदभिमतस्फोटस्यच भिन्नत्वात् ।

किंच—परापश्यन्तीमध्यमावैखरीभेदेन चतुर्विधावस्थाविशिष्टनादेषु पराख्य-नादस्य शब्दब्रह्मत्वं शब्दार्थोभयरूपप्रपञ्चोपादानत्वेनेति 'क्रियाशक्तिप्रधानायाः शब्द-शब्दार्थकारणम् प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माऽभवत्परे' ति वचनबलात् तेन सि-द्धान्तितत्वेन, वैखरीव्यंग्यस्यस्फोटस्य कार्यरूपतया, कारणत्वायोगात्तस्य ब्रह्मत्वानुक्तेश्च ।

नच—'एकस्यैवस्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोभयोपादनत्वेनोभयोरपि तत्कार्ययोरुभयरूपत्वात्' इतिस्फोटस्य कारणत्वमुक्तं नागेशेनेतिवाच्यम्—तत्र स्फोटपदस्य पराख्यवाचक इतिसांप्रदायिकैर्व्याख्यानात् । अतएव 'क्रियाशक्तिप्रधानस्ये' तिप्रमाणो-दाहरणं संगच्छते । प्रमाणे परावाचएव शब्दब्रह्मत्वोक्तेः । किंच-'गुणानामर्थवृत्तय' इत्यत्र तिसृणां व्याहृतीनामभिव्यक्तेरभिधानात् । नामप्रपंचनिरूपणस्योपक्रमेण उत्तरत्रच वेदादिनामप्रपञ्चनिरूपणदर्शनेनच मध्ये रूपप्रपंचसृष्टिनिरूपणं प्रक्रमविरुद्धम् । यद्यत्र रूपसृष्टिरभिमता स्यात् तर्हि आदावन्तेवा तां निरूपयेत् । आत्मन आकाशः संभूतः, (तै. उ. २- ) तदैक्षतबहुस्यां प्रजायेयेति तत्तेजोसृजत (छा. ६-२-३) अपएव ससर्जाऽऽदौ, आपोनाराइतिप्रोक्ताः' इत्यादिश्रुतिस्मृत्यादिभी रूपप्रपञ्चसृष्टिपराभिः आकाशादिरूपप्रपंचस्य शब्दात्सृष्ट्यनभिधानाच्च, प्रणवस्यच्चरूपप्रपंञ्चकारणत्वायोगात् । यत्रक्वापिप्रणवात् रूपप्रपंचसृष्टिःश्रूयेत, स्मर्येतवा, तत्र प्रणववाच्यपरमात्मनएव सृष्टि-रुच्यत इति वेदितव्यम् ।

नच—'शब्दइतिचेन्नाऽतः प्रभवात्प्रत्यक्षानुमानाभ्याम्' (ब. सू. १-३-२८) इतिसूत्रेण भगवान् बादरायणो रूपप्रपंचस्यापि शब्दप्रभवत्वमभिधत्त इतिस्फोटस्योक्तं जगत्कारणत्वं युक्तमितिवाच्यम्-तत्र 'अतःप्रभवा' दित्यस्यशब्दादिन्द्राद्युत्पत्तेरित्यक्षरार्थेऽपि

शब्दस्य स्रक्ष्यमाणपदार्थाकृतिस्मारकत्वेन कारणत्वम्, नतु—विवर्तोपादानत्वेन परिणाम्युपादानत्वेन वेति तात्पर्यात् । प्रजापतिः स्रष्टुकामः प्रथमंवैदिकानिन्द्रादीन् शब्दाननुसंदधानः तद्बोधिताकृतिविशेषान् स्मारंस्मारं तदनुगताकारविशेषविशिष्टानिन्द्रादीन् सृजतीति शब्दस्य सहकारिकारणत्वमेव सूत्रकृता प्राबोधि, अतएव='जन्माद्यस्ययत' (ब्र. सू. १-१-२) इत्यादिना सूत्रकृता सर्वस्य कृतब्रह्मकारणकत्वसिद्धान्तव्याकोपो न, स्पष्टंचेदंशाङ्करे'शब्दइतिचेन्ने'तिसूत्रभाष्ये । नच—स्फोटस्यापि ब्रह्मकार्यत्वात् ब्रह्मत्वेन नोक्तसिद्धान्तविरोधोऽस्माकमिति वाच्यम्, ब्रह्मकार्यसामान्यस्य ब्रह्मत्वे तद्वत्कारणत्वेच मानाभावेन स्फोटस्य प्रपञ्चकारणत्वाऽसिद्धेः । नच 'तदनन्यत्व' मितिकारणानन्यत्वं कार्यस्योक्तमितिवाच्यम्—अविनाभावेनैवानन्यत्वं नतु स्वरूपतइति पूर्वमेव समाहितत्वेन स्फोटस्य ब्रह्मत्वायोगात् ।

हर्यादिसंमतस्फोटादन्यो भागवतोदितः ।
तस्मान्न मानं तत्सत्त्वे भवेद्भागवतस्मृतिः ॥



## (३८ स्फोटविषये नैयायिकसंमतिनिरासः)

नैयायिकास्तावत् अस्ति पदानां पदार्थेषु संकेतः(शक्तिः) नतु वाक्यस्यवाक्यार्थे, सतु[1] पदान्तरसमभिव्याहाररूपाकांक्षया अपूर्वो वाक्याऽशक्त्यैवोत्पद्यते । वैयाकरणंमन्यैर्निरूपितो विलक्षणस्वरूपः स्फोटस्तु नास्त्येवेति वदन्तीति विदुषां विदितम् ।

मञ्जूषाकृत्तु—प्रथमपरिच्छेदे शक्तिवादे 'संबन्धः पदवाक्येच तदाह न्यायभाष्यकारः'समयज्ञानार्थंचे'त्यादिना'वाक्यस्फोटो नैयायिकाऽसंमत इति परास्त'मित्यन्तेन ग्रंथेन तद्भाष्योपन्यासपूर्वं पदेष्विव वाक्येष्वपि ऐश्वरसमय इतिस्पष्टमेवोक्तमिति भाष्याभिप्रायंवर्णयित्वा नैयायिकैरपि वाक्येशक्तिः, स्फोटश्चाऽङ्गीक्रियतइति प्रतिपादयन् नैयायिकाअपि स्वानुकूला इतिबोधनाय तदनभिमतं प्रमेयं तत्तात्पर्यविषय इति ब्रूते ।

तत्र'समयज्ञानार्थमिदं पदलक्षणाया वाचो ऽन्वाख्यानं व्याकरणम्, वाक्यलक्षणाया वाचोऽर्थलक्षण'मितिभाष्यम, अनेन--तन्मते वाक्यशक्तिः, स्फोटश्चास्तीति शब्दतोऽर्थतोवा कथं लभ्य इति विचक्षणैर्विचार्यम् । किंच— तत्र(द्वि. अ. प्र.-

1. वाक्यार्थस्तु ।

आ. ५६ सू.) 'समयपालनार्थं'........अथो लक्षणम्' इतिपाठो दृश्यते, तत्र व्याकरणं पदसाधुत्वबोधकम्, अर्थः = तत्समूहः, लक्षणम् = भेदकम्, वाक्याभासात् साधुवाक्यस्य व्यावर्तकं अबाधितोऽर्थो वाक्यसाधुत्वबोधक इतितदर्थं तद्व्याख्यातार आहुः। किंचस्फोटस्य 'एतेनतावद्वर्णाभिव्यङ्ग्यः पदस्फोटोपिनिरस्तः, तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेनतद्व्यञ्जकेनैवोपपत्तेरिति' इतिमुक्तावल्यांशब्दखण्डे दूषितत्वेन, न्यायमञ्जर्यां (६ आ.) न्यायसूत्रभाष्यवार्तिकतात्पर्यटीकादितात्पर्यं निरूपयता जयन्तभट्टेन 'निर्मूलोऽयंवादोगन्धर्वनगरसोदर' इति अतिरिक्तस्फोटवादस्य दूषितत्वेनच नैयायिकसंमतः स्फोट इति कथं संगच्छते। इदंचतदनुक्ततदनभिमतार्थाभिधानमिति विदाङ्कुरुत। एतेन–'अर्थलक्षण' मित्येव पाठमवलम्ब्य व्याकरणपदस्यात्रापि संबन्धः। ततश्च वाक्यरूपवाचः अर्थबोधजनकताबोधकमित्यादिव्याख्यानं न्यायभाष्य तद्व्याख्यानानवलोकनमूलकमेव। एतेन—नागेशग्रंथपाठमप्यन्यथाप्रकल्प्य स्वैरं ग्रंथार्थं वक्ता निरङ्कुश इति स्पष्टं जानन्तु।

स्फोटो गन्धर्वनगरसोदरस्त्विति तार्किकैः।
दूषितः स कथं तेषां मतः स्यादिति चिन्त्यताम् ॥ १ ॥



## (३९ स्फोटस्य ब्रह्मत्वादिनिरासः)

वर्णपदवाक्यभेदेन स्फोटस्तावत् त्रिविधः, जातिव्यक्तिभेदेन ते पुनर्द्विविधाः इतिषोढा संपन्नाः, अखण्डपदस्फोटोऽखण्डवाक्यस्फोटइति द्वैविध्येन अष्टौ। तत्र 'वाक्यस्फोटो ऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः' इतिह्युक्तेः, वाक्यस्फोटो मुख्यः, तत्रापि जातिस्फोटः परममुख्यः 'संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वेशब्दा व्यवस्थिताः॥ तां प्रातिपदिकार्थं च धात्वर्थंच प्रचक्षते। सा नित्या सा महानात्मा तामाहुस्त्वतलादयः' इतिहरिकारिकार्थसंग्राहक 'सत्याऽसत्यौतु यौ भागौ प्रतिभावं व्यवस्थितौ। सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः' (७०) इतिकारिकया निरूपयन् दीक्षितः—'प्रतिवस्तु काचिदनुगतासत्ता जातिपदवाच्या ऽस्ति, साच सत्ता ब्रह्मैव 'आत्मैवेदंसर्व' मित्युक्तेः, सत्तापर्यायः सत्यशब्दः, जातिपदवाच्या सत्ता शब्देऽर्थेच वर्तते, तत्र शब्दनिष्ठा वाचिका, अर्थनिष्ठातु वाच्येत्येकस्यैव वाच्यत्वं

वाचकत्वंच लाघवात्, तदुक्तम्—'शक्यत्व इव शक्तत्वे जाते लाघवमीक्ष्यताम्। औपाधिको वा भेदोऽस्ति वर्णानां तारमन्दवत्' इति, एवंच--तत्तद्व्यक्त्यवच्छिन्नं ब्रह्मैव जातिः ब्रह्मातिरिक्तंच सद्वस्तुनास्तीति आत्मैकत्वसिद्धिः, ततश्च—शब्दविचारे प्रवृत्तस्य औपनिषदे ब्रह्मणि व्युत्पत्तिरुपजायते 'वराटिकान्वेषणाय प्रवृत्तस्य चिन्तामणिलाभव' दिति व्याकरणशास्त्राध्ययनस्य परमंप्रयोजनं कौस्तुभे प्रथमान्हिकेऽवर्णयत्।

अत्रवदन्ति—ईदृशमहाप्रयोजनं शब्दविचारं परिहाय, शङ्कराचार्यादयो महान्तो व्याससूत्रं व्याचक्षाणा ब्रह्मज्ञानं मुक्तिसाधनमिति कुतो व्यवस्थापयामासुरिति प्रथमतो विमर्शनीयम्। तेषान्त्वयमाशयः--अधीतवेदवेदाङ्गाः कर्मादिना विधूतान्तःकरणदोषाः शुद्धान्तःकरणा 'आत्मावाअरे' इत्यादिश्रुतिचोदितात्मोपासनया ब्रह्मज्ञानवन्तः प्राप्तपरमात्मानुग्रहाः त्यक्तदेहा मुक्ता भवन्ति नाऽन्योपायेनेति।

ननु—द्वेब्रह्मणी वेदितव्ये शब्दब्रह्म परंचयत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इतिशब्दविचारे प्रवृत्तस्य ब्रह्माधिगमरूपमोक्षलाभाऽभिधानात् युक्तंकौस्तुभोक्तमितिचेत्, न--तत्रश्रुतौवा, स्मृतौवा, शब्दब्रह्मेत्यस्य वेदेत्यर्थेन, वेदार्थविचारासक्तस्य ब्रह्मप्राप्तिरिति तत्तात्पर्यात्। एतेन स्फोटसद्भावे वचनमिदंमानमितिनिरस्तम्। नच—भाष्यकृता शास्त्रानुषङ्गिकप्रयोजननिरूपणावसरे 'चत्वारिशृङ्गाः, 'सक्तुमिवे'-त्याभ्यां साधुशब्दज्ञानस्य महादेवसाम्यं, ब्रह्मसायुज्यंच, भवतीतिनिरूपितत्वेन मोक्षः फलं शब्दविचारस्येत्युक्तं भवति, साम्यसायुज्ययोरेव मोक्षत्वादितिवाच्यम्—योगे 'तस्यवाचकः प्रणवः, तदर्थचिन्तनम्' इतिसूत्राभ्यामीश्वरस्य वाचकःप्रणवः, प्रणवप्रतिपाद्यगुणविशिष्टत्वेन ईश्वरचिन्तनं मुक्तिसाधनमिति प्रतिपादयतःपतञ्जलेः शब्दज्ञानेन मोक्ष इत्यत्र न तात्पर्यम्, किंतु—शब्दज्ञानेन निर्मलचित्तत्वरूपसाम्यम्, ब्रह्मज्ञानसाधनवेदार्थविचारसामर्थ्यरूपसंपच्च भवतीति श्रुतितात्पर्यमिति भाष्याशयात्। अतएव-अधीतसाङ्गसर्ववेदादेर्नारदस्य श्वेतकेतोश्च 'नामविद्वेवास्मिन्नात्मवित्' (छा. ७-२ ) इति आत्मज्ञानाभावश्रवणम्, भगवांस्त्वेव मे तत् ब्रवीतु' (छा. ६-१-४) इत्यात्मोपदेश प्रार्थनंचसंगच्छते। यदि शब्दज्ञानादेवात्मज्ञानसिद्धिः, तर्हि—तयोरधीतव्याकरणत्वेन शब्दविचारादेव ब्रह्मज्ञानसिद्धौ, श्रुतौ तदभावश्रवणं, तत्प्रार्थनंचासंगतं स्यात्। अत एव—भाष्ये व्याकरणस्य अङ्गत्वमेवोक्तं 'प्रधानमङ्गेषु व्याकरण' मिति, वेदार्थविचारस्य

साधकमिति तदर्थः । अतएवच व्याकरणस्याऽपरविद्यात्वमुक्त्वा परब्रह्मविद्या अन्येति 'द्वेविद्ये वेदितव्ये पराचैवापराचे'(१)त्यादिनोक्तं मुण्डके । अतएवच'अइउणा'दीनां माहेश्वरसूत्राणां ब्रह्मपरतया व्याख्यानेन सनकादीनां ब्रह्मज्ञानोत्पादनं'सफलम्-अन्यथा माहेश्वरसूत्रमूलकपाणिनीयव्याकरणेन शब्दविचारादेव तेषां ब्रह्मज्ञानसंभवे तद्व्यर्थंस्यात् । किंच–स्फोटस्यब्रह्मत्वमित्यपि न युज्यते, स्फोटवादिनोमते स्फोटातिरिक्तवस्तुनोऽभावेन असत्त्वेनच ब्रह्म नास्तीतिसिध्द्या निरीश्वरवादान्तर्भावः, स्फोटस्यब्रह्मत्वासिद्धिः, ब्रह्मवादिमतेतु ब्रह्मान्यस्य स्फोटस्याप्यसत्त्वापत्त्या न तत्सिद्धिः । ततश्च–'आत्मैवेदंसर्वं'मितिसर्वस्यात्मत्वात् स्फोटस्यापि तत्त्वमिति चिन्त्यम् । एतेन-ईश्वरेतु न किंचिन्निरूपितो भेदः सर्वरूपत्वात्तस्येतिमञ्जूषायामनूदितग्रन्थोक्तमपि चिन्त्यम् । ईश्वरस्यसर्वरूपत्वे मानाभावात् । नच—स्फोटएवब्रह्मेतिमतमिति वाच्यम्, तथार्थकश्रुत्यादिप्रमाणाभावात् । भाष्यादौ तथानुक्तेश्च । 'नहिनहिरक्षतिडुकृञ्करणे'न शब्दशास्त्रादिभिस्तस्य मोक्षः, 'शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः' (भाग. ११-११-१८) इत्यादिभिः शब्दविचारमात्ररतस्य ब्रह्माधिगममोक्षतत्साधन ज्ञानाभावस्याऽभियुक्तैर्निर्धारितत्वेन कौस्तुभाद्युक्तं नाद्रियन्ते परापरतत्त्ववेदिनो भाष्यविदश्च ।

स्फोटएव विप्रतिपन्नो बहुभिरनङ्गीकारात् । कैयटस्तु, 'क्वचित् वर्णस्फोटमाह क्वचित् पदस्फोटमाह, क्वचित्वाक्यस्फोटमाह, क्वचित् जातिस्फोटमाहे'त्येवं वदन् भाष्यस्य स्फोटे तात्पर्यमाह । तथातात्पर्यवर्णनं च तत्तद्भाष्याक्षराननुगुणमेव । किंच–स्फोटस्वरूपं, तस्यवाचकत्वम्, तस्यब्रह्मस्वरूपत्वंच यदिभाष्यकृदभिमतंभवेत्, तदा 'किंपुनरिमेवर्णा अर्थवन्तः, आहोस्वित् अनर्थकाः, किंपुनर्नित्यः शब्दः, अहोस्वित्कार्य' इत्यादिना यथा वर्णादीनामर्थवत्त्वादिकं सविचारं व्यवस्थापितवान् भाष्यकारः तथा—'किंपुनर्ध्वनिर्वाचकः, अथस्फोट'इतिप्रक्रम्य, स्फोटस्य वाचकत्वादिकं सर्वं व्यवस्थाप्य तज्ज्ञानादपवर्ग इत्येव व्यवस्थपयेत् । तथा न व्यवस्थापयामास । तेन मन्यापहे कौस्तुभाद्युक्तं न भाष्यादिसंमतमिति ।

यदत्रमते 'अद्वैतिनांमते जातेरनित्यत्वेन, निराश्रयजातिसद्भावे मानाभावाच्च, अपागात् यदग्नेरग्नित्वमिति जातेर्नाशश्रवणाच्चे'ति नागेशोक्तदूषणम्, तत्सर्वं जातिस्फोटवादिन स्तस्यमतेऽपि, समानम् । किंच-अद्वैतिनांमते जातेरनित्यत्वे अस्माकं काहानिः,

भाष्यकृता जातेरनित्यत्वानुक्तेः 'व्यक्तिषूत्पाद्यमानास्वपि आकृतीनां नित्यत्वात न गवादिशब्देषु कश्चिद्विरोधः'इति'शब्दइतिचेन्न'(ब्र. सू. १-३-२७)तिसूत्रे शङ्कराचार्यै र्जातेर्नित्यत्वोक्ते रद्वैतिनांमते जातेरनित्यत्वा'दित्युक्तिरयुक्ता, जातिस्फोटवादिनां प्राचांमते जातेर्ब्रह्मस्वरूपत्वेन नित्यत्वात् तस्य निवृत्त्ययोगात् 'अपागा'(छा. ६-४)दितिश्रुत्युक्ता निवृत्तिः. न जातेः, किंतु—अ[1]ग्निपदव्यवहार्यत्वस्य। अतः नव्योक्तदूषणं न सम्यगिति।

स्फोटो ब्रह्म ततस्तस्य विचाराद्ब्रह्मदर्शनम्।
मोक्षं चाप्नोति पुमा निति कौस्तुभकृन्मतम्॥ १॥
न युक्तं तेन तत्रार्थे नोदाहारि मुनेर्वचः।
विरुद्धं ब्रह्ममीमांसा परश्रुत्यादिभिर्यतः॥ २॥
अतो ब्रह्मविदां नैत त्संमतं पाणिनेरपि।
इतिनिश्चीयते ब्रह्म विचारचतुरैर्जनैः॥ ३॥

## (४० नागेशसंमतजातिस्फोटनिरासः)

जातिस्फोटएव परमसिद्धान्तः, जातिस्तु अनुगताकारप्रतीतिजनको धर्मः, तस्य तल्लक्षणत्वोपपत्तये अनुगतशक्तिग्रहसिद्धयेच तत्तत्कालतत्तद्वर्णानुरागरूपभेदेन स्फोटानन्त्यम्, आत्मैकत्ववादिनामात्मत्वस्य जातित्वसिद्धये उपाधिवशादात्मनानात्ववत् तद्वृत्तित्वेन तस्य जातित्वम्, तस्योपाध्यवच्छिन्नत्वे व्यक्तिस्फोटत्वम्, उपाध्युपलक्षितत्वे जातिस्फोटत्व'मिति नागेशः। अत्रेदंवक्तव्यम्—महता प्रयत्नेन साधितःस्फोटः, किं जातिः, उतान्यः। आद्ये अद्वैतिनांमते जातेरनित्यत्वेन, निराश्रयजातिसद्भावे मानाभावाच्चेत्यादि परंप्रति तदुक्तदूषणं तन्मतेप्यापततति। अन्त्येतु जातिस्फोटइति सिद्धान्तभङ्गः। अद्वैतिनामात्मभेदव'दिति दृष्टान्तोऽसंगतः, तेषांमते आत्मनो द्रव्यत्वमिति तत्रजातेरस्तिता युक्ता, नागेशमतसिद्धस्य स्फोटस्य तु जातित्वेन तत्रजातेरङ्गीकारायोगात्। 'जातौ जातेरनङ्गीकारा'दितितान्त्रिकन्यायात्। किंच—लोके बोध्यवृत्तिनाऽनुगताकारधर्मेण तथाप्रतीतिरित्यनुभवः नतु बोधकवृत्तिताद्दशधर्मेण, अतऔपाधिकानन्तस्फोटकल्पनाप्रयासो विफलएव। किंच—उपाधिसंबन्धस्य सार्वकालिकत्वे स्फोटभेदस्य निरुक्तधर्माश्रयत्वस्यच सार्वकालिकत्वेन, स्फोटस्यैकत्वाखण्डत्वभङ्गः,

1. छान्दोग्यशाङ्करभाष्ये "अग्निशब्दश्चापगतः" इत्युक्तेः।

कादाचित्कत्वे निरुक्तधर्मरूपजातेराश्रयासिद्धिः । किंच—एवंकल्पने स्फोटनिष्ठजातेरेवाऽर्थवत्तालाभेन वर्णाद्यतिरिक्ततया साधितस्य वैखरीव्यङ्ग्यस्य मध्यमनादस्य स्फोटस्य नार्थवत्ता सिध्यतीति स्फोटोऽर्थवानिति पूर्वोक्तिश्चिन्त्यास्यात् । नच—तस्यैवस्फोटस्य औपाधिकोभेदः भिन्नव्यक्तिवृत्तित्वंचेति जातित्वमिति नोक्तदोषावकाश इतिवाच्यम्-एवंकल्पने भाष्याद्यनुग्रहाभावात्, कल्पितानामसत्त्वं वदतोमते व्यक्तिभेदस्य तद्वृत्तित्वस्यचासत्त्वेन उक्तजात्यसिद्धेः। स्फोटातिरिक्तस्य सर्वस्यमिथ्यात्वेन(असत्त्वेन) स्फोटानन्त्यसंपादकसामग्रीसंपदो दुर्लभत्वात् । अत्रपक्षे स्फोटव्यवस्थापकहरिकटाक्षोपि मृग्यः । भाष्याद्यननुगृहीतपदार्थसाधने प्रयतमानानां पक्षपरिग्रहे लाघवगौरवचर्चापि शुष्ककोलाहलएवेत्यलम् ।

कालवर्णानुरागेण स्फोटानन्त्यं प्रकल्प्यते ।
स्फोटत्वं वर्तते तत्र ततो जातिरितीर्यते ॥ १ ॥
इत्येवं कल्पने मानं भाष्यादौ न प्रदृश्यते ।
अतो नागेशवचनं न युक्तमिति सूरयः ॥ २ ॥



## (४१ स्फोटे बह्वसंमतिनिरूपणम्)

पातञ्जलेहि भाष्ये लोके वाचकत्वेन प्रसिद्धशब्दातिरिक्तविलक्षणस्फोटस्वरूपं न निरूपितम्, नित्यत्वं तावच्छब्दानां तत्रतत्र प्रतिपादितम्। तेन मन्यामहे वाचकानां नित्यता तावत् पाणिनेर्भाष्यकृतश्चाभिमतेति ।

खण्डितश्चायंस्फोटवादः'प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्द'इतिसूत्रेण[1] सांख्याचार्यैः, तदनुयायिनोपवर्षनाम्नाचाऽऽचार्येण । किंच—श्रीशङ्कराचार्यैस्तदनुयायिभिरुत्तरमीमांसायांदेवताऽधिकरणे(८) कुमारिलभट्टेन तन्त्रवार्तिके, पार्थसारथिमिश्रेण शास्त्रदीपिकायाम्, 'औत्पत्तिके(१-१)'तिपंचमाधिकरणे, खण्डदेवेन (१-३-११) अधिकरणे, जयन्तभट्टेन न्यायमञ्जर्याम् (६-आ.) विश्वनाथेन मुक्तावल्यां शब्दखण्डे, श्रीरामानुजमुनितदनुयायिभिर्भाष्यतद्व्याख्याश्रुतप्रकाशिकातत्त्वटीकासु जिज्ञासा-

1. वर्णसमुदायेन स्फोटप्रतीतिरित्यङ्गीकारे वर्णसमुदायेनै वार्थोपस्थितौ स्फोटवैयर्थ्यम्, तेनाऽप्रतीतिः स्फोटस्येतिस्वीकारे अज्ञातस्यार्थाऽप्रत्यायकत्वात् स्फोटकल्पनाव्यर्थेति सूत्रार्थः ।

धिकरणे, वेदान्तदेशिकैः ग्रन्थान्तरेच, श्रीमज्जयतीर्थसंयमीन्द्रैः जिज्ञासाधिकरणसुधायां, तत्त्वनिर्णयटीकायांच, वाचस्पतिना न्यायवार्तिकतात्पर्यटीकायांच स्फोटवादो बहुधा-निराकृतः। नच अन्यैर्दूषणमात्रेण कथमस्मदाचार्यसिद्धान्तः शक्यस्त्यक्तुमिति वाच्यम् भाष्यादावनुक्तेरपाणिनीयत्वेन आचार्यसिद्धान्ताभावात्, 'द्वैधे बहूनां वचनं समेषु गुणिनां तथा। गुणिद्वैधेतु वचनं ग्राह्यं ये गुणवत्तमा' (या. व. व्य. ७८) इति व्यवस्थापकन्यायेन स्फोटमनङ्गीकुर्वाणानांबहुत्वेन गुणित्वेनच तेषांवचनस्यैव ग्राह्यत्वाच्च। यत्तु—ब्रह्माक्षरसमुद्भव'(गी. ३-१५) इत्यत्र ब्रह्मपदं स्फोटपरम्, अक्षरपदं तद्व्यञ्जकपरमिति यादवप्रकाशेन व्याख्यानात् स्फोटोव्याससंमतइति, पाणिनेरपि संमतएवेति, तन्न। तत्र ब्रह्मपदेन कर्मकारणवस्तुनो ग्राह्यतया स्फोटस्य क्वापि कर्मकारणत्वानुक्तेः। तत्र-कर्म ऋत्विग्यजमानव्यापारः, ब्रह्म=वेदइति शाङ्करीये, ब्रह्म=प्रकृतिरिति रामानुजीये व्याख्यानात्, अन्यैश्च—तत्र ब्रह्म = परमात्मैव, 'अहिंसा समता तुष्टि स्तपो दानं यशोऽयशः। भवन्ति भावा भूतानां मत्तएव पृथग्विधा' (गी. १०-५)इतिदशमगीतायां परमात्मनस्सकाशादेव दानादिकर्मसंभवाभिधानादितिव्याख्यानाच्च यादवप्रकाशोक्तेरनादरणीयत्वात्। नच'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रय'इतिहरिवंशे हरेः स्फोटत्वोक्तेः स्फोटसिद्धिरितिवाच्यम्—तेन नागेशाद्यभिमताऽसिद्धेः, तथाहिवर्णसंश्रयः, तदात्मकइतियावत्, स्फोटः=वाचकप्र[1]णवः, प्रणवरूपस्त्वम्, वाच्य-वाचकयोरभेदोपचारात्तथोक्तम्, यद्वा—वर्णसंश्रयः=वर्णनिष्ठः, स्फोटः=वाचकत्वधर्मः सः, त्वम् त्वदधीनइत्यर्थः। राजा राष्ट्रमितिवत् सामानाधिकरण्येन व्यवहार इतिवचन-तात्पर्येण नागेशाद्युक्तविलक्षणस्फोटसद्भावे तस्य प्रमाणत्वाभावात्। नच—'सूक्ष्मामर्थेनाऽप्रविभक्ततत्वा'मित्यादि[2]श्रुतिः, 'प्राणाऽपानान्तरेदेवी[3]'त्यादिभारतंच तत्र प्रमाणमिति-शक्तिवादे मञ्जूषाया(४-२०)मुक्तमितिवाच्यम्—एतयोःश्रुतिस्मृत्योः भाष्यादावनुदाहरणात्तयोरुक्तार्थे ऽप्रमाणत्वात्। अतएवोक्तं श्रुतिस्मृती हरिग्रन्थे स्पष्टे इतिनागेशेन। अतएवचोक्तं भाट्टदीपिकायां(१-३-११ अ.) 'श्रुतिविरुद्धमिद'मिति। श्रुतिस्मृत्योः स्फोटपदाश्रवणात्, तयोः स्फोटपरत्वंदुर्वचम्। श्रुत्यर्थस्तु—एकाम्= विभागा-

1. पूर्वप्रकरणोदाहृतभागवतवचने प्रणवे स्फोटशब्दप्रयोगो दृश्यते।

2. 'एकांवाचमभिष्यन्दमानां, तामन्ये विदुरन्यामिति नारूपामात्मनिनिविष्टा'मिति वाक्यशेषः।

3. वचनशेषो मञ्जूषायामेव द्रष्टव्यः।

त्पूर्वमेकत्वेन स्थिताम्, आत्मनिसंनिविष्टां परमात्मैकपराम्, नानारूपाम् = अनेक-शाखाम्, सूक्ष्मां अनन्तत्वात् दुर्विज्ञेयाम्, अर्थेन अप्रविविक्ततत्त्वां=नित्यसंबद्धाम्, अभिष्यन्दमानाम्=अभिमतार्थप्रदाम्, तां वाचम्=वेदवाणीम्, अन्यामिव=देवतान्तर-प्रतिपादनपरामिव, अन्ये=तत्त्वार्थानभिज्ञाः, विदुः=जानन्ति'इति । 'नारायणपरा वेदा'(शा. ३५७-७७)इत्यादि भारतवचनादिभिर्नारायणपरत्वेन निर्णीतंवेदम्, इति-हासपुराणाद्युपबृंहणानभिज्ञा उपक्रमादितात्पर्यलिङ्गानभिज्ञाश्च प्रतीयमानदेवतान्तरपरं मन्यन्त इति भावः । शब्दानां नाभ्यादितत्तद्देशसंबन्धेन परादिव्यवहार इत्येव भारत-वचनानां तात्पर्यम् । अतःश्रुतिभारतयोर्न स्फोटपरत्वम् ।

भाष्ये भाष्यकृता क्वापि स्फोटोऽयं न समर्थितः ।
आचार्यैर्बहुभिश्चायं स्फोटवादः प्रदूषितः ॥ १ ॥
श्रुतिस्मृती न प्रमाणं तत्र स्फोटपदाश्रुतेः ।
अतः कैयटभट्टोजीनागेशोक्तं न सांप्रतम् ॥ २ ॥



## (४२ स्फोटदूषणासंगतिनिरासः)

ननु- इयमपाणिनीयता स्फोटस्य, स्पष्टीकृताखलु ग्रन्थकृतैवोपसंहारे-'वैया-करणनागेशः स्फोटायनऋषेर्मतम् । परिष्कृत्योक्तवांस्तेन प्रीयता मुमया शिवः' इत्यन्तिमपद्येन स्फोटायनमतनिष्कर्षएव मयाकृतः इत्यभिधानेन । अतो ऽत्र भवतः प्रवृत्तिरफला, आचूडं तदीयग्रन्थाऽनवलोकनमूलाचेति मन्मह इतिचेत्, उच्यते— संपूर्णं तदीयंग्रन्थमवलोक्यैव वयमत्र प्रवृत्ताः । तेनोपसंहारे तथाभिधानेपि आदौ 'वैयाकरणसिद्धान्ते'तिसामान्यनिर्देशेन, तत्रतत्र महाभाष्यवाक्यानामुदाहरणेन, कलायां 'पाणिन्यादीना'मिति वैयाकरणपदव्याख्यानेनच, पाणिनेरप्ययं स्फोटोऽभिमत इति नागेशाशयो व्यज्यते, उपसंहारवाक्यस्यतु स्फोटस्य स्फोटायनमुन्युपज्ञतामात्रे तात्पर्यम्, यद्यपाणिनीयत्वं नागेशाभिमतं, तर्हि महाभाष्यवाक्यानि नोदाहरेत् ।

स्फोटस्य तदुपज्ञतायां मानन्तु—स्फोटोऽयनंप्रतिपाद्यतया आश्रय इत्यन्वर्थनामेदं तस्यऋषेरिति'अवङ्स्फोटायनस्ये (पा. सू. ६-१- )तिसूत्रशेखरोक्तिरेव । तर्हि— कुतोऽयंग्रन्थकारःस्फोटेतदीयवचनं प्रमाणतया नोदाजहारेति चोद्यस्य समाधानं सएव

नागेशः प्रष्टव्यः। स्फौटायनस्येतिपाठपक्षेतु स्फोटप्रातिपदिकात् 'नडादिभ्यश्चे'तिफक्। अत्रपक्षे स्फोटायननामाऽन्यःकश्चनऋषिः स्फोटस्य सर्ताइति 'स्फोटायनऋषेर्मत'मिति नागेशवचनतात्पर्यं बोध्यम्। अथवा—स्फोटायनपदात् बिदादित्वादञ्, बिदादिराकृतिगणः, नि[1]र्वचनंतु उक्तमेवेति। एवंच—उपक्रमोपसंहारयोरनानुगुण्येन प्राप्तपाणिनीयत्वसंशयव्युदासायायमुद्यमः।

> [2]आदौ सामान्यनिर्देशात् भाष्योदाहरणादपि।
> पाणिनीयो ऽथवा नेति स्फोटे भवति संशयः ॥ १ ॥
> अतस्त[3]त्परिहारेण प्रवृत्तिः सफला मम।
> उपसंहारवाक्यंतु तदुपज्ञत्वबोधकम् ॥ २ ॥

## (४३ शक्तिविचारः)

अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छा शक्तिः, तामेव संकेत इतिव्यवहरन्ति नैयायिकाः। अपरेतु अभिधायकत्वमिति वदन्ति। एतन्मूलकएवशब्दार्थयोःप्र[4]त्याय्य प्रत्यायकत्वलक्षणःसंबन्धः, बोध्यबोधकत्वं वाच्यवाचकत्वं, चेतिशास्त्रे व्यवहारः। तत्र—जातौ कार्यान्वितेचार्थे शक्तिरिति मीमांसकाः, अनन्विते जात्यवच्छिन्नेऽर्थे इतिनैयायिकाः, क्वचिज्जातौ, क्वचिद्व्यक्तौ, इतिवैयाकरणाः, नागेशस्तु क्वचिदन्वितेपीत्याह। अन्वित एवार्थे इत्यभियुक्ताः, वेदान्तिनस्तु अन्विते पदानां शक्तिरिति पदार्थदीपिकायां कौण्डभट्टः। अत्रप्रमाणोदाहरणानि तत्तद्ग्रन्थेषु द्रष्टव्यानि। तत्रच शक्तिग्राहकशिरोमणिः वृद्धव्यवहार एव बहुसंमताऽन्विताभिधाने मानमिति वदन्ति। तथाहि—'गामानये'त्यादि प्रयोजकवृद्धवाक्यश्रवणोत्तरं गवानयनादिप्रयोज्यवृद्धकर्तृकव्यापारं पश्यन् पार्श्वस्थो बालः प्रयोज्योऽयं आनयनान्विते गवि शक्तिं गृहीतवानित्यनुमाय प्रथमं गोपदस्य आनयनान्विते गवि शक्तिं गृह्णाति, गां बधानेति वाक्यान्तरं श्रुतवतो मध्यमवृद्धस्य गोबन्धनव्यापारं पश्यन् आनयनांशप्रमोषेण बन्धनक्रियान्विते शक्तिं गृह्णन् गवादिपदार्थे योग्येतरान्वययोग्यताऽस्तीति जानाति। ततः—'गौः, घटः, पटः'इत्यति-

1. स्फोटायनशब्दस्येतिशेषः। 2. ग्रन्थारम्भे। 3. संशयेत्यर्थः। 4. येन...... विषाणिनां संप्रत्ययोभवति सशब्द'इतिपस्पशान्हिकभाष्ये'संप्रत्यय'इत्युक्तत्वात् एवमुक्तम्। लक्षणास्थले एवं व्यवहाराभावान्नातिप्रसंग इतिभावः।

ऽन्तवाक्यश्रवणे तत्रक्रियाबोधकपदाभावात् विशेषक्रियाश्रवणेपि योग्यक्रियादीतरान्विते गवादौ गोपदादेः शक्तिंगृह्णाति, इत्यनुभवात् अन्वितार्थवाचकत्वं पदानांयुक्तम् । प्राथमिकशक्तिग्रहविषयाणाम्, त्रयाणामन्वयक्रियातद्विशेषाणांमध्ये उक्तदिशा क्रियातद्विशेषरूपांशद्वयपरित्यागे भिन्नभिन्नक्रियावाचकपदाश्रवणरूपकारणसत्त्वेपि अन्वयांशत्यागे कारणाभावः, 'घटमानये'त्युक्ते किं नीलः, उत रक्तोघट आनेतव्यः, 'नीलमानये'त्युक्ते किं घटःउत पटः, सुन्दरमानयेत्युक्ते किंपुरुषः अथघटः, देवदत्तमानयेत्युक्ते किं पण्डित अथाऽपण्डितः, अथब्राह्मणः, उत अब्राह्मणः, देवदत्तइत्युक्ते किं करोति, पचतीत्युक्ते कइति जिज्ञासोदयश्च, अन्विताभिधानं द्रढयति । यद्यन्वितोऽर्थोवाच्यो न भवेत् एवंविधजिज्ञासैव नोदियात् । किंचात्र 'कारक'इतिसूत्रस्थमहाभाष्यानुग्रहोप्यस्ति । तथाहि—'अन्वर्थसंज्ञा यथा विज्ञायेत करोतीति कारकमिति' इतिभाष्यम् । अत्रकैयटः—'साध्यत्वेन क्रियैव शब्दात्प्रतीयते क्रियाया निर्वर्तकस्य कारकसंज्ञा'इति । अत्रोद्द्योतः—'क्रियायाएव शब्देन साध्यत्वप्रतीतेः निर्वर्तकार्थे कारकशब्दे संबन्ध्याकाङ्क्षायां सैव संबध्यतइतिभाव'इति । 'अ[1]थवा—यावत् ब्रूयात्क्रियायामिति तावत्कारकइति'इतिभाष्यम् । साहि कर्त्रादीनि विशिष्टव्यपदेशयुक्तानि करोति, विषयत्वेनचायमधिकार इतिकैयटः, विषयत्वेनेति कैयटमादाय'विषयत्वंच जनकत्वमेवे'त्युद्द्योतः । अत्रसंबन्ध्याकाङ्क्षायां सैवसंबन्ध्यते, विषयत्वं जनकत्व'मित्युद्द्योतोक्त्या, क्रियाकारकपदयो र्व्युत्पत्तिप्रदर्शनपरभाष्येणच, क्रियाकारकपदानि ससंबन्धिकार्थकानि, अतो नियतपरस्पराकाङ्क्षाजनकार्थवाचकानीति अन्विताथाभिधानसमर्थानि भवन्ति, एतद्दृष्टान्तेन सर्वाणिपदानि तादृशानीति शक्यंवक्तुम्, सर्वत्राकाङ्क्षाऽस्तीति पूर्वमुपपादितम् । अन्वययोग्यार्थान्तरविषयकाकाङ्क्षाजनकार्थाभिधानसमर्थत्वमन्वितार्थवाचकत्वम् । ततश्च—अन्विताभिधानेऽस्ति भाष्याद्यनुग्रह इति बोध्यम् । अतएव मञ्जूषायां कंचित्तु पदै रितरान्वितस्वार्थबोधनमस्त्येव......प्रविशपिण्डीमित्यादौ........विशिष्टशक्तिग्रहकाले ऽनुनिष्पाद्यवयवानामपि तत्रशक्तिग्रहात्' इत्युक्तम् । 'गेहंप्रविश, पिण्डींभक्षय'इत्यादिवाक्यैः विशिष्टार्थविषयकशक्ति[2]ग्रहकाले अवयवानाम्=प्रविशेत्यादिपदानां, तत्र=विशिष्टार्थे शक्तिग्रहात् इतिमञ्जूषार्थः । 'इग्यण'इतिसूत्रस्थ'प्रविश पिण्डी'मित्यादेरप्येवमेव व्याख्यानंकृतमुद्द्योते । एवंच—यो-

1. 'कारक'इतिसूत्रस्थमन्यद्भाष्यादिकमाह । 2. वाक्यशक्तिपक्षे इदम् ।

ग्येतरान्विताऽर्थे पदानांशक्तिरिति भाष्यसंमतमिति वदन्ति । 'द्वौब्राह्मणावित्यादाविव पौनरुक्त्यं बोधावृत्तिश्चेति दोषद्वयं सुपरिहरमिति वेदितव्यम् ।

तत्र—प्रत्यायकत्वं शक्तिरित्येतत् भाष्यकृतां संमतःपक्षः, 'येनोच्चारितेन सास्नालाङ्गूलखुरककुदविषाणिनां संप्रत्ययो भवति सशब्द'इति पस्पशायां भाष्यकृता अर्थसंप्रत्ययजनकत्वं शब्दत्वमिति शब्दलक्षणनिरूपणद्वारा'प्रत्यायकत्वं' (अर्थप्रत्यायकत्वं)शक्तिरिति शक्तिस्वरूपस्यापि निरूपणात् । अनेनच—शब्दार्थयोः प्रत्याय्यप्रत्यायकभावः संबन्ध इत्युक्तंभवति । सच संबन्धो नित्यः'सिद्धेशब्दार्थसंबन्ध'इति वार्तिकभाष्याभ्यां शब्दार्थतत्संबन्धानां नित्यत्वबोधनात् । औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध'(जै. सू. १- )इतिसूत्रस्थौ'त्पत्तिकपदस्य पदपदार्थसंबन्धस्य नित्यत्व मौत्पत्तिकपदेनोक्त'मिति पार्थसारथिमिश्रैर्व्याख्यानात् तत्तत्संबन्धनित्यत्वं जैमिन्यादीनामप्यभिमतमितिबोध्यम् । तत्र औत्पत्तिकपदस्य शब्दाभिव्यक्तिकालिकइत्यर्थः, बोधकत्वशक्तिविशिष्टशब्दस्यैवाभिव्यक्तिः, ततश्च स्वाभाविकएवशब्दार्थयोःसंबन्ध इतिभाष्यादिभावः । एवमेव मन्यन्ते बहव आचार्याः । शब्दार्थयोरितरेतराध्यासमूलकं तादात्म्यं संबन्धइतितु न भाष्यारूढःपक्षः, भाष्येऽनुक्तेः, 'येनोच्चारितेन अर्थसंप्रत्यय'इतिभाष्येण चार्थप्रत्यायकत्वं संबन्ध इत्येवावगमात् । अतएव–'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकीर्ण (३-१७) इत्यादिविभूतिपादीययोगसूत्रभाष्यतद्व्याख्यानेषूक्तोप्यध्यासो न शाब्दिकै राश्रयितुं शक्यः, महाभाष्येऽनुक्तेः, योगफलनिरूपणावसरेतत्सूत्रपाठात् योगिविषयकं तदितिवक्तुंशक्यत्वात्, मञ्जूषायांप्रातिपदिकार्थविचारे तादात्म्यस्यसंबन्धत्वनिराकरणाच्च। विस्तरस्तु सारव्याख्याने दर्पणे शक्तिवादे । वक्ष्यते चैतत्किंचित् शाब्दे शब्दमानविचारेऽत्रैव । '[1]अर्थंश्रृणु'इत्यादिप्रयोगास्तु लक्षणया निर्वोढव्याः । भर्तृहरिरपि मन्यते शब्दानां बोधकत्वसंबन्धस्स्वाभाविक इतितदीयकारिकया निरूपयामः ॥ तथाहि–उपकारःस यत्राऽस्ति धर्मस्तत्रानुमीयते । शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः ॥ १ ॥ इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा । अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा ॥ २ ॥ समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ॥ ३ ॥ संबन्धि(न्ध)शब्दे संबन्धो योग्यतां प्रतियोग्यता ॥ इति । अयमर्थः—यत्र=उपकारः=उपकारस्वभावः, सः=संबन्धः, यत्राऽस्ति, तत्र,

1. ननु—तादात्म्यानङ्गीकारे 'अर्थंश्रृ'ण्वित्यादिप्रयोगानिर्वाह इत्यतआह-अर्थमिति ॥

धर्मः = कार्यजनकत्वशक्तिरूपो धर्मः, अनुमीयते। असौ = संबन्धः, शक्तीनामपि = कार्यजनकत्वसामर्थ्यानामपि, शक्तिः = तत्प्रदा, (तदुत्तेजिका) यथा दीपः वस्तुप्रकाशकत्वसामर्थ्यवानपि वस्तुसंबन्धादेव वस्तु प्रकाशयति, तथा शब्दःस्वाभाविकशक्तिमानपि अर्थसंबद्धः अर्थमुपस्थापयति। स संबन्धश्च तादात्म्याध्यासइति नागेशः, अनादिव्यवहारादिरित्यन्ये। यथा—इन्द्रियाणांस्वविषये = चक्षुरादीनां रूपादिविषयकज्ञानजनने, योग्यता = सामर्थ्यविशेषः, अनादिः स्वाभाविकी, तथा—अनादिरर्थैः संबन्धोपि, योग्यता—बोधजनकतावच्छेदकोधर्मः स्वाभाविकः। अतएवोक्तं शब्दरत्ने सरूपसूत्रे—अन्यथा अविद्यमानायाःशक्तेःएकशेषशास्त्रसहस्रेणाप्युपपादयितुमशक्य' मिति। अनेनशब्दानामर्थधीजनकत्वसामर्थ्यं स्वतएवास्ति, न संकेतादिपुरुषप्रयत्नैरुत्पाद्यम् पुरुषयत्नस्तु विद्यमानशक्तेरेव ज्ञापकइत्युक्तंभवति। संबन्धशब्दे = संब[1]न्धिशब्दे, (अर्थबोधकत्वरूपसंबन्धविशिष्टे,) योग्यतांप्रति—बोधजनकतावच्छेदकधर्मं प्रति, (तन्निरूपकइतियावत्) संबन्धः—संकेतादिः, योग्यता—अर्हता, शब्दार्थयोःसंबन्धेऽस्तीति तदर्थः। संबन्धएव शब्दनिष्ठार्थबोधकत्वानादिसंबन्धानुमापक इतिभावः। योग्यतासंवित् = संबन्धनिष्ठयोग्यताज्ञानं च, समयात् = अस्मदादिव्यवहारात्। दृष्टान्तमाह—मातेत्यादि ॥ अर्थःस्पष्टः। कारिकाणां प्राचीननवीनग्रन्थेषु योजनाभेददर्शनेपि बोधकत्वशक्तिःस्वाभाविकी तदनुमापकेश्वरसंकेतादिरिति तात्पर्यं समानम् ॥

तत्र केषांचिदाचार्याणां मतमनूद्य अन्यकृतदूषणानुवादेन न युक्तमितिसूचयति कौण्डभट्टो भूषणे शक्तिवादे। तदनूदितोऽयंदूषणग्रन्थः—'क्वचित्संकेतस्य, क्वचिच्छक्ते र्ज्ञानं कारणमिति व्यभिचारादेकस्यापि त[2]तथा न स्यात्, अस्माकंपुनः संकेतत्वरूपेणैव तज्ज्ञानं हेतुरिति न व्यभिचारः, तच्चेश्वरसंकेतसाधारणम्। नच—अस्मदादीनामेव स तथास्तु नियतशक्तिसाधुत्वाद्यनुरोधेन भगवतएव तत्कल्पनात्। सृष्ट्यादिव्यवहारे त्वयापि तस्य शक्तिग्राहकत्वेना ऽभ्युपेतव्यत्वात्। उभयसिद्धेश्वरेच्छां त्यक्त्वा ऽतिरिक्तशक्तिकल्पने गौरवाच्च। तादृशेश्वरसंकेतितत्वंच साधुत्वं तत्परिच्छेदकं व्याकरणादीति न तद्वैयर्थ्यम्, एवंच—सर्वत्रापि अतिरिक्तपदार्थान्तरकल्पन मयुक्तमिति संक्षेपः, तस्मादीश्वरेच्छैव शक्तिरिति नैयायिकानुसारिण' इति।

---

1. श्लोकेसंबन्धशब्दोऽर्शआद्यजन्त इतिभावः।
2. ज्ञानं, तथा = बोधकारणम्।

अत्रवदन्ति श्रीमज्जयतीर्थानुयायिनः—क्वचित्संकेतस्य, क्वचिच्छक्तेर्ज्ञानं कारणमित्येतत् न श्रीमज्जयतीर्थानां राद्धान्तः, किंतु सर्वत्र स्वाभाविक्या शक्त्या बोधः, संकेतस्तु तदनुमापकः इति । अतो नोक्तपरस्परव्यतिरेकव्यभिचारावकाशः । अतएव—पद्धतौ तेषांपदार्थसंबन्धेऽपि स्वाभाविक एवेत्युक्तं तैः, सुधायांच स्वतएवेति प्रतीकमादाय स्वाभाविकेनैवेति चोक्तम् । सृष्ट्यादिव्यवहारे ईश्वरसंकेतोपि स्वाभाविकशक्तेरनुमापक एवेति न तदा तस्य स्वातन्त्र्येणार्थबोधकत्वमिति तदाशयः । एतच्च —'अथवे'त्यादिनोत्तरग्रन्थेन स्पष्टीकृतं तैरेव न्यायसुधायाम् । नन्वेवं'नवयं क्वचिदपि शब्दस्य संकेताद्बोधकत्वं नास्तीति ब्रूमः, किंतु—क्वचित्स्वाभाविक्या शक्त्या बोधः, क्वचित्संकेता'दितिकथमुक्तमितिचेत्, शृणु—अत्रनैयायिकोक्तदूषणस्य, मीमांसकोक्तसमाधानानुवादोऽयम् । आशङ्कितव्यभिचारपरिहारस्तु शक्तिलक्षणारूपवृत्तिद्वयमङ्गीकुर्वता भवतेव कार्यतावच्छेदककोटौ कारणवैशिष्ट्यं निवेश्य स्वोत्तरत्वनिवेशेन सुपरिहरस्तैः । ननु—यवशब्दस्य प्रियंगौ गौणत्वमित्येव दृश्यते तदीयेषु ग्रन्थेषु, नतु संकेतइतिचेत्, उच्यते—गौणत्वव्यवहारोपि यववराहाधिकरणसिद्धान्तनिष्कर्षोत्तरकालिकएव, ततः पूर्वं यवशब्दस्यापि प्रियङ्गौ संकेतएवेति मीमांसकाशयः । अन्यथोभयप्रसिध्द्यो स्समप्राधान्याभावेन पूर्वपक्षस्यैवानुत्थित्या यववराहाधिकरणानुत्थितिप्रसंगः । लाघवगौरवचर्चातु शुष्ककोलाहलएव, नेदृशंगौरवं पाषाणारोपवत् शिरोवेदनां करोति । म्लेच्छव्यवहारस्य चिरकालिकत्वेन लोकेतत्रगौणत्वव्यवहारादर्शनात्संकेतेत्याद्युक्तम् ।

इदंपदमस्यार्थस्य बोधकंभवत्विति हीश्वरेच्छाऽऽकारः, तत्रबोधकत्वं विषयतया भासतइति इच्छातिरिक्तस्वाभाविकसंबन्धरूपबोधकत्वमस्तीतिप्रतीतेः अतिरिक्तशक्तिरस्त्येवेतिस्वीकर्तव्यम्, अतःश्रीमज्जयतीर्थानामन्येषांचाचार्याणांमतमेव युक्तम् । ईश्वरसंकेतितत्वंसाधुत्वमितितु न युक्तम्; आधुनिकपुरुषकृतटिथुमादिसंज्ञानामीश्वरकृतत्वाभावेन साधुत्वाभावप्रसङ्गात् । संकेतितत्वं साधुत्वमित्युक्तौ गव्यादीनामपि संकेतशब्दत्वात् साधुत्वापातः । अतःसंकेतित्वातिरिक्तः व्याकरणशास्त्रव्यङ्ग्योऽभ्युदयप्रयोजको धर्मविशेषः साधुत्वम्, अनपभ्रष्टत्वंवा तदितिवक्तव्यमिति संकेतितत्वसाधुत्वयोरन्यत्वमेव । एवंच नैयायिकानुसारिणां जयतीर्थग्रन्थदूषणं, कौण्डभट्टस्य तदनुभाषणेनानुमोदनं च जयतीर्थीयस्य 'अथवे'त्याद्युत्तरग्रन्थस्य, ग्रन्थान्तरस्यचाऽनवलोकननिबन्धनमिति विदांकुर्वन्तु सूरयइति ।

बोधकत्वं शब्दशक्तिः सापि स्वाभाविकी मता ।
संकेतो व्यञ्जकस्तस्या इत्येतद्बहुसंमतम् ॥ १ ॥
इदमेव मतं श्रीमज्जयतीर्थमुनेरपि ।
तदाशयमजानानो न्यायवित् दूषयन्निदम् ॥ २ ॥
मोदते कौण्डभट्टश्च दूषणस्यानुभाषणात् ।
तस्मात्तावुभावेतौ विज्ञेयौ स्थूलदर्शिनौ ॥ ३ ॥

## (४४ लक्षणाविचारः)

ननु—प्रयोगनिर्वाहं लक्षणयाकर्तुं न शक्नुवन्ति शाब्दिकाः, यतोऽयं नागेशो मञ्जूषाद्वये 'सर्वे सर्वार्थवाचका' इतिसमयाभ्युपगमेन गङ्गापदस्य तीरेपि शक्तिमभ्युपेत्य लक्षणावृत्तिं निराकरोत्, भूषणतत्सारकारावपि तांवृत्तिं निराकुर्वाताम् । नच—'सर्वे सर्वार्थे'तिसमयो न भाष्यकृत्संमत इतिवाच्यम्—'कुत्वंकस्मान्नभवती'तिवृध्याह्निक-भाष्यसंमतोऽयं समय इति वक्तुं शक्यत्वात् । तथाहि—तत्र प्रश्नाशयं विवृण्वता कैयटेन ऐजादिपदानां शास्त्रविषयत्वहेतुभूतलौकिकत्वसाधकः 'अ[1]नेकशक्तेः'शब्दस्ये' त्यादिना शब्दार्थसंबन्धनित्यत्वरूपहेतुरुक्तः, नागेशेन—'सर्वेसर्वार्थवाचका' इत्यभ्यु-पगमादिति प्रदीपाशयं निरूपयता कथमेकस्य शब्दस्याऽनेकशक्तित्वमिति शङ्कावारिता । ततश्चप्रश्नभाष्याशयवर्णनावसरे प्रदीपोद्द्योतयोरेवमुक्तेर्भाष्यानुगृहीतोऽयं पक्ष इत्य-वधारयामः । एवंच लक्षणास्थलेपिशक्त्यैव निर्वाहेनलक्षणावृत्तेरभावात् इतिचेत्-अत्राहुः—सर्वेषांसर्वार्थवाचकतातावत् न सर्वानुभवसिद्धा, अतोऽनेकशक्ते'रि त्यादिनोक्तहेतुः न लौकिकत्वसाधनसमर्थः । अतएव—अनुकरणत्वाज्जातित्वाद्वेतिहेत्वन्तरमभिधत्तेकैयटः । अपूर्वाःसंज्ञाःक्रियन्त इतिपक्षेप्याहेति अवतारितमिदं वाक्यमुद्द्योते । जातित्वादिति [2]त्रयीपक्षे । अत्रपक्षे संज्ञाशब्दानां जातिशब्देष्वन्तर्भावः तेषामपूर्वत्वंवाऽनादित्वं वेत्येतदन्यो विचारः । किंच—अनेकशक्तित्वं हर्यादिशब्दवत् नानार्थकत्वाभ्युपगम-मात्रेणोपपन्नत इति'सर्वेसर्वार्थे'त्यभ्युपगमोनावश्यकः अतोऽत्रसमये न भाष्यानुग्रहः । किंच—यदि'सर्वेसर्वार्थे'तिपक्ष आश्रीयते तर्हि व्यज्यमानाअपि सर्वेऽर्थाः शक्त्यैव

1. अनादयः संज्ञशब्दा इतिपक्षे इदम् । 2. जातेगुणक्रियाशब्दा इति त्रयीपक्षः ।

प्रतीयन्त इतिवक्तुंशक्यमिति व्यञ्जनावृत्तिः प्रलयंगता स्यात्। न चेष्टापत्तिः, व्यञ्जनावृत्तिरवश्यमाश्रीयणीयेति मञ्जूषायां(प्र. प) व्यवस्थापितत्वात्; अभिधालक्षणेत्यादिवृत्तिविभागंकुर्वतां शास्त्रकृतां बहूनामाचार्याणाम, काव्यप्रका[1]शकृन्मम्मटभट्टादीनामालङ्कारिकाणांच संमतत्वात्। न केवलं परेषामत्र'समंतिः किंतु भाष्यकृतामपि तथाहि—'कथंतुषजकस्य पत्नीति पत्नीवपत्नीत्युपमाना'दिति 'पत्युर्नोयज्ञसंयोगे' (४-१-३३)इतिसूत्रे यज्ञसंबन्धवद्वाचकपत्नीशब्दस्य सादृश्यात् वृषलभार्यायां वृत्तिम्, 'पुंयोगादाख्याया'(४-१-४८)मितिसूत्रे ताद्धर्म्यादिना प्रकारचतुष्टयेन सिंहादिशब्दानां माणवकादौ वृत्तिं प्रदर्शयन्तो भाष्यकारा लक्षणावृत्तिं पृथगेवेति मन्यन्तइति स्पष्टमेव विदुषामित्यवेहि। किंच—'तथायोगवाचस्पत्ये उक्तं'सर्वेचशब्दाःसर्वार्थाभिधानसमर्था'(म. ४-१५) इति, सर्वैरर्थैः सर्वेषांचशब्दानां संबन्धश्च योगिज्ञानगम्यएव'इतिमञ्जूषोक्तेः, परिभाषेन्दुशेखरे 'सर्वेसर्वार्थवाचका'इत्यभ्युपगमोपि योगिदृष्ट्या नास्मदृष्ट्या'इत्याद्युक्तेश्च अस्मदादीनां गङ्गादिपदैःतीरादिबोधःशक्त्येति न शक्यतेवक्तुमिति नागेशेनैवोक्तप्रायमिति लक्षणावृत्तिराश्रयणीयैवाऽस्माभिः। किंच—'सर्वेसर्वार्थवाचका'इत्यभ्युपगच्छतामपि अक्षहर्यादिपदवत् विभिन्नशक्यतावच्छेदकावच्छिन्ननानार्थवाचकत्वं शब्दस्येत्येवाऽभिप्रायः, तथाच-गङ्गापदंप्रवाहत्वेन प्रवाहबोधकं, तीरत्वेन तीरबोधकमित्येव वक्तव्यं, नतु आरोपितप्रवाहत्वेन तीरबोधकमिति. तथा सति प्रसिद्धंतीरपदं विहाय अप्रसिद्धगङ्गापदप्रयोगोऽनर्थकः। नच—तीरपदात् विवक्षितशैत्याद्यप्रतीतेः तीरेगङ्गात्वमारोप्यते अरोपितधर्मपुरस्कारेण गंगापदात् तीरबोधेशैत्यपावनत्वादिप्रतीतिर्घोषे इतिवाच्यम्, 'सर्वेसर्वार्थे'त्यनेन भवतामतिवेलमनोरथाऽलाभात्। आरोपाङ्गीकारे लक्षणायामेव पर्यवसानाच्च। किंच—'पत्नीवपत्नी'त्युपमानात्, चतुर्भिःप्रकारैः इतिभाष्योक्तेः, तत्सामीप्यादिना शक्यतावच्छेदकस्यारोप इत्यारोपोक्तेश्च प्रयोजनं दुर्निरूपंशक्त्यातीरादिबोधवादिना, नहिलोकेशक्त्यापदार्थाबोध्यन्तइतिवादिनः सामीप्यादिधर्मान्निमित्ततया आश्रयन्ति। किंच—'किंबहुना येषां प्रत्ययानामन्येषां चशब्दानां यत्रार्थे शास्त्रेण विधानं तेषामन्यार्थे तदर्थेवान्येषां लक्षणयापि साधुत्वाभावस्य'प्रत्ययः, परश्च, पुंयोगा'दिति सूत्रभाष्यतो लाभादिति नागेशेन 'येनविधि' रितिसूत्रशेखरे कृतव्यवस्था भज्येत सर्वेषां सर्वार्थकत्वे। किंच—तदस्याऽस्त्यस्मिन्निति

1. स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधे (का. २-९)त्यादि तत्रोक्तम्। लक्षणायाम्।

सूत्रे अस्यास्मिन्नित्यर्थद्वयोपादानात् सर्वेसर्वार्थवाचका इति न सूत्रकृत्संमतं यदि तत् तदिष्टं स्यात्, तर्हि—अन्यतरस्मिन्नर्थे प्रत्ययविधानेपि, गोमानित्यादेः 'सर्वेसर्वार्थेतिसमयात् उभयार्थकत्वंशक्यंवक्तुमित्यु भयोपादाने नफलम्। एवंच—गङ्गायांघोष इत्यादिप्रयोगनिर्वाहाय शाब्दिकैः लक्षणावृत्तिराश्रयणीयैव। अतएव—'रघुयदुशब्दयोस्तदपत्ये लक्षणा, न सुब्विभक्तौ लक्षणा'इत्यादिशाब्दिकानां व्यवहारःस्वरसतस्सङ्गच्छते। एतेन—ईदृशे[4]स्थले अप्रसिद्धशक्तिरिति तात्पर्यम्, गौणमुख्यन्यायोपिप्रसिध्यप्रसिद्धितात्पर्यकः, 'लक्षणये'त्यादिव्यवहारः परमतरीत्या इतिकल्पनंक्लिष्टमेव। ततश्च-लक्षणावृत्तिर्नेतिवादः सूत्रभाष्यकृदनभिमत एवेति भाति।

लक्षणा नेति वादोऽयं नैव भाष्यकृतां मतः।
इति ब्रुवन्ति सुधियो महाभाष्यविमर्शकाः ॥ १ ॥



## (४५ गोत्वादिजातीनां व्यापकत्वनिरासः)

यदुक्तं मञ्जूषायां(४७४-पु.) 'सर्वजातीनां व्यापकत्वेपि पदार्थानां विचित्रशक्तित्वात्कांचिदेव जातिं कश्चित्पदार्थोऽभिव्यनक्ती'त्यादिना गोत्वादिजातीनां व्यापकत्वमिति, तस्याऽयमाशयः—गोत्वादेर्व्यापकत्वेना ऽश्वादौ वर्तनेपि गोव्यक्तिःगोत्वमेव व्यनक्ति नाश्वत्वम्, तथाऽश्वव्यक्तिरश्वत्वमेवव्यनक्ति न गोत्वमिति गवादिशब्देन नाऽश्वादिबोधः, गोपदस्य स्ववाच्यवृत्तिलोकप्रसिद्धगोत्वमात्रबोधजनकत्वसामर्थ्यवत्त्वं नत्वश्वत्वादिबोधजनकशक्तिमत्त्वमिति। व्याख्यानेतु—उपाधिस्वभावादित्युक्तं तत्रोपाधिः क इति चिन्त्यः।

अत्रवदन्ति—गोत्वादिजातीनां व्यापकत्वमित्यत्र न प्रमाणमुपलभ्यते, भाष्येतु नित्यतैवप्रोक्ता जातेः, नतु व्यापकता। ननु-ब्रह्मणएव प्रमाणसिद्धतया सर्वेभावा ब्रह्मणः शक्तिभूता नतु ततोभिन्ना'(४७२-पु.)इतिमञ्जूषायां सर्वपदार्थानां ब्रह्मशक्तिरूपत्वोक्तेः, तस्याश्च व्यापकत्वेन तद्रूपगोत्वादेरपि व्यापकत्वसिद्धिरितिचेत्, न—ब्रह्मणो निर्धर्मकत्वाङ्गीकर्तृनागेशमतेशक्तेस्तदीयत्वा ऽप्रसिद्धेः। व्यासपाणिनिपतञ्जलीनां नाभेदवादित्वमिति प्राङ्निरूपितत्वेन सर्वभावानां ब्रह्मशक्तिरूपत्वस्य ब्रह्मानन्यत्वस्यच व्यासादिमुनित्रयासंमतत्वाच्च। एतेन—ब्रह्मसत्तारूपाया गोत्वजाते'रित्यादि व्याख्यानोक्ति-

रपि निरस्ता। दर्शितभेदवादिमुनित्रयमते गोत्वादेर्ब्रह्मसत्तारूपत्वाभावात्। निर्धर्मकत्ववादिनां सत्ताया ब्राह्मीत्वस्य दुर्निरूपत्वात्। अत्र—'ब्रह्मणएवप्रमाणसिद्धतये'त्युक्त्या ब्रह्मातिरिक्तसर्वभावानां, गोत्वादिजातीनां च ब्रह्मशक्तिरूपत्वमप्यप्रामाणिकमेवेति सिध्येदिति विभाव्यम्। 'यद्भिन्नेष्वभिन्नं, छिन्नेष्वच्छिन्नम्, आकृतिर्नाम सा'इति पस्पशान्हिकभाष्येण, 'आकृत्यभिधानाद्वा, नहि गौरित्युक्ते व्यपवर्गः (भेदः) गम्यते शुक्लोनील'इतिसरूपसूत्रभाष्येणच, तत्तत्पदार्थतावच्छेदकःशक्यतावच्छेदकत्वेन प्रतीयमानो जातिपदवाच्यो गोत्वादिरूपोधर्मःतत्तच्छब्देन प्रतीयत इत्यर्थस्यैव लाभेन तद्भाष्यतो व्यापकत्वाऽलाभात्। यदिमन्यते भवान् व्यापकत्वं गोत्वादीनां, तर्हि प्रमेयत्वादिवत् व्यापकं गोत्वमपि गोपदशक्यतावच्छेदकं न स्यात्, व्यापकस्य अवच्छेदकत्वायोगात् इति गोपदशक्यतावच्छेदको धर्मः सर्वकविलोकसंमतः कश्चन संपादनीयो ऽतिप्रसङ्गवारणाय, सच न सुलभः, मञ्जूषोक्तदिशा सर्वधर्माणां व्यापकत्वात्। एतेन—'एकैवजातिः महासत्ता, ब्रह्मस्वभावा, तस्याएवविवर्तो गोत्वादि'रितिमञ्जूषा व्याख्यायां गोत्वादेर्महासत्ताविवर्तत्वोक्तिः, धात्वर्थवादमञ्जूषायां (५२-प.) भूवादिसूत्रोद्योतेच, 'जगत्कारणस्यसत्तारूपब्रह्मणो मायासहकारेणक्रियारूपाविवर्ता'इतिनागेशोक्तिश्च चिन्त्या। एवंमुनित्रयानुक्तेः, पाणिन्याद्यनभिमतप्रमेयजातं कथं वैयाकरण सिद्धान्तव्यपदेशार्हं भवेत्। षड्भावविकाराभवन्ती'तिनिरूक्तवचनस्य निरूक्तभाष्ये महाभाष्येचएवमर्थाऽवर्णनात्, कैयटे भावस्य = क्रियायां इत्येव व्याख्यानात्, 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानी'तिपूर्वप्रस्तुतवचनैकदेशभावभेदविवरणपरैतद्वचनगतभावपदस्य क्रियेत्येव व्याख्यानस्योचितत्वात्, भूवादिसूत्रे अस्त्यादीनां क्रियावाचकत्वोपपादनायोपन्यस्तवचनगत भावपदस्य पदार्थसमवेतधात्वर्थस्य क्रियेतिव्यवह्रियमाणस्य वक्ष्यमाणजन्मादयःषड्प्रभेदा इत्येव तात्पर्यमिति पतञ्जलेराशयात्, यावद्द्रव्यभाविसदितिव्यवहारहेतुभूतात्मधारणरूपपदार्थमात्रवृत्तिक्रियापदव्यपदेश्यसत्ताया ब्रह्मविवर्तत्वे मानाभावात्, पतञ्जलिमतेब्रह्मणो विवर्तकारणत्वाभावाच्च। ननु'तद्भाष्यकृत'इत्युत्तरत्र मंजूषोक्तेः, सर्वमिदं निरूक्तभाष्यकारसंमतमिति चेत्, न—निरूक्तभाष्ये एवमानुपूर्वीकवाक्यस्य एतदर्थकवाक्यान्तरस्यवाऽदर्शनात् तद्भाष्यकृत्संमतमिदमिति न विश्वसिमः

केचित्तु—भावानां घटपटादीनामर्थानां विकाराःषडिति वचनार्थमाहुः।

अतःसर्वासां जातीनां व्यापकत्वाद्यपाणिनीयमेव ।

इदन्त्ववधेयम्—येत्वत्रमञ्जूषायां निरूपिताः स्फोटतदेकत्वादयः, प्रपञ्चमिथ्यात्वादयो विषयाः ते सर्वेप्यपाणिनीया अतःपाणिनीयैरबादरायणीयाः, पाणिनीये बादरायणीयेच तथार्थकवचनानुपलम्भात्, जगन्मिथ्यात्वादिनिरूपणं च 'वैयाकरणसिद्धान्ते'त्यादिप्रतिज्ञाविरुद्धं प्रपञ्चमिथ्यात्वादेर्वैयाकरणसिद्धान्तत्वाभावात्। किंबहुना-'क्वचिदाधुनिकग्रन्थानुसारेण लिखितमस्ती'(म. १-प.)तिग्रन्थकृदुक्तिरेवा निरूपितविषयाणामपाणिनीयत्वं प्रकटयति, तथोक्त्या प्राचामाचार्याणां ग्रन्थानुसारेण न विषया निरूपिता इतिप्रतीतेरित्यलम् ।

गोत्वादिजातेर्व्यापित्वे ब्रह्मशक्तित्व एवच ।
भावानां ब्रह्मरूपत्वे भाष्ये मानं न दृश्यते ॥ १ ॥
स्फोटे प्रपञ्चमिथ्यात्वप्रमुखे विषये तथा ।
न पाणिनिवचो व्यासवचनंच न दृश्यते ॥ २ ॥
अतो नाभिमतं व्यास पाणिन्योरखिलं त्विदम् ।
इति व्यासादिचरण शरणा ब्रुवते बुधाः ॥ ३ ॥

## (४६ शाब्दे शब्दभानेगौतमसंमतिनिरासः)

शाब्दबोधे सर्वत्र शब्दस्य न भानमितिनैयायिकानां मतमिति सर्वविदितम्। एवंस्थितेपि शब्दः शाब्देभासत इतिनिरूप्य 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकंप्रत्यक्ष'(न्या. सू. १-१-४)मितिप्रत्यक्षलक्षणे अव्यपदेश्यत्वविशेषणंवदता गौतमेन शाब्दे शब्दभानस्याङ्गीकाराच्चे'तिगौतमसंमतिमाह मञ्जूषायां (प्र.प.)। अत्रेदंचिन्त्यम्-अत्रसूत्रे'अव्यपदेश्य'मित्यस्य अशाब्दमित्यर्थः, अर्थप्रत्यक्षकाले न शब्दःप्रवर्तते, शब्दो न तत्र प्रत्यक्षविषयभूतार्थधियं जनयति, अतस्तस्याशब्दत्वम्। शाब्दबोधकालेतु—शब्दःप्रवर्तते तद्विषयभूतमर्थमुपस्थापयन् तं जनयति अतःशाब्दत्वं तस्य, नतु शब्दविषयकत्वेनेति तद्विशेषणतात्पर्यमिति न्यायसिद्धान्तप्रमेयं तत्सूत्रभाष्यादितोलभ्यते। तथाहि-तत्रअव्यपदेश्यविशेषणकृत्यविचारपरं भाष्यम्-'यावदर्थंवै नामधेयशब्दा स्तैरर्थसंप्रत्ययः, अर्थसंप्रत्ययाच्च व्यवहारः, तत्रेदमिन्द्रियार्थसंनिकर्षादुत्पन्नमर्थज्ञानं

'रूपमितिवा रस इत्येवंवा'भवति रूपरसशब्दाश्च विषयनामधेयं तेनव्यपदिश्यते ज्ञानं, रूपमितिजानीते, रसइतिजानीते नामधेयशब्देन व्यपदिश्यमानंसत् शाब्दंप्रसज्यते, अतआह—अव्यपदेश्यमिति ॥ यदिदमनुपयुक्ते(अज्ञाते)शब्दार्थसंबन्धेऽर्थज्ञानं नतन्नामधेयशब्देन व्यपदिश्यते, गृहीतेऽपिच शब्दार्थसंबन्धे अस्यार्थस्यायंशब्दोनामधेयमिति, यदातु—सोऽर्थोगृह्यते तदा तत् पूर्वस्मादर्थज्ञानान्न विशिष्यते, तदर्थविज्ञानं तादृगेव भवति, तस्यत्वर्थज्ञानस्या ऽन्यःसमाख्याशब्दो नास्तीति येनप्रतीयमानं व्यवहाराय कल्पेत, नचाऽप्रतीयमानेन व्यवहारः, तस्मात् ज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते 'रूपमितिज्ञानं, रसइतिज्ञान'मिति, तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते, व्यवहारकालेतु व्याप्रियते, तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसंन्निकर्षोत्पन्नमिति'इति । अत्र—'यावदर्थ'मित्यादि'प्रसज्यत'इत्यन्तः शंकाग्रन्थः, अतआहेत्यादिः'उत्पन्न'मित्यन्तःसमाधानग्रन्थः । यावदर्थमित्यव्ययीभावः'यावदवधारणे इतिसूत्रेण । यावन्तोऽर्थाइतिविग्रहः । अयंभावः शब्दार्थयोस्तादात्म्यात् अर्थप्रतीतिस्थले सर्वत्र वाचकशब्दसंवलितस्यार्थस्यभानं, ततश्च—शाब्दे यथा शब्दसंवलितस्यार्थस्य विषयतया अर्थवत्छब्दस्यापि विषयत्वेन भानात् शाब्दत्वं तथा प्रत्यक्षेपि शब्दविशिष्टार्थस्य(विषयत्वेन) भानात् शब्दविषयकत्वेन शाब्दत्वंस्यात् । अस्तु का नोहानिरितिचेत् तस्यप्रमाणान्तरत्वं न स्यादिति ।

समाधानग्रन्थस्य त्वयमाशयः—शब्दार्थौ वस्तुतोभिन्नौ, न तादात्म्यंतयोः, नच तदारोप्यत इतिवाच्यम्-तत्रफलाभावात् । अतः क्वचिदपिज्ञाने न शब्दसंवलितार्थस्य भानं किंतु केवलार्थस्यैव, तथैवानुभवात् । नन्वेवं शाब्देपि न शब्दस्य भानमिति न तस्य शाब्दत्वव्यवहारःस्यादितिचेत्, शृणु—शब्दविषयकत्वं तादृशव्यवहारं प्रति न प्रयोजकं, किंतु—शब्दोपस्थापितार्थविषयकत्वं, तच्च तत्रास्तीति तथाव्यवहार इति । तथाच—प्रत्यक्षे इन्द्रियसंनिकृष्टवस्तुमात्रं विषयः, नतु शब्दोपस्थापितं(शब्दसंवलितंवा) वस्तु । अतस्तस्यशाब्दत्वं नेति प्रमाणान्तरत्वं सुस्थम् । 'अर्थभान[1]'काले स न समा-

---

1. अर्थभानकाले = इन्द्रियसंनिकर्षादिजन्यार्थप्रतीतिसमये, समाख्या = वाचकशब्दः, स न व्याप्रियते = तत्तदर्थवाचकत्वेन प्रसिद्धो न प्रवर्तते. (न ज्ञानविषयमर्थमुपस्थापयति) व्यवहारकालेतु = पदेनार्थबोधनकालेतुशब्दो व्याप्रियते = अर्थोपस्थितिंजनयति तेनोपस्थितोऽर्थः शाब्दे भासत इत्यक्षरार्थः । शिष्टस्यभाष्यस्याक्षरार्थस्तद्व्याख्यानतो बोध्यः ।

स्याशब्दोव्याप्रियते, व्यवहारकालेतु व्याप्रियत'इत्यनेनभाष्यकृतैवोक्तोऽयमर्थ इति। एवंच--शाब्दे शब्दभानं गौतमादीनां संमतमित्युक्तिर्न समंजसा। एतेन--'शब्द-विषयकत्वेन प्रत्यक्षस्य शब्दत्वापत्तिरितिवदता वात्स्यायनेन शब्दजबोधस्य, शाब्दत्व-मुक्तप्रायम्, शब्दविषयकत्वमेव शाब्दत्वं नतु शब्दजन्यत्वमिति तत्रैव वाचस्पति-मिश्रैरिति भाष्यटीकाग्रन्थमुपन्यस्य शाब्दस्य शाब्दविषयकत्वं तदभिमतमित्युक्तिः परास्ता। उभयोरपि तयोर्ग्रन्थयोश्चोदकाशयवर्णनपरत्वेन सिद्धान्तग्रन्थत्वाभावात् शब्दार्थयोस्तादात्म्यस्य अत्रैवसूत्रे—न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिना बहुधा निराकरणात्। इतरनैयायिकैरनभ्युपगमाच्च।

प्रत्यक्षे शब्दो विषयो नेत्युक्तिमात्रेण शाब्दे तदङ्गीकार्यंतेनेति कोयंनियमः, गौतमस्तु शाब्दे शब्दो भासत इतिमहताकण्ठेन क्वापि नाभाषि। जयन्तभट्टो नैयायिक-शिरोमणिः न्यायमञ्जर्यां (१-आ.) अव्यपदेश्यपदकृत्यवर्णनावसरे, अन्यत्रच प्रकरणे शाब्दे शब्दभानपक्षं प्रत्याचष्टे। तस्मादिदं कथं गौतमाभिमतंभवेत्। किंच— 'व्यक्त्याकृतिजातयस्तु पदार्थः' (गौ. सू २-१६-८) इति व्यक्त्यादीनां त्रयाणामेवपदार्थत्वोक्तेः, शब्दस्य त्रिष्वनन्तर्भावात् पदवृत्त्यविषयत्वेन तस्य शाब्दे भानं गौतमसंमतमित्येतन्न शोभनम्। अस्ति शब्दस्यापि वृत्तिविषयत्वमितितु न गौतमसिद्धान्तः किंतु भर्तृहरेः, 'ग्राह्यत्वंग्राहकत्वंचे'तितदुक्तेः। वृत्त्यविषयस्यापि शाब्दे भानमितितु न साधु मन्यन्ते शास्त्रकाराः। यदि वृत्त्यविषयस्यापि भानं तर्हि घटमानयेत्युक्ते समवाये-नोपस्थिताकाशस्यापि शाब्देभानप्रसङ्गः। किंच-शाब्दे शब्दभानमितिशाब्दिकसिद्धन्तो-प्यनार्षएव यतस्ते पाणिन्याद्यृषिवचनमनुदाहृत्य 'नसोऽस्तिप्रत्ययोलोकेयः शब्दानुग माद्दत'इत्यनार्षं वाक्यपदीयवचनमेव प्रमाणतयोदाहरन्ति। ततश्च—अनार्षसिद्धान्तानु-सारेण ऋषितात्पर्यावधारणं विदुषां मनसे न रोचते। ननु अर्थेन शब्दस्मरणात् स्मृतस्य तस्य शाब्देभानमितिचेत्, न—कदाचित् देशकालपुरुषाणामपि स्मरणसंभवात् तेषामपि भानप्रसङ्गात्। उन्नीतभानपक्षस्तु न सर्वसंमतः। किंच एवंकल्पने गौतम-वचनानुग्रहोपि मृग्यः। अतः 'शाब्देशब्दभानस्य गौतमेनाङ्गीकाराच्चे'ति नागेशोक्ति-र्न युक्ता अनुकरणे, संज्ञास्थलेच शब्दस्यैव विशेष्यत्वं प्रकारत्वंचेति तस्य तत्र भानेपि तद्दृष्टान्तेन सर्वत्र तथाकल्पनं न युज्यते।

प्रत्यक्षेऽव्यपदेश्यत्व विशेषणनिवेशनम् ।
शब्देनेतिशिरस्केण तदाकाराभिलापनात् ॥ १ ॥
शाब्दत्वमेव तस्य स्या दिति शङ्कानिवारकम् ।
अतस्तेन तदिष्टार्थ सिद्धिर्नैव भविष्यति ॥ २ ॥
गौतमो नावदच्छब्दः शाब्दे भातीति कण्ठतः ।
भाष्यकारादयो नाहु स्तस्मात्तेषां न तन्मतम् ॥ ३ ॥



## (४७ प्रत्यये शब्दभाने मुनित्रयानभिमतत्वनिरूपणम्)

किंच—शाब्दे, ऽन्यत्रचप्रत्यये शब्दोभासतइत्येतत् न मुनित्रयसंमतम्, तैस्तथानुक्तेः। ननु—'शब्दपूर्वकश्चास्यसंप्रत्यय'इति 'स्वंरूप'मितिसूत्रभाष्यस्य 'शब्द-विशेषणकश्चाऽर्थसंप्रत्यय' इत्युद्द्योतकृता व्याख्यानात् 'स्वंरूप' (पा. सू. १-१-६८) मितिसूत्रं, तद्भाष्यंच तत्रप्रमाणं, शब्दविशेषणकत्वं च शब्दप्रकारकत्वं, घटत्वादीनां प्रकारतावत् शब्दानामपि सा, शब्दप्रकारिकैवसर्वाधीरितितदर्थइतिचेत्, न, तद्भाष्या-क्षरमर्यादया तथाऽर्थालाभात्, कैयटेन तथा तद्भाष्यस्याव्याख्यातत्वाच्च। ननु—कस्तर्हि भाष्यार्थ इतिचेत्, शृणु—शब्दज्ञानपूर्वकश्च श्रोतुरर्थप्रत्यय इतिभाष्यार्थः, तथाहि-शब्दज्ञानपूर्वकोऽर्थसंप्रत्ययइतिसर्वलोकसंप्रतिपन्नं शब्दानुपलम्भे किंभवान् ब्रूते इतिलोके प्रश्नकरणात् पुनस्तस्मिन्नेववा पर्यायशब्देवा प्रयुक्तेज्ञातेच तस्मिन्, ज्ञातोऽर्थः कर्मकुर्मो यथानियोगमित्युत्तरदानाच्च। ततश्च लोकव्युत्पत्त्यनुसारेण'राजश्वशुराद्यत्' (पा. सू. ४-१) अग्नेर्ढक्'(पा. सू. ४-२) इत्यादावुपात्तराजादयः शब्दाः पशुरपत्यं देवता'इत्यादिशब्दाइव अर्थपराएव, अथापि अर्थे शास्त्रीयकार्याणां यदादिप्रत्ययानां बाधात् प्रातिपदिकादित्यधिकाराच्च राजादिवाचकशब्दसामान्यात् यदादिः प्राप्नोति। नच—प्रत्यासत्त्या कारणतयोपस्थितराजादिशब्दएव गृह्यते नत्वन्यः (पर्यायादिः) इति वाच्यम्—तन्न्यायाश्रयणे प्रमाणाभावात् अतः स्वरूपमेव गृह्यत इति न शक्यंवक्तुमिति शङ्कापनोदनाय'स्वंरूप'मिति सूत्रंप्रारभते पाणिनिः। अस्यत्वयमर्थः—शब्दस्य=' राज-श्वशुरादित्यादावुच्चरितस्य राजादिशब्दस्य, स्वम्=स्वीयार्थविशिष्टम्, रूपम्=उच्चरित-शब्दनिष्ठानुपूर्वीविशिष्टवर्णसदृशवर्णघटितशब्दस्वरूपम्, संज्ञा=बोध्यम् संज्ञापदमत्र

कर्मणि अङन्तं, स्वपदंस्वोयार्थपरम्, रूपपदमानुपूर्वीविशेषविशिष्टशब्दपरं भाष्यतस्तथालाभात् इति। एवंच-'राजश्वशुरा'दित्यादौ अर्थयुक्तराजादिपदादेव यदादिप्रवृत्तिः नतु इनादिपदेभ्यः, नापि निरर्थकेभ्यइतिअर्थवत्परिभाषाप्यनेनैव सिध्यतीतितात्पर्यम्।

अथवार्तिकभाष्यमतम्-अर्थोपस्थितौ पदज्ञानं कारणमितिसर्वसंप्रतिपन्नम्, ततश्च पदार्थोपस्थितिहेतुतया ज्ञातस्यशब्दस्य प्रत्यासन्नत्वेन तंपरित्यज्य विप्रकृष्टशब्दान्तर ग्रहणे विनिगमकाभावात्पर्यायादीनां न ग्रहणमिति कारणतयोपस्थितराजादिपदादेव यदादिकार्यंप्रवर्तते, इनादिशब्देभ्योयदाद्यदर्शनमेव प्रत्यासत्तिन्यायाश्रयणे मानमिति सूत्रं नारंभणीयमिति कात्यायनपतञ्जली मन्येते। तथाचवार्तिकभाष्ये—'नवाशब्दपूर्वकोह्यर्थे संप्रत्ययः तस्मादर्थस्य निवृत्तिः' इतिवार्तिकम्, 'नवा एतत्प्रयोजनमस्ति, किंकारणम्, शब्दपूर्वकोह्यर्थे संप्रत्ययः, आतश्चशब्दपूर्वः, योपिह्यसावाहूयतेनाम्ना, नामचयदाऽनेन नोपलब्धं भवति, तदापृच्छति—किं भवानाहेति, शब्दपूर्वकश्चास्य संप्रत्ययः'इतिभाष्यम्। अयमर्थः—एतत् = शब्दमात्रस्य संज्ञाप्रतिषेधार्थत्वम् (पर्यायादिन्यावृत्त्यर्थत्वम्) वार्तिके हिशब्दो लोकसिद्धत्वद्योतकइतिकृत्वा, अन्वयदृष्टान्तेन तदाह—शब्दपूर्वकोहीति॥ अर्थसंप्रत्ययःशब्दज्ञानपूर्वक इतिलोकसिद्ध इत्यर्थः। उक्तेऽर्थे व्यतिरेकमाह—आतश्चेति आतःपदार्थमाह योपीति॥ अयमर्थः—योसौपुरुषो लोके केनचिदाहूयमान आह्वायकपुरुषोच्चरितस्य शब्दस्य सम्यगनुपलंभे किं भवानाहेति अनुयुङ्क्तेइति। अनेन—शब्दज्ञानाभावे ऽर्थप्रत्ययो नेति व्यतिरेकदृष्टान्त उक्तः। इतीति॥ हेतावयमितिः। इत्यन्वयव्यतिरेकदृष्टान्तसद्भावाद्धेतोरित्यर्थः। अस्य=उपलब्धुः (श्रोतुः) संप्रत्ययः=जायमानोऽर्थप्रत्ययः। शब्दपूर्वकश्च=शब्दज्ञानपूर्वकएव। प्रतिज्ञातं शब्दज्ञानपूर्वकत्वमेवानेनोपसंहृतम्। एतेन- इदंभाष्यंयुक्त्यन्तरबोधकंशब्दविशेषणकमित्यर्थकमित्युक्तिःचिन्त्या। अक्षरमर्यादया तादृशार्थालाभात्। यथा अर्थधियःशब्दज्ञानपूर्वकत्वमुपपादितं भाष्यकृता तथा शब्दविशेषणकत्वस्यानुपपादनेन तादृशार्थकत्वकल्पनस्यायुक्तत्वात्। नच—शब्दस्य प्रकारतयाभानाभ्युपगमएव घटःकलशइत्यादितोऽभेदबोधोभवति, अन्यथा—अवच्छेदकधर्मभेदाभावेन स नस्यात् धर्मिताऽवच्छेदकता सम्बन्धेन तद्धर्मावच्छिन्नाभेदबुद्धिं प्रति तद्धर्मभेदःकारणमिति व्युत्पत्तेरितिवाच्यम्—'काकःकाकःपिकःपिक'इत्यादाविव बोधोपपत्तेः[1]। नचैवं लक्षणाप्रसंगोदोष इतिवाच्यम्—

1. काकपदवाच्यः काक इति तत्रबोधः।

वैयाकरणमते लक्षणैव नेति मञ्जूषादावुक्तत्वात् ।

किंच—शाब्दे शब्दभानवादो दर्पणे हरिवल्लभेन 'अत्रवदन्ती' त्यादिना शक्तिवादे विस्तरेण निराकृतः। किंच—पदपदार्थयोरभेदवादिनोऽस्य मते उभयोरेकत्वेनैव भानात् विशेष्यविशेषणभावः कथमुपपद्येत । तयोर्भेदो वास्तवः, अभेदस्त्वारोपित'इतिमञ्जूषायामुपक्रमे निरूपितत्वेन अभेदोपि न वास्तवः । अवास्तवो ऽभेदः कथं शब्दसंवलितस्यैवार्थस्य भानमित्यर्थव्यवस्थापको भवेत् । किंच—यस्य तयोस्तादृशोऽध्यवसायः तस्यतथाबोधेपि तदीयतादृशाध्यवसायेनाऽन्येषां तथाबोध इतिवक्तुं न शक्यम्, एकस्यभ्रान्तत्वे अन्यैरपि तथा भवितव्यमित्यत्र नियामकाभावात् । किंच—प्रकारतया भानंप्रति पदनिरूपितवृत्तिजन्योपस्थितिः कारणं नतु अभेदबुद्धिः, संज्ञाऽनुकरणोभयातिरिक्तस्थलेशब्दस्यवृत्तिजन्योपस्थितिविषयता नास्तीतिसुप्रसिद्धम्। किंच—'शब्दमात्रमर्थस्वरूपंसंभवति शब्दार्थयोर्भेदात् । इति 'भावंतुबादरायणः' (ब्र. सू. १-३) इतिसूत्रे शङ्कराचार्यैः, 'अक्षरमम्बरान्तधृतेः' (ब्र. सू. १-३) इतिसूत्रे'स्वरूपभेदात्, उपायभेदात्, अर्थक्रियाभेदाच्च शब्दार्थयोरभेदो न युक्तः' इत्यादिना वाचस्पतिमिश्रैश्च शब्दार्थयोरभेदस्य दूषितत्वाच्च नाभेदोयुक्तिसहः। शक्तिवादेदर्पणेशब्दार्थयोरभेदवादः 'तत्तु नसाधीय'इत्यादिना बहुधा दूषितः। किञ्च—'मन्त्रविदेवास्मि नात्मवित्, यद्वै—किञ्चैतदध्यगीष्ठा नामैवैतत्' (छा. ७-१-२-३) इति नारदसनत्कुमारसंवादे ऋगादिनिखिलविद्यावेदिनोऽपि नारदस्य, आत्मज्ञानाभावस्य वेदपुरुषेण बोधितत्वेन शब्दार्थयोर्भेदएव श्रुतिसिद्धइति पदपदार्थयोस्तादात्म्यं श्रुतिविरुद्धम् । यदि तयोस्तादात्म्यं तर्हि सतिशब्दज्ञाने आत्मज्ञानमपि जातमिति शक्यं वक्तुमिति 'नात्मविदि'त्युक्तिः नामैवैतदि'ति सावधारणोक्तिश्च न सङ्गच्छेत । 'अभेदस्त्वारोपित'इतिनागेशाद्युक्त्यैव स नेति स्पष्टं सर्वेषाम् ।

ननु—पदपदार्थयोस्तादात्म्य एव 'किंयत्तत्सास्ना........सशब्द'इदि प्रश्नभाष्योपपत्तिः, अन्यथा'विषाण्यर्थरूपंसशब्द'इति प्रश्नोपसंहारोनुपपन्नएवस्यादितिचेत्, न—लोके'गौरयं, शुक्लोऽय'मितिसामानाधिकरण्यनिर्देशदर्शनेन तयोस्तादात्म्यं मन्यमानस्य प्रश्नानुवादरूपत्वेनाऽस्यभाष्यस्य शब्दार्थयोस्तादात्म्ये तात्पर्याभावात । 'नेत्याहद्रव्यंनामत'दितिसमाधानभाष्येणापि तादात्म्यज्ञानमेव निवार्यते, ततश्च

प्रष्टुस्तादात्म्यभ्रमो वारितो भाष्यकृता । एवमेव 'यत्तर्ही'त्यादिप्रश्नसमाधानभाष्यत्रयं तात्पर्यमिति न शब्दार्थयोस्तादात्म्यं भाष्यकृत्संमतम् । 'लोकेगौरयं शुक्लोय'मित्यादौ गोपदवाच्योऽयं, शुक्लपदवाच्योऽयमित्येवार्थः नतु गोपदाभिन्न इत्यवधेयम्[1] । यदपि मञ्जूषायामुक्तम्—'उदेतिसविता ताम्रस्ताम्रएवास्तमेतिच । संपत्तौचविपत्तौच महतामेकरूपता' इत्यत्र'ताम्रपदंविना न तादृशोबोधः, पदप्रकारकबोधादितिप्रकाशकृ'दिति, नतद्युक्तम्—तत्र'ताम्रपद'मित्यादिवाक्यस्यैवानुपलम्भात्, तत्रत्यप्रकाशग्रन्थतः'पदप्रकारकबोध'इत्यर्थस्यालाभाच्च तथाहि—तत्रतु 'अत्र रक्तएवाऽस्तमेतीति यदिक्रियते तदापदान्तरप्रतिपादितः सएवार्थो ऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति'इति वाक्यम्, स्थगयतीत्यस्यनिरुणद्धि इत्यर्थः झटितिनोत्पादयति प्रतीतिम्, निरोधश्च विलंबेनोपस्थितिजननम्, अतएव-प्रदीपे'प्रतीतिं व्यवदधीते'तिप्रकाशग्रन्थो व्याख्यातः । प्रकाशप्रदीपयोरयमभिप्रायः—यथा पूर्ववाक्ये येन पदेन प्रतिपादितः योऽर्थः, सएवार्थो वाक्यान्तरेपि तेनैवपदेनप्रतिपादितः । झटिति प्रतीतिविषयोभवति न तथा पदान्तरेण प्रतिपादितःसोऽर्थ, किंतु विलंबेन, अन्यइवप्रतीतत्वात्. तादृशप्रतीतिनिवृत्त्युत्तरं सएवार्थइति प्रतीतिर्जायतइति विलंबः, अन्यत्वप्रतीतौ पदान्तरप्रयोगोहेतुः, पर्यायत्वज्ञानं तन्निवृत्तौकारणम्, विलंबमसहमानःकवि स्तदेव पदं पुनःप्रयुंक्ते इति ।

अतएव—एवेवशब्दौ प्रायुंजातामुभौ. यदि पदप्रकारकत्वं प्रकाशकृदिष्टंस्यात् तदारक्तशब्दप्रयोगे तस्यप्रकारतयाभाने अर्थस्यभिन्नत्वेन'सएवे'त्युक्तिरन्यइवेत्युक्तिश्चाऽसंगतास्यात् प्रकारभेदात् अन्यत्वस्यस्पष्टत्वात् । किंच—एकरूपतायामुत्सेकाऽनुत्सेकयोरभावोहेतुः नतु—पदप्रकारकत्वम्, संपदिविपदिच उत्सेकाद्यभावएव महतामेकरूपतेति महापुरुषलक्षणमितिवदन्ति महान्तः । किंच-बोधे पदप्रकारकत्वांगीकारेपुनरुक्तदोष त्वोक्ति र्न संगच्छेत, समानार्थकपदान्तरप्रयोगेहि पुनरुक्तिरितिकाव्यप्रकाशकारादयः । यदि नागेशोक्तदिशा पदस्यप्रकारत्वं तदभिमतं, तदा अवच्छेदकभेदादर्थस्यभेदेन समानार्थकत्वाभावात्तस्य दोषत्वाऽप्रसक्तिः । किंच—'उक्तार्थानामप्रयोग'इतिबहुसंमतो न्यायोपि निर्विषयतामापद्येत, तत्तच्छब्दस्यप्रकारत्वे तत्तदर्थस्य भेदादुक्तार्थकशब्दस्यैव दौर्लभ्यात् । एतेन'स्वरूप'मितिसूत्रशेखरे'तज्जन्यबोधे प्रकारतयाभासमानस्य राजन्

1. "इहसर्वैनिर्दिष्टं गामभ्याज शुक्लां देवदत्त" इति...गामित्यकर्मेत्यादिभाष्यस्य 'गामितिपदवाच्यमेव कर्मेत्यादिकर्मणार्थं' इति अर्थवत्सूत्रोद्द्योतोऽपि पदपदार्थयोर्भेद एव संगच्छते ।

शब्दस्ये'त्याद्युक्तिः, 'शब्दालिङ्गितार्थस्यैवभाना'दिति पञ्चमीविभक्त्यर्थविचारे मञ्जूषोक्तिः अन्येषांशाब्दिकानामीदृशार्थकोक्तिश्च तथार्थकार्षमूलवचनाभावाच्चिन्त्या। ननु—बोधस्यपदप्रकारकत्वा भावे घटपदशक्तिग्रहवतः कलश इत्यनुव्यवसायप्रसंगः पदार्थस्यैकत्वात्, पदस्यप्रकारत्वेतु घटकलशपदार्थयोर्भेदात् न तथाविधानुव्यवसायप्रसंगइति चेत्. उच्यते—स्वाव्यवहितोत्तरत्वनिवेशेन पर्यायपदाद्बोधवारणवत् तादृशानुव्यवसायोऽपि सुशकवारणइति। किंच—घटपदशक्तिग्रहवतः तदुत्तरक्षणे कलश इत्यनुव्यवसायो न कस्यापि कदाचिदपि भवति, तादृशानुव्यवसायंप्रति तत्पदशक्तिग्रहस्य कारणत्वेन प्रकृते तदभावात्।

ननु—अर्थवत् शब्दोपि वृत्तिविषय'इति'कृत्तद्धिते'तिसूत्ररत्नग्रन्थे शब्दस्यापिशक्यत्वोक्तेः तस्यापिप्रकारतयाभानंयुक्तं शक्योपस्थितस्यार्थस्यकथंचिद्भानावश्यकत्वादिति चेत्, न-तस्यग्रन्थस्यानुकरणस्थले शब्दःशक्यइत्यर्थात्। किंच—शब्दस्यप्रकारत्वेनभाने तत्तच्छब्दप्रकारकतत्तदर्थस्यभेदावश्यंभावेन समानार्थकशब्दस्यैवाभावेन'एकार्थानामपि विरूपाणा'मितिवार्तिकं तद्भाष्यम्, सूत्राक्षरैरेववार्तिकार्थलाभप्रकारप्रदर्शकमनोरमादिकं चाऽसंभवदुक्तिकंस्यात। "नसोऽस्तिप्रत्ययोलोके यःशब्दानुगमादृते। अनुविद्धमिवज्ञानं सर्वंशब्देनभासते, ग्राह्यत्वं ग्राहकत्वंच द्वेशक्तीतेजसोयथा। तथैवसर्वशब्दानामेतेपृथगवस्थिते" इत्यादितुहरिवचनं न त्रिमुनिवचनमिति अनार्षमितिविभावनीयम्। हरिवचने इवेत्युक्तेःशब्दानुविद्धत्वं न वास्तवमिति प्रतीयते, अनुविद्धमेवेति कलायां सावधारण व्याख्यानं तु चिन्त्यमेव, तथा व्याख्याने भाष्याद्यनुग्रहाभावात्। अतो न शब्दप्रकारकत्वं शाब्दस्येतिवक्तुंशक्यम्। ग्राह्यत्वमनुकरणस्थले, ग्राहकत्वं तदितरत्र अस्तीत्येतावन्मात्रे तेजोदृष्टान्तः, नतु-एकत्रयुगपदुभयसत्त्वे इतिवचनतात्पर्यम्। किंच-स्वंरूपमितिसूत्रएव'मन्त्रादिसहचरितोयोऽर्थ'इतिभाष्यप्रतीकमादाय'साहचर्यंच शब्दानुविद्धस्यैवार्थस्यावगमादिति कैयटोऽव्याख्यत्, तत्र नागेशः 'शब्दानुविद्धस्यैवेति प्रतीकमादाय'नसोऽस्ती'तिहर्युक्तेरितिभावइति कैयटंव्याख्याय'तद्बोध्यत्वेन 'सहचरितत्वमित्यन्ये'इतिभाष्यभावमन्यथा ऽवर्णयत्। अत्रेदमवधेयम्—कैयटोक्तार्थे हरिवचनं प्रमाणमुपन्यस्य तत्रार्थे ऽविश्वासेन भाष्यस्य भावान्तरं वणयता, शब्दानुविद्धत्वं न मुनित्रयाऽभिमतमित्युक्तं भवति, तत्र तथावदन् मञ्जूषायां शाब्दे, प्रत्ययसामान्येच, शब्दानुविद्धत्वं कथं सिद्धान्तयतीति विभाव्यं सूरिभिः।

प्रत्यये भासते शब्द इति नोवाच भाष्यकृत् ।
न सोऽस्तिप्रत्यय इतिवचनं तु न पाणिनेः ॥ १ ॥
अतस्तदनु॒ारेण यः शब्दे शब्दभासनम् ।
वदत्ययं पाणिनीयवर्गे न गणनां भजेत् ॥ २ ॥

---

## (४८ विकल्पस्य अवास्तवत्वकल्पकत्वनिरासः)

यदत्र मञ्जूषायामभिहितं(व्या.४५४) वस्तुतत्त्वे(वास्तवत्वे) विकल्पायोगेन प्रातिपदिकार्थविषये 'एकंद्विकंत्रिकंचेतिचतुष्कंपञ्चकंतथा' इतिवादि विकल्पानुपपत्तिः, अतएव–[1]अनेनएकत्ववस्तुनि अनेकपक्षोपन्यासो व्यवहारोपपादकपदार्थानामवास्तवत्वं सूचितं'मिति ग्रन्थेन वस्तूनामवास्तवत्वमिति। अत्रोच्यते-तथा=तथाभूतेब्रह्मणि आसंसारं प्रसिद्धानुभवेभगवति भवे सन्देहःकुत'इतिकुसुमाञ्जलावुदयनाचार्येणग्रन्थारम्भेकृतनाना-कोटिकविकल्पानुवादेन, 'यंशैवाःसमुपासते शिवइतिब्रह्मेतिवेदान्तिनो, बुद्धो बौद्धइति प्रमाणकुशलाःकर्तेति नैयायिकाः। अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वांच्छितफलं त्रैलोक्यनाथो हरिः'इतिकेनचिद्विद्वत्कविशेखरतिलक कृतहरिविषयकशिवत्वादिप्रकारकविकल्पानुवादेन, तत्त्वभूते ब्रह्मणि ब्रह्मजिज्ञासमानानां सगुणत्वनिर्गुणत्वादिविकल्पोदयेन, लोके पुरोवर्तिनि पदार्थे'स्थाणुर्वा पुरुषोवे'त्यादि-विकल्पोदयेनच, शास्त्रकारैःस्वसमीहितमर्थं सिद्धान्तयितुं तदङ्गतया विकल्पोल्लेखनेन, सूत्रकृता पाणिनिना'अवङ्स्फोटायनस्ये'(पा. सू. ६-१- )त्यादिसूत्रेषु प्राचामाचार्याणां नामनिर्देशेन अवङादिकार्येषु नानापक्षसूचनेन, 'विप्रतिषेधेपर' (पा. सू. १-४-२) मित्यत्रभाष्ये विधिनियमपक्षयोरुभयोरुपन्यासेन, धर्मशास्त्रेषु कालदेशवयोवस्थाभेदेन गुरुलघुदण्डप्रायश्चित्तविधानेन, पूर्वतन्त्रेव्रीहियवपक्षयोः षोडशिग्रहणाऽग्रहणपक्षयो-रुपन्यासेन, वैद्यकेएकस्यरोगस्या ऽनेकचिकित्साप्रदर्शनेन, गीतायांद्वादशे संसारसागर-समुत्तारणसमर्थभगवत्प्रसादसंपादकभगवच्चित्तत्वाद्यनेकोपायप्रदर्शनेनच, एकत्वविषये विकल्पो विविधपक्षाश्चोपन्यसनीयाः शास्त्रकारैःस्वसिद्धान्तस्थापनायेत्येतत् आचार्यशैलीति सर्वेषां विदितचरमेव। तत्रक्वापि विषयाणामवास्तवत्वानुभवो नोदेति कस्यचिदपि विदुषः।

---

1. शुक्लादयोगुणाएके, अथवा—एके निरवयवा, अथवा—नानाशौक्ल्या'दीति अतिशायने तमबिष्ठना'(पा. सू-५-३)वितिसूत्रभाष्येणेत्यर्थः।

यदि विकल्पादिमात्रेण विषयाणामवास्तवत्त्वं स्यात्. अवास्तवानां विषयाणांविचारानर्हत्वेन तद्विचारपरशास्त्रस्यैव वैयर्थ्यं स्यात् । न दृश्यतेहि लोके प्रेक्षापूर्वकारी अवास्तवशशविषाणविचाराय प्रवर्तमानः पुरुषः ।

ननु—एकत्वादिविकल्पःप्रातिपदिकार्थविषयक इतितन्निष्ठोभवति नतु वाचकत्वनिष्ठःअतोहेतोः पक्षवृत्तित्वाभावेन वास्तवत्ववाचकत्वरूपसाध्यसाधको नस्यादितिदोषः कस्मान्नोक्त इति न शङ्क्यम्. विकल्पविषयार्थनिरूपितत्वसंबन्धेन, वाचकत्वं किमेकार्थनिरूपितं वा, अर्थद्वयनिरूपितंवेति विकल्पपर्यवसाने वा, विकल्पस्यवाचकत्ववृत्तित्वं सुसंपादमिति समाधातुं शक्यमिति स नोक्तः ।

इदंबोध्यम्—उक्तस्थलेषु, [1]अङ्केपि शशङ्किरे 'अग्निहोत्रं जुहोतीत्यादौ किमग्निपदं कर्मनामधेयम्, उत अग्निरूपदेवतापरम्, आकाशशब्दःकिंप्रसिद्धाकाशपरः, अथपरमात्मपरः; इतिकर्मब्रह्ममीमांसकानां यवहारे, 'स्थाणुर्वापुरुषोवेत्यादिलौकिकव्यवहारेच, कस्यचिदपि कस्मिंश्चिदपिपदार्थे ऽवास्तवत्वज्ञानानुदयेन विकल्पादिकं न वस्तुनोऽवास्तवत्वसाधकम्, शास्त्रकाराश्चस्वस्वशास्त्रेष्ववास्तवमर्थं न प्रतिपादयन्ति, किंतु प्रबलेन हेतुनास्वसिद्धान्तं स्थापयन्तः परपक्षंनिवर्तयन्ति, तेन—प्रकारान्तरं प्रकृते न संभवतीत्येव तलतलधीमतां धीरुदेति । श्रीव्यासपाणिनी अपि क्वापि स्वतन्त्रे ऽवास्तवमर्थंनोक्तवन्तौ, अतोमायिकमेवार्थं व्यासपाणिनी अब्रूतामितिवचनं प्रामाणिकैर्न श्रद्धेयमित्यलम् ।

विकल्पविषये लोकेऽसत्त्वबुद्धिर्न जायते ।
अतो विकल्पो वस्तूनां नासत्त्वं साधयेदिति ॥ १ ॥

वदन्ति वस्तुतत्त्वज्ञास्तस्मादेकत्र वस्तुनि ।
विकल्पस्तदसत्त्वस्य कल्पने न क्षमो भवेत् ॥ २ ॥



1. 'जलनिधेःपङ्कं परेमेनिरे सारङ्गंकतिचिच्च संजगरिरे भूच्छायमैच्छन् परे । इन्दौ यद्दलितेन्द्रनीलशकलं श्यामं दरीदृश्यते तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे'इति श्लोकशेषः । 2. अनेनपामरत्वंतेषामभिप्रैति । 3. अनेनोन्मत्तत्वं तेषामितिसूचितम् ।

## (४९ आर्षवचसामपारमार्थिकत्वोक्तिनिरासः)

यदभिधीयते मञ्जूषायां(व्या. ४१६)यद्यपि ऋषीणां दर्शनं तत्त्वविषयं भवति, तत्त्वभूतेन वस्तुना व्यवहारासंभवात् व्यवहारकाले ते ऽदृष्टतत्त्वसदृशाएव नानाप्रकारैर्व्यवहरन्ति, इति न तद्वचसापि पदपदार्थसत्यत्वं मन्तव्य'मिति । अस्याऽक्षरार्थव्याख्यानतोऽवगम्य सन्तोष्टव्यम् । तदीयैरेव अनेनच सर्वेआर्षाग्रन्था अपारमार्थिकवस्तुप्रतिपादकाइतिमन्यते नागेशइति वेदितुं प्रभवन्ति सर्वे । आर्षाणामेवैवंविधत्वे, किंवक्तव्यं पौरुषेयग्रन्थानाम्, एवंच सर्वेपिग्रन्था अपारमार्थिकाएवेति तद्भावः । अत्र दर्शनपदेन ज्ञानग्रहणे ज्ञातार्थविरुद्धार्थप्रतिपादकत्वा त्तेषांग्रन्थस्य आप्तिमूलकत्वाभावेनाऽग्राह्यत्वंस्यात् । यदि तेनपदेन तदीयशास्त्रस्य ग्रहणेतु एकस्यैवदर्शनस्य तत्त्वभूतवस्तुविषयकत्व मतथाभूतवस्तुविषयकत्त्वमित्येतद्विरुद्धम् । नच-ब्रह्मसत्यम्, तदितरेऽसत्या इतितद्ग्रन्थतात्पर्यमिति न विरोधइति वाच्यम्-तत्तद्दर्शने तादृशोक्त्यदर्शनात् । यत्रदर्शने ब्रह्मप्रतिपाद्यते, तत्रब्रह्मातिरिक्ततद्दर्शनसाधनानि असत्यानीति न प्रतिपादितम् । जैमिनीयादिद्दर्शनेषु ब्रह्मनिरूपणमेव नेति एवंविभागयोगः । अतःसर्वेषुशास्त्रेषु प्रतिपादितानि सर्वाण्यपि सत्यान्येव । किंच-मनुयाज्ञवल्क्यप्रभृतिमुनि प्रणीतस्मृतीनाम्, श्रीमद्रामायणभारतयोरितिहासयोः, श्रीभागवतादिपुराणानाम्, वोधायनापस्तंबकात्यायनाश्वलायनगोभिलप्रभृतिमहर्षिप्रणीतकल्पसूत्राणाम्, व्यासजैमिनिप्रणीतब्रह्मकर्ममीमांसयोः, गौतमादिकृतन्यायसूत्रादीनाम्, कपिलपतञ्जलि प्रभृति प्रणीतसांख्ययोगादीनाम्, वाक्यपदीयस्य, परमार्थसारग्रन्थस्य, चरकस्य, पातञ्जलमहाभाष्यस्य, तत्तदनुयायिमहर्षिदेश्यतत्तद्ग्रन्थव्याख्यातृवचनानांच अतत्वार्थप्रतिपादकत्वं व्यवस्थाप्य, तादृशभारतभागवतहरिवंशमानवादिस्मृतिग्रन्थगतानि वचनानि स्वसमीहितस्फोटस्वरूपादिसाधने प्रमाणतयोपन्यस्य स्फोटादिप्रमेयजातं साधयतीति चित्रमेतत् । इदंबोध्यम् तुल्यन्यायेन मामकस्यापि ग्रन्थस्य अपारमार्थिकप्रतिपादकता स्यात् निश्चिते तथामामकीने अतत्त्वावेदकप्रमाणमूलकेग्रन्थेकथं प्रेक्षावतां प्रामाण्यबुद्धिरुदयेत, कथं वा वचनेममविस्रम्भः प्रामाण्यं, स्वस्मिन्नाप्तत्वबुद्धिः, उपादेयताबुद्धिश्च स्वग्रन्थेकथंवा मां सब्रह्मचारिणःपण्डितमतल्लिका मध्येसभं पण्डितगणे पठेयुरित्यनालोच्यैव एवमवादीदयमितिसुकृतिनो निर्णयन्ति । सर्वेषामार्षवचनानामपारमार्थिकार्थप्रतिपादकत्वे ऋषीणामसत्यवादित्वे च ब्रह्मस्फोट प्रतिपादकानां ग्रन्थानाम्, आत्मैकत्वप्रतिपादकपरमार्थ-

सारस्य चरकादेश्च तथात्वेन ब्रह्मादीनां कथं पारमार्थिकत्वसिद्धिरस्य मत इतिविभाव्यम् ।

ऋषिवाक्यं मायिकार्थं मृषयो ऽसत्यवादिनः ।
इत्येवं वदता ऽसत्यवादि वाक्यबलादयम् ॥ १ ॥

साधितः स्फोटरूपोऽर्थः कथं प्रामाणिको भवेत् ।
समाजं मुनिवर्याणां दूषयन्नेष पण्डितः ॥ २ ॥

इति प्रमाणशरणैः सुविभाव्यं सुधीजनैः ।
कथं मध्येसभं विद्वद्गणेऽगण्यत कोविदैः ॥ ३ ॥



## (५० महतां भ्रान्तत्वोक्तिनिरासः)

यदत्र मञ्जूषायां (व्या. ४८५ पु.) 'नव्यनैयायिकग्रन्थे प्रकृतिप्रत्ययार्थविचारो व्याकरणवासनावासितान्तःकरणतया तत्रवास्तवत्वभ्रमेणेतिबोध्य' मितिग्रन्थेन, पाणिनेरन्येषांचावास्तवप्रकृतिप्रत्यार्थप्रतिपादकत्वम्, तदुपजीव्य तदर्थविचारेप्रवृत्तानां मणिदीधितिग्रन्थकृतां गङ्गेशोपाध्यायरघुनाथभट्टाचार्यप्रभृतीनां भ्रान्तत्वम्, 'तेविभक्त्यन्ताः'पदम् व्यक्त्याकृतिजातयः पदार्थ'(गौ. न्या.)इत्यादिना गौतमेन प्रकृतिप्रत्ययार्थानामवास्तवत्वं ध्वनितमपि तेषां स्वग्रन्थे ऽवास्तवत्वानुक्त्या तेषां स्वाचार्योक्तौ वविश्वासम्, तदुक्तितात्पर्यानभिज्ञत्वंच प्रकाशयति नागेशः । अत्रवक्तव्यम्—'वृद्धिरादैजितिसूत्रे भगवान् भाष्यकारः संभावितप्रयोगनियमादिपक्षं निरस्य 'संज्ञासंज्ञिभावोपि सामर्थ्यादेव सिध्यतीति संज्ञाधिकारं कुर्वन्तं वररुचिं बोधयन्, 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म तत्राऽशक्यं वर्णेनाप्यनर्थकेन भवितुं, किंपुनरियता सूत्रेणे'तिब्रुवाणः, प्रमाणभूत इत्यनेन आचार्यस्य यथार्थवक्तृत्वादिगुणं, प्रतारकत्वादिदोषाभावं, दर्भपवित्रपाणिरित्यादिना परमास्तिकत्वम्, 'महताप्रयत्नेने'त्यनेन उन्मादाद्यवस्थारूपदोषाभावं, प्रस्तुतकार्यैकव्यग्रचित्तत्वम्, शास्त्रस्यच प्रतिपादितगुणवदाचार्यप्रणीतत्वेन [1]आदावुक्तरीत्या महाप्रयोजनवत्त्वम्, तस्मै प्रयोजनाय सर्वैरवश्योपादेयत्वंच सूचयन्, सूत्रमिदं'दशदाडिमानि षडपूपा'इत्यादिवत्

1. पस्पशान्हिके ।

न निरर्थकोवर्णराशिः, अतः अन्येषां पक्षाणामसंभवात्, सामानाधिकरण्येन निर्देशाच्च आदैचोवृद्धिसंज्ञका भवन्तीतिवाक्यार्थः पर्यवस्यतीति सूत्रकृत आचार्यस्याशयमाविष्कृत्य सूत्रस्य नैरर्थक्यशंकां परिहरतिस्म। एतादृशं पाणिनीयं शास्त्रमवास्तवार्थप्रतिपादक-मिति वदितुं कोवा प्रभवेत्।

एवमेव सर्वेमहर्षयः तदनुयायिनोऽन्येचाचार्याः, प्राणभृत्सु परमानुग्रहेण 'अथाऽतःसामयाचारिकान् धर्मान् व्याख्यास्यामः, अथाऽतो दर्शपूर्णमासौ व्याख्यास्यामः' इत्यादिभिः शास्त्रोक्तब्राह्मण्यादिपरमप्रयोजनलाभाय वास्तवश्रौतस्मार्तधर्मानुपदिशन्त्या-पस्तम्बादय इति तत्तद्व्याख्यातृवचनैस्सर्वेपि जानन्त्येव। कदाचिदपिते महर्षयस्त-त्कल्पाश्च अवास्तवमर्थं वदन्तीति न वदेयुः शब्दप्रमाणकाःकविलोकाः। नागेश-स्तावत् वाक्यपदीयपरमार्थसाराद्यनार्षग्रन्थसन्ततपरिशीलनजन्यसंस्कारकलुषितचेताः निरङ्कुशो महतांमहर्षीणां वचन मखिल मवास्तवार्थप्रतिपादकम्, तदनुसारेण विषयं व्यवस्थापयतां भ्रान्तत्वं वदन् भ्रान्तएव भ्रान्तजनै र्महनीयः। नहि लोके कश्चि-त्प्रेक्षापूर्वकारी अवास्तवमर्थं प्रतिपादयितुं महान्तं यत्नमास्थितो दृश्यते। नापि लोके कश्चिद्विवेकी जनः तत्साधनसाधनपरमात्मानुग्रहकाम्यया चिरकालं तपस्यति। नैव दृश्यते लोके कविलोकःकश्चित् शशविषाणादिकं अवास्तवमर्थं मीमांसमानः। ननुभोः किमेवंवदन्ति भवन्तः, ऐन्द्रजालिका अवास्तवमेवार्थं दर्शयितुं क्षुद्रदेवतामुपासते यतन्तेच तदर्थं विशेषेण। तद्विषयकविचारंच वितन्वते इति सर्वलोकविदितमिदमिति चेत्, उच्यते—ऐन्द्रजालिकेन प्रदर्शितं वस्तु नावास्तवमिति पञ्चशिखाचार्या वदन्तीति पूर्वं निरूपितम्। अचिरकालत्वमात्रं तस्य नावास्तवत्वमित्यन्येप्याचार्या मन्यन्ते। ऐन्द्रजालिकेन समाराधितदेवतानुग्रहसंपादितशक्तिविशेषेण समानीय दत्तं फलादि भक्षयन्ति जना इत्यर्थक्रियाकारित्वंच तस्येति नावास्तवत्वमित्येके इति।

किंच—'नामरूपे सत्यं ताभ्यामयं प्राणःछन्नः, प्राणावै सत्यं तेषामेषसत्य'मिति श्रुत्यन्तरे ब्रह्मातिरिक्तसमस्तनामरूपप्रपञ्चजातस्य विकारवर्गस्य सत्यत्वोक्तेः नागेशोक्त-मयुक्तम्—न चेयं श्रुतिर्मायिक सत्यत्वपरेति वाच्यम्—श्रुतौ तथार्थकपदाश्रवणात्। श्रुतिरेषा भूमविद्यायां (छा. ७-१७) 'यदावै' इतिवाक्यव्याख्यावसरे शांकरभाष्ये उदाहृता। अयमत्र विमर्शकानामाशयः—मञ्जूषायां तत्रतत्र प्रमाणत्वया गौतमादीनां

वाक्यान्युदाहृत्य अनेनावास्तवत्वं सूचितवान् । ध्वनयति, ध्वनितमित्यादिना व्यवङ्ग्य-मर्यादया गौतमादीनां वस्तुनोऽवास्तवत्वे तात्पर्यमितिवर्णनात् तदीयेषुग्रन्थेषु तादृशार्थकं स्पष्टवचनं नास्तीत्येव सिध्या वस्तुनो मायिकत्वं न गौतमादिसंमतमिति । तत्र गौतमेन प्रकृतिप्रत्ययार्थानामवास्तवत्वं ध्वनितमित्येतन्न युक्तमिति यथाभाष्यं तदीयसूत्रार्थ-निरूपणेन निरूपयामः । तथाहि—'ते विभक्त्यन्ताः पदम् (न्या. सू. १ अ. २-आ. ६०.) व्यक्त्याकृतिजातिसंनिधौ उपचारात् संशयः' (६१) इतिसूत्रक्रमः । अत्र—पूर्वप्रकरणेन वर्णानां नित्यत्वाऽनित्यत्वं विचार्य पदस्वरूपपदशक्यनिरूपणाय इदंसूत्रद्वयं प्रवृत्तम् । अ[1]स्तु वर्णानां नित्यत्वमनित्यत्वं वा, पदान्येव लोकेऽर्थबोध-नाय प्रयुज्यन्ते, किं तल्लक्षणमिति जिज्ञासायां सुबन्तंतिङन्तंच पदमिति तल्लक्षणमित्याद्य-सूत्रतात्पर्यम्, द्वितीयस्यतु जात्यादिषु वाच्यत्वं निर्णेतुं किं सर्वं सर्वत्र वाच्यम्, उत अन्यतममिति संशयोत्पादकमिति तात्पर्यमिति तद्भाष्यविदो वदन्ति । इदंच तत्रभाष्यम् ते यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति,·(६०) तदर्थे—अविनाभाव-वृत्तिः संनिधिः, अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते, तत्र न ज्ञायते किमन्यतमः पदार्थः, उत सर्वे(६१)इति । अत्रसूत्रभाष्याभ्यां प्रकृति प्रत्ययार्थस्याऽवास्तवत्वं कथं ध्वनितमिति विभावयन्तु सुधियः । नच—विकृता इत्यस्य विकारंप्राप्ता इत्यर्थेन विकारसामान्यस्याऽवास्तवत्वमिति नागेशसिद्धान्तेन तथोक्तमिति वाच्यम्—विकारसामान्यस्यावास्तवत्वमिति नैयायिकानां सिद्धान्ताभावात् तत्सिद्धान्तानुसारेणैव हि तद्ग्रन्थार्थो वर्णनीयः । अन्यथा—सोऽर्थो गौतमाभिमतः कथं स्यात् । वस्तुतः—शास्त्रविहितौकारादिकार्यविशिष्टा इति तदर्थः ।

प्रकृतिप्रत्ययार्थेषु वास्तवत्वधिया यदि ।
कुर्वन्विचारं भ्रान्तः स्यात् भवेद्भ्रान्तश्च भाष्यकृत् ॥ १ ॥
तद्विचारं प्रकुर्वाणो भ्रान्त एव भवानपि ।
भ्रान्तोक्तिंच समाश्रित्य भ्रान्तेन भवता कृतः ॥ २ ॥
सिद्धान्तः कथमादर्तुमर्हः स्यादिति चिन्त्यताम् ।
कानने चन्द्रिकेव स्या न्निष्फलो विद्धि ते श्रमः ॥ ३ ॥



1. सूत्रद्वयतात्पर्यमाह— अस्त्वित्यादिना ।

## (५१ पाञ्चरात्रविचारः)

यच्चोक्तं मञ्जूषायां प्रोक्तार्थकतद्धितार्थविचारे—'अत्यन्तमलिनानांतु प्राणिनां वेदमार्गतः। पाञ्चरात्रादयो मार्गाःकालेनैवोपकारका' इतिसूतसंहितावचनव्याख्यावसरे (व्या. पु. १५३५)वेदमार्गहीनानामत्यन्तमलिनानां पाञ्चरात्रादयो मार्गा इति उदितानुदितहोमवदधिकारिभेदेन प्रामाण्यं तेषामिति। अत्रोच्यते-एवंविधार्थकवचनस्य पाणिनितन्त्रेऽनुपलम्भात् भाष्य एवंविधव्यवस्थाऽदर्शनाच्चापाणिनीयमिदम्। भगवान् व्यासोपि महाभारते शान्तिपर्वणि 'पाञ्चरात्रस्य कृत्स्नस्य वक्तातु भगवान् स्वयम् (३४१-६८) पाञ्चरात्रविदो येतु यथाक्रमपरा नृप। एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै' (३५१)इत्यादिना वक्तातु पाञ्चरात्रस्य भगवान् नारायणः, तन्मार्गनिष्ठास्तु भगवत एकान्तभक्ता भवन्तो, भगवतो निरतिशयपरमप्रेमभाजनभूता लभन्ते ऽभीष्टं फलमिति प्रतिपादयन्, उपरिचरादयो विशुद्धात्मानो वेदमार्गाभिरताः सात्वतं (पाञ्चरात्रं) विधिमास्थाय भगवन्तं नारायणमाराधयन्त ईप्सितं फलमलभन्तेति इतिहासकथनेन, 'श्रुत्वा ब्रह्ममुखाद्रुद्रः स देव्यै कथयन् पुनः। नारायणानुशिष्टा हि तदा देवी सरस्वती। विवेश तानृषीन्त्सर्वान् लोकानां हितकाम्यया' (भार. शा. ३४३) इत्यादिना ब्रह्मादीनां प्रोक्तृत्वश्रोतृत्वनिरूपणेन, वेदवेदिनां तपस्विनां महर्षीणां परमात्मानुग्रहेण पाञ्चरात्ररूपसरस्वतीप्राप्तिकथनेनच, वेदमार्गेण अहीना एव पाञ्चरात्रेऽधिकारिण इति स्पष्टमब्रवीत्। तत्र ब्रह्मादय उपरिचरादयश्च मलिना वेदहीनाश्चेति कस्य वा वाणी वक्तुं प्रवर्तेत। यत्रक्वापि तन्त्रमिदं हीनाधिकारिकमिति वाणी यदि दृश्यते, सातु मोहनार्थेति मन्तव्यम्, तथोक्तिस्तु तत्राऽसतां प्रवृत्तिर्माभूदिति तात्पर्येण।

ननु—'चतुर्षु वेदेषु परंश्रेयोऽलब्ध्वा (पुरुषार्थमलभमानः)शाण्डिल्य इदं शास्त्रमधिगतवा'निति शाण्डिल्यस्य वेदानादरोक्तेः वेदनिन्दनावगमेन पाञ्चरात्रं हीनाधिकारिकमिति चेत्, उच्यते—नात्र श्रेयसोऽप्राप्तिवचनं वेदानादरं गमयति, किंतु अधीतसर्ववेदस्यापि न तावन्मात्रेण फललाभः, अपितु 'वेदार्थपूरकं ज्ञेयं पाञ्चरात्रं यतोऽखिलम्। तत्संक्षेपश्च गीतेयं तस्मान्नास्याःसमं क्वचित्'इतिब्रह्मवैवर्ते, 'वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन चैव हि। दृश्यो ऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि'इति वाराहे चोक्तदिशा पाञ्चरात्राभ्याससहितेनैव वेदविचारेण फलप्राप्तिरिति गमयति। अतोऽत्र वेदनिन्दा

प्रतीयते इति न शक्यं वक्तुम्। 'न हि निन्दे'तिन्यायेन शास्त्रे कृतसमाधानं तु शङ्कित्राशयानुरोधेन।

किंच–विद्यान्तराधिगमनं तदुपदेशो वा न विद्यान्तरनिन्दायां पर्यवस्यति। लोकवेदयोः तथाऽदर्शनात्। नहि लोके व्याकरणाध्ययनोपदेशौ न्यायादिनिन्दातात्पर्यकौ दृष्टौ। वेदेपि न तथा दृश्यते। तथाहि-काठके इन्द्रभरद्वाजसंवादे 'ए[1]हिइमं विद्धि। अयंवैसर्वविद्येति। (का. १-प्र. ४३)तस्मैहैतमग्निं सावित्रमु[2]वाचे'ति भारद्वाजायेन्द्रकृतसावित्रविद्योपदेशो न सर्वेषां वेदानां निन्दां गमयति, भाष्यकारैश्च तत्र न तथा व्याख्यातम्। छान्दोग्येच सप्तमे नारदसनत्कुमारसंवादे साङ्गसरहस्यसर्ववेदाध्ययनवतो नारदस्य'नामविदेवास्मि नात्मवि'दित्यात्मज्ञानरूपश्रेयोऽलाभश्रवणेऽपि न तेन वेदाध्ययननिन्दा गम्यते। नापि भाष्यकारा आचार्यास्तथा व्याचचक्षिरे। किंच–'वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ। (३४३-२१) ऋग्यजुःसामभिर्जुष्ट मथर्वाङ्गिरसैस्तथा (४१) इदंमहो[3]पनिषदं चतुर्वेदसमन्वितम् इत्यादिना भारते शान्तिपर्वणि सर्ववेदसहितस्यैव पाञ्चरात्रस्य ऋषिभिः[4]कृतत्वोक्तेः, 'सर्वे प्रमाणंहि यथा तथा तच्छास्त्र मुत्तमम्। भविष्यति प्रमाणंवै एतन्मदनुशासन'(३४३-४१) मिति भगवत्सृष्ट पदार्थान्तराणामिव पाञ्चरात्रस्य प्रामाण्याभिधानाच्च, 'भारतःपञ्चमोवेद'इति पञ्चमवेदत्वेन स्मृतभारतविरुद्धवचनं प्रमाणमास्थाय पाञ्चरात्रस्य वेदामूलकत्वेनाप्रामाण्यम्, हीनाधिकारिकत्वेन वा प्रामाण्यमिति कल्पनमयुक्तम्। वेदविरुद्धस्मृतेरप्रामाण्यवत् भारतविरुद्धसूतसंहितादिवचनानामप्रमाणत्वात्। एतेन-सूतवचनोदाहरणेन वेदहीनाधिकारिकत्वमिति मञ्जूषायां कृतनिर्णयः, तत्त्वकौस्तुभे, तन्त्राधिकारनिर्णयेच भट्टोजीदीक्षितकृतः पतिताधिकारिकत्वनिर्णयः, पाञ्चरात्रमार्गनिष्ठानां पाषण्डित्वनिर्णयश्च, एवंजातीयकोऽन्यकृतनिणयश्च, नादर्तव्यः। भारते ऽधिकारितया निर्दिष्टानां ब्रह्मादीना-

1. 'तंह त्रीन् गिरिरूपानविज्ञतानिव दर्शयांचकार तेषां हैकैकस्मान्मुष्टिनाऽऽददे। सहोवाच, भरद्वाजेत्यामन्त्र्य। वेदावा एते। अनन्तावैवेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथतइतरदननूक्तमेवे'ति पूर्ववाक्यम्। 2. 'तंस विदित्वा। अमृतो भूत्वा। स्वर्गं लोकमियाये'त्युत्तरवाक्यम्। अत्रात्मज्ञानं विद्याफलं स्वर्गप्राप्तिश्च। 3. पाञ्चरात्रम्। एतेन पाञ्चरात्रस्य वेदमूलकत्वाभावेन अप्रामाण्यमिति तन्त्राधिकारनिर्णयादौ भट्टोजीदीक्षिताद्युक्तमपास्तम्। 4. कृतत्वं प्रकाशितत्वम्, अतो नारायणकृतत्वोक्तिविरोधो न।

मुपरिचरादीनां, शाण्डिल्यस्यच ब्रह्महत्यादिपातित्याभावात्, वासुदेवभक्ताग्रेसरतया तेषां पाषण्डित्वाभावाच्च । 'उत्पत्त्यसंभवा' (ब्र. सू. २-२-४२) दित्यादिचतुस्सूत्रीं पाञ्चरात्रनिषेधपरतया योजयद्भिः श्रीशङ्कराचार्यैरुपबृंहणतया सूतवचनादीनामनुदाहरणात् प्रामाण्यसन्देहाच्च । अथवा—ये जनाः स्वभावतो भगवतो नारायणस्य परत्वं न सहन्ते, तथाविधानामसतां नारायणतद्भक्तप्रद्वेषिणां पाञ्चरात्रे महाशास्त्रे सुदृढामप्रामाण्यबुद्धिमुत्पाद्य तत्राऽप्रवृत्तये प्रवृत्ताः पाञ्चरात्राप्रामाण्यवादिन्यः स्मृतय इति जानीहि ।

य[1]त्तु—'वैदिक स्तान्त्रिको मिश्र इति मे त्रिविधो मखः । त्रयाणामीप्सितेनैव विधिना मां समर्चये' (भाग. ११-२७-७)दितिश्लोकोक्तमिश्रपूजायां 'पतितब्राह्मणादयस्तावन्मिश्रेऽधिकारिणः, प्रायश्चित्ते प्रवर्तमानानां सन्ध्यावन्दनाधिकारवत् तन्त्रोपात्तवैदिकमन्त्रप्रति[2]प्रसव'इति । तन्त्राधिकारनिर्णये उक्तम् । अत्रेदं चिन्त्यम्—किमयं पतितः कृतप्रायश्चित्तः, उत अकृतप्रायश्चित्तः । नाद्यः-'तस्य स्ववर्णाश्रमोचितकर्माधिकारसिध्या वैदिकपूजायामेव प्रवृत्तिसंभवेन मिश्रे प्रवृत्तिप्रसक्त्यभावात् । न द्वितीयः—तस्य पूजायामनधिकारात्तस्य तत्राप्रवृत्तेः । सन्ध्यावन्दनदृष्टान्तेन तन्त्रोपात्तमन्त्रप्रतिप्रसव इतितु न युक्तम्, प्रायश्चित्तस्य विधानेन विहितप्रायश्चित्तकर्मानुष्ठानयोग्यतासिध्यर्थं सन्ध्यावन्दनस्य प्राप्तावपि'द्विजातिकर्मभ्यो हानिःपतनमिति पातित्यलक्षणात् द्विजातिकर्मस्वन्तर्भूतपूजाया अ[3]प्राप्तेः, प्रायश्चित्तविधिवत् 'पतितःपूजांकुर्या' दितिपूजाविधेरभावात् । प्रत्युतकर्महानिरेवोक्ता मिताक्षरे प्रायश्चित्तप्रकरणे 'शिरःकपाली' (४३) इतिश्लोकव्याख्याने'द्विजातीनामध्ययनमिज्यादानानाम्, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः इत्यादीनामेव व्रतचर्यानङ्गभूतानां द्विजातिकर्मणां हानिरिति । अत्र इज्यापदमग्निहोत्रादिभगवदाराधानान्तदेवतायजनपरम् । य[4]दप्युक्तम्—'स्त्रीणामुपनयनाध्यापनादीनां कल्पान्तरे सत्त्वाभिधानान्निबन्धेषु, तदधिकारिकं मिश्रपूजनं तासामागमेऽधिकारोक्तेरिति, तदतिस्थवीयः-कृतोपनयनानां स्त्रीणां वेदमन्त्रपाठा दावधिकारसद्भावेन वैदिकपूजायामेव प्रवृत्तिसंभवात् । 'कृतोपनयनानामपि नारीणां वैदिकहरिपूजने नाधिकार'इतिनिषेधादर्शनात् । एवंच पूजात्रैविध्यकथनवैयर्थ्यं स्यात् । नच त्रैवर्णि-

---

1. तत्त्वकौस्तुभे तन्त्राधिकार निर्णयेभट्टोजीदिक्षितोक्तमिति शेषः । 2. निषिद्धस्य प्रकारन्तरेणाभ्यनुज्ञानं प्रतिप्रसवः । 3. मन्त्रपाठप्रतिप्रसवो दूरतोऽपास्त इत्यपिबोध्यम् । 4. तत्त्वकौस्तुभादौ ।

कविषयत्वेपि त्रिभागवैयर्थ्यं तदवस्थं, सर्वेषांतेषां वेदाधिकारात् वैदिकार्चनेऽर्हत्वादिति वाच्यम्—कालदेशावस्थानुसारेण अवश्यं संक्षेपेण विस्तारेणवाऽऽराधनं कार्यमिति बोधने तात्पर्येणाऽवैयर्थ्यात् । भगवदाराधनाऽकरणे प्रत्यवायश्रवणेन तत्परिहाराय तस्या-वश्यकर्तव्यत्वात् । वैदिकपूजां कर्तुं कालाद्यभावे संक्षिप्ता मिश्रपूजा कार्येति तात्पर्यम् । दीक्षितोक्तार्थो व्यासानभिमत इति स्पष्टप्रतिपत्तये भागवतश्लोकानेवोदाहरिष्यामः—उद्धव उवाच—क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो । 'यस्मात्त्वां ये यथार्चन्ति सात्त्वाः सात्वतर्षभ । एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् । नारदोभगवान् व्यास आचार्यो ऽङ्गिरसः सुतः ॥ २ ॥ निःसृतं ते मुखाम्भोजा द्यदाह भगवानजः । पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥ ३ ॥ एतद्वै सर्वव[1]र्णाना माश्रमाणां च संमतम् । श्रेय[2] सामुत्तमं मन्ये स्त्रीशूद्राणांच मानद ॥ ४ ॥ एतत्कमलपत्राक्ष कर्मबन्ध-विमोचनम् । भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥ श्रीभगवानुवाच—न ह्यन्तो ऽनन्तपारस्य कर्मका[3] ण्डस्य चोद्धव । संक्षिप्य वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥ वैदिक स्तान्त्रिको मिश्र इति मे त्रिविधो म[4] खः । त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७ ॥' इति । अस्यायमर्थः-त्रयाणां मखानां मध्ये ईप्सितेन विधिना (अन्य-तमेनार्चनेनेति यावत्) निर्दोषस्त्रैवर्णिकः मां समर्चयेदिति । 'सर्ववर्णाश्रमाणां च संमत' मिति पूर्वमुक्तेः त्रैवर्णिक इति कर्तुः, भक्तायेत्याद्युक्त्या, शुचिरिति वक्ष्यमाणेनच निर्दोष इत्यस्यच लाभः । अत्राध्यायेऽधिकारिवर्गे पतितस्याऽपाठात् तस्याऽत्र पूजनेऽधिकार इति न मूलाशयः । श्रीधरीयादौ मिश्रे पतितस्याधिकार इति सिद्धान्ताकरणात् व्या-ख्यातॄणामपि न तथाऽभिनिवेशः । दीक्षितादयोहि विष्णुवैष्णवप्रद्वेषेण पाञ्चरात्रस्य पतिताधिकारिकत्वं कल्पयन्तः प्रमाणानामपार्थं वर्णयन्ति । भारताख्यपञ्चमवेदे शान्ति-पर्वणि पाञ्चरात्रस्य प्रवृत्तिप्रयोजनप्रतिपादकेषु (३४३, ३५८, ३५९) एतत्संख्या-काध्यायेषु उत्तमाधिकारिकत्वोक्तेश्च वेदविरुद्धो नागेशदीक्षितादिकृतनिर्णयः । स्त्रीशूद्रा-दीनामाधिकारिवर्गे गणनेपि साक्षात्त्रिविधपूजां कर्तुं नार्हन्ति ते । परंतु तत्र स्त्रियः व्रतोद्यापनादाविव स्वयंसंकल्पं कृत्वा वैदिकमन्त्रयुतां सर्वां पूजां विप्रद्वारा कारयेयुः । तावतैव ताःस्वयोग्यं फलमाप्नुवन्ति, शूद्रास्तु—पौराणमन्त्रपठनेन हरिपूजनेऽर्हा इति

1. त्रैवर्णिकानाम् । 2. तत्साधनानाम् । 3. पूजाविधेः । 4. पूजा ।

केचित्। निर्णयसिन्धुकारस्तु तत्रापि नाधिकारः शूद्रस्य, पौराणमन्त्रोपि विप्रैः पाठनीय इति म[1]न्यते। तेषां नामकीर्तने ऽधिकारात् नामोच्चारणपूर्वं ते पूजांकर्तुमर्हन्तीति केचित्। इदं स्त्रीणामपि [2] समम्। त्रिविधेप्याराधने वैदिकमन्त्राणामष्टाक्षरस्यच विनियोगेन 'आदावेव हि तच्छास्त्रमोङ्कारस्वरपूजितम्। ऋषिभिः श्रावितं तत्र यत्र कारुणिको ह्यसा' (शा. ३५८) विति भारते ॐकारयुतत्वोक्त्याच वेदतुल्यतया वेदइव तत्रापि स्त्रीशूद्राणां साक्षादधिकाराभावेन विप्रद्वारा कारयितव्यं भगवदर्चनमिति तात्पर्यमधिकारवचनानामित्यन्यत्र विस्तर इत्यलम्।

मलिना वेदहीनाश्च पाञ्चरात्रे ऽधिकारिणः।
इत्ययं निर्णयो यस्मा द्विरुद्धः पञ्चमेन तु ॥ १ ॥
वेदेन भारताख्येन ततस्तं परिवर्जयेत्।
इति प्राहुर्भारतादिप्रमाणार्थप्रवेदिनः ॥ २ ॥
मिश्रे ऽधिकारी भवति पूजने पतितद्विजः।
इति दीक्षितनिर्णीति र्हरिप्रद्वेषमूलिका ॥ ३ ॥



## (अथ निगमनम्)

धर्मादिकं मीमांसमाना महर्षयोहि महात्मानो महनीयविचित्रचरित्राः परमात्मपरमानुग्रहभाजो ऽलोलुपा धर्मकामाः प्राणभृतां परमंश्रेयो ऽभिकाङ्क्षमाणाः परप्रयोजनमेव स्वप्रयोजनं मन्यमानाः परानुद्दिधीर्षवो वास्तवौ धर्माऽधर्मौ स्वर्गाऽपवर्गनरकादिफलकौ बोधयन्तो धर्मे प्रवर्तयन्ति जनान्, अधर्माच्च निवर्तयन्ति चेति, तत्तत्तन्त्रविदाचार्यपादानां लोकमान्यो व्यवहारो वरीवर्ति। तत्र महनीयो महर्षिराचार्यः पाणिनिः वास्तवान् प्रकृतिप्रत्ययार्थान् बोधयन्, शब्दप्रयोगरूपे धर्मे प्रवर्तयत्यधिकारिण इति सुव्यक्तं विदुषामिति। अतो मञ्जूषातो अवास्तवमर्थमवादीत् पाणिनिः, तत्र वास्तवत्वभ्रान्तिमन्तो ऽन्येतु पण्डितजना इतिनागेशव्याहरणमनादरणीयमेवेतिच निपुणं निरूपितं पुरस्तात्। शब्दास्तु नित्या वैयाकरणानां, केषांचिदन्येषामाचार्याणांच

1. इदमपि धर्मसिन्धावुक्तम्।
2. धर्मसिन्धौ (३. प.) श्राद्धाधिकारिनिर्णये मन्त्रपठनेन कर्मकरणे नाधिकारइति निर्णीतम्।

समये, तत्रवर्तमानाः प्रकृतिप्रत्ययांशा अपि वास्तवा नित्याएव, त एवहि पाणिनिना प्रदर्शिताः, ते कथमवास्तवा भवेयुः ।

मञ्जूषायां निरूपितः प्रपञ्चासत्यत्ववादस्तु नैतच्छास्त्रसंबद्धः, नापि पाणिनेराचार्यस्य संमतः तस्य तन्त्रे तदर्थकवचनानुपलम्भात्, नापि भाष्यकृतोऽभिमतः, भाष्ये तथानुक्तेः, सांख्यमते कस्यचिदपि वस्तुनो ऽसत्यत्वानुक्तेः, भाष्यकारस्य सांख्याचार्यत्वेन तन्मते वस्तुनो मायिकत्वकल्पनानौचित्यात् । भगवतो व्यासस्यापि न मतं जगतोऽसत्यत्वं, भारतादौ तदीयग्रन्थे तथानुक्तेः, प्रत्युत गीतायां 'असत्यमप्रतिष्ठ'(१६ अ.)मिति श्लोकेन जगदसत्यत्ववादिनां निन्दनात् जगत्सत्यमेवेति तन्मतमिति आशेरते ब्रह्मवित्तमा विद्वांस इतिच प्रपञ्चितम् ।

ते त्रयोऽप्याचार्या वासुदेवस्य परत्वं सर्वाध्यक्षत्वं, तन्मूलभूतं वास्तवं जीवपरमात्मनो भेदंच अभिप्रयन्ति, न त्वैक्यं, वास्तवश्च भेद इतिच वर्णितम् । श्रुतिवाक्यानि च नैक्यतात्पर्यकाणीति निरूपितम् । क्वचित् एवमप्यक्षरयोजना शक्या कर्तुं—तथाहि 'तत्त्वमसी'त्यत्र तदित्येतत् आचारक्विबन्तात्कर्तरि क्विबन्तं, विजन्तंवा पुंलिङ्गम्, सोर्हल्ङ्यादिलोपः, गौणत्वान्न सर्वनामसंज्ञादि । आर्षत्वाद्धलन्तादप्याचारक्विप् यद्वा—हलन्तादाचारक्विपि यत्र प्रयोगे दोषः तावन्मात्रस्याऽनभिधानकल्पनेन निर्वाहे सामान्यतस्तदभावकल्पने मानाभावः । ततश्च—त्वम्, तत्=आत्मकर्तृकाचारसदृशाचार[1]वान् असीत्यर्थः । आत्मेव भवानपि सर्वहितो भवतीति तात्पर्यम् । एवंच नैक्ये तात्पर्यमस्य । 'ब्रह्मविद्ब्रह्मैव भवती'त्यत्र एवकार इवार्थे । ब्रह्मेवेत्यर्थः, यथा 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वा इमान् लोकानभिजयति'(य. सं. २-१-३-१६) इत्यादौ विष्णुरेवेत्यस्य विष्णुरिवेत्यर्थः । अतोऽस्यापि नैक्ये तात्पर्यम् । "ब्रह्मविदाप्नोति परम्, सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायाम् परमे व्योमन्, सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चिता (तै. ३-२) स खल्वेवं वर्तयन्, यावदायुषं ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते (छां. ८-१५-१)योवा एतामेवंवेदा ऽपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति (के. उ. ४-१) इत्यादौ ब्रह्मज्ञानिनो ब्रह्मलोकावाप्तिः, ब्रह्मणा सह सर्वकामानुभवश्च प्रतिपाद्यते, न तु ब्रह्मैक्यम्, अतो नात्मैक्यं श्रुतिसम्मतम् ।

1. अत्र आचारः हिताऽऽचरणम् ।

ननु—इवार्थकत्वं दृष्टान्ते कुतो हेतोरभ्युपेयमितिचेत्, शृणु—विष्णुत्वप्राप्तावेव सति वाक्यतात्पर्ये तत्प्राप्तेर्मुक्तिरूपतया मुक्त्यनन्तरं ऐहिकनश्वरसुखसाधनलोकप्राप्तिकथनवैयर्थ्यम्, क्त्वाप्रत्ययस्वारस्यभङ्गः, प्रकृतवाक्यविमर्शनात् प्रकृतयागस्य लोकप्राप्तिरेव फलमिति लाभेन विष्णुत्वप्राप्तेरेतत्कर्मफलत्वकल्पनायोगः, साहसात् तथा कल्पने मोक्षस्य सर्वाचार्यकृतज्ञानसाध्यत्वसिद्धान्तभङ्गः । किंच—'स्पर्धमान' इत्यनेन परा[1]भिभवेच्छावान् (परोत्कर्षमसहिष्णुः) अत्रकर्मणि अधिकारीति प्रतीयते, नेदृशस्य चमोक्षेऽधिकारो भवति 'शान्तो दान्त' (बृ. ४-) इत्यादिना शान्तादीनामेव मोक्षाधिकार इति शास्त्रे निर्णयात् । किंच-विष्णुत्वप्राप्तावेव तात्पर्यं यदि, तदा 'विष्णुरेवभवती' त्येतावतैव पूर्येत, अतःसादृश्यएव वाक्यपर्यवसानं वाच्यमिति इवार्थकत्वमेव शब्दस्य स्वीकार्यम् सादृश्यकथनेनच—लोकाभिजयसाधनविष्णुपराक्रमसदृशपराक्रमवत्त्वलाभः वैष्णवयागकर्तुः स्पर्धमानपुरुषस्येति प्रतिपत्तव्यम् । सर्वेश्वरो भगवान्वासुदेवः सर्वकर्मसमाराध्यः सुप्रसन्नः प्रपन्नभक्तजनाभिलषितं फलं वितरन्, इहामुत्रच लोके तान् प्रमोदयति, प्रपन्नाश्च तादृशा भागवता भगवतो दयापात्रभूताः सुखमनुभवन्तः सन्ति बहवो लोकद्वय इति श्रुतीतिहासादिषु जोघुष्यत इति विजानीमो ब्रह्मविदामग्रणीभ्यः ।

तत्र अम्बरीषादयो महाराजाः, ध्रुवप्रह्लादपाञ्चालीकरिराजविभीषणादयो दृष्टान्ताः, एतेन न वयो जात्यादयो निमित्तमनुग्रहकरणे, किंतु[2]भक्तिः, प्र[3]पत्तिश्चेति द्वयमिति ज्ञातव्यम् । तत्र न एकोपिपुरुषः 'त्वंचाहंचएकएवेति अनुसंदधानः फलमलभत, किंतु सर्वेश्वरो हरिः तं प्रपद्ये शरणं, तेन अहं सुखीभवामि इत्येवानुसंधाय फलमश्नुते ।

---

1. स्पर्ध संघर्षे, संघर्षःपराभिभवेच्छेति कौमुद्यादौ । 2. अनन्तानवद्यनिरवधिकादिव्यकल्याणगुणकोऽन्तरायसहस्रेणाप्यप्रतिबद्धस्तैलधारावदनवच्छिन्नप्रेमप्रवाहो भक्तिः ।

3. सांच शरणागतिः, 'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।

रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः' इति ।

'सर्वोत्तमत्वविज्ञानपूर्वं तत्रमनःसदा ।
अखण्डा त्रिविधा पूजा तद्रत्यैव स्वभावतः ॥ १ ॥
रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ।
शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदा ॥ २ ॥ इति च

एतच्च तेषां चरित्रश्रवणादिना शक्यं ज्ञातुम् । अद्यत्वेपि जना भगवन्तमाल्यादिषु भजमाना 'अहं भवानेक एवे'ति नानुसंदधते इति सर्वेषां स्वस्वानुभवसिद्धम् । हिरण्यकशिपुप्रभृतयः स्वस्मिन् जगदीश्वरत्वबुद्धयो नष्टैश्वर्या अभवन्निति इतिहासादितः प्रतीमः । अतो नैक्यबुद्धिः समीचीनेति मत्वा ऐक्य चिन्तां परित्यज्य भगवति सर्वेश्वरत्वादिधिया रक्षकत्वबुध्या, स्वस्मिन् दासत्वरक्ष्यत्वधिया च भगवन्तं शरण्यं शरणमाश्रयन्तिभागवताः ।

भ[1] त्किमुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महतामलाशयानाम् । येनाऽञ्जसोल्बण मुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथा ऽमृतपानमत्तः, (भाग. ४-९.) देव प्रपन्नार्तिहर प्रसादं कुरु केशव । अवलोकनदानेन भूयो मां पालयाऽच्युत (वि. पु. १ अ. १-२०-१६)हेनाथ हेरमानाथ व्रजनाथ ऽऽर्तिविनाशन । कौरवार्णवमग्नां मा मुद्धरस्व जनार्दन (भार. स. १०-४६) यः कश्चनेशो बलिनो ऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम् । भीतं प्रपन्नं परिपाति यद्भया न्मृत्युः प्रधावत्यरणं तमीमहि (भाग. ८ २) अनुजो रावणस्याहं तेन चाप्यवमानितः । भवन्तं सर्वभूतानां शरण्यं शरणागतः (रा. यु. १९-४- ) त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः । सर्वलोकशरण्याय राघवाय महात्मने । निवेदयत मां क्षिप्रं विभीषणमुपस्थित'(रामा. यु. १७-१७)मिति भागवतादावुक्तदिशा ध्रुवादयो वासुदेवमाश्रित्य सुखिनोऽभूवन्, एवमन्येच भक्ता भगवन्तं शरणंगता इहामुत्रच सुखमन्वभूवन्निति भागवतादितो ज्ञेयम् । भगवान् वासुदेवोपि 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् (गी. ९) सकृदेव प्रपन्नाय तवास्मीतिच याचते । अभयं सर्वभूतेभ्यो ददाम्येत द्व्रतं मम' (रामा. यु. १८-३३) इत्युक्तदिशा प्रपन्नभक्तपरिजनपरिरक्षणबद्धदीक्षइति विजानन्त'आचार्यवान्पुरुषोवेद' (छा.–६ ) इत्याद्युक्ते राचार्योपदिष्टविद्यैव परोक्षाऽपरोक्षज्ञानसाधनमिति निश्चिन्वानाः संप्रदायविद आचार्यादधीतसद्विद्या यथासमयमधीतविद्याविचारेण, वासुदेवएव सर्वस्वामी ममेष्टद इति निश्चितधियः, भक्त्या स्तुत्या नमसा सेवयाच अनुदिनं श्रियः पतिं वासुदेवं तोषयन्तः, शरण्यं तं शरणं प्रपद्य तदीयकरुणाकटाक्षवीक्षाऽऽसादितैहि[2]कामुष्मिकसकलसांम्राज्य-

1. ध्रुवप्रह्लादपांचालीकरिराजविभीषणानामुक्तयः क्रमेणेति बोध्यम् ।

2. 'आयुरारोग्यमैश्वर्यं भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायतां नित्यमपवर्गप्रदो हरि'रित्युक्तेः

सौख्यमनुभवन्तो भवन्तु सन्तः पाणिनीया वासुदेवशरणा ब्रह्मविदश्चेति श्रियः पतिं श्रीमन्नारायणमाशास्महे इति शम् ।

योऽनन्यशरणो भक्त्या वासुदेवं प्रपद्यते ।
पाति तं जगदीशोऽयं वेदवेद्यः परः पुमान् ॥ १ ॥

---

अब्दे सुभानौ वेदाब्धिव्योमबाणमिते कलौ ।
आत्रेयान्वयजातश्रीसेतुमाधवधीमता ॥ १ ॥
निर्मितो व्यासपाणिन्योर्भावनिर्णयनामकः ।
ग्रन्थोऽयं पूर्णतां प्राप कृपया श्रीहरेर्गुरोः ॥ २ ॥

इति श्रीमत्पूर्णप्रज्ञीयसिद्धान्तपुण्डरीकमार्तण्ड पण्डितप्रकाण्ड वैयाकरणचक्रवर्ति,
वैयाकरणकेसरि कुलपति महामहोपाध्यायबिरुदभूषित पदवाक्यप्रमाणज्ञ
त्रय्यन्तविद्यानिष्णात श्रीमुष्ण व्याकरणसुब्बरायाचार्याणाम्,
आत्मजेन श्रीमत्तातपादपादपद्मपरिचर्यासमासादितशब्द-
ब्रह्मविद्यावैशद्येन श्री सेतुमाधवाचार्येण विदुषा
विरचितः श्रीव्यासपाणिनिभावनिर्णयः

समाप्तः

श्रीकृष्णार्पणमस्तु



# परिशिष्टम्.

१६-२६ श्रृणु इति—इतः परं 'असति बाधके शास्त्राणां सामान्ये पक्षपातः' इति न्यायेन अर्जुनोपलक्षितसर्वजीवभेदः परमात्मनःसिद्ध्यति इति योजनीयम् ॥

२१- ७ परत्वेनेति ॥ 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी तु भरतर्षभ' इति भजतां चातुर्विध्योक्तेर्ज्ञानिविशेषपरं, नतु सामान्यपरम् ।

२१-२३ एवं विधेन = वतिरहितप्रयोगेण ।

२८-२१ तन्मूलेति ॥ सर्वस्य ब्रह्मस्वरूपत्वमूलकेत्यर्थः ।

२९- १ अत एव = व्यासोक्तस्य पाणिनिसंमतत्वादेव ।

२९- ४ उपन्यस्यन्तीति = सर्वत्र मतभेदधीर्माभूदिति सौत्रानुग्रहसंपादनाय तत्रतत्र भाष्यप्रवृत्तिः ।

२९-२६ तस्य = ईश्वरस्य,

३०- २ सूत्रे = ब्रह्मसूत्रे ।

४२-२६ घटः इति सुन्दरइति शेषः अत्र वक्तव्यमन्यत्रोक्तम् । [त्यर्थः ।

४३- २ अनेकेति॥ निर्धार्यमाणवस्तुघटितोद्भूतावयवभेदवत्समुदायाश्रयत्वादि-

७९- ३ एतैः = शब्दप्रमाणकैः ।

८७- ६ तयोः = धीव्यवहारयोः

९०- ६ चेतनमिश्रेति ॥ एवमुक्तेः फलं चिन्त्यम् । अचेतनमृदादेरिव केवल-शब्दस्योपादानकारणत्वाङ्गीकारेपि बाधकाभावात् ।

१०१-१८ न संमतइति ॥ पतञ्जलेः सांख्याचार्यत्वेन, वैयाकरणस्य सांख्यानुयायित्वमिति नागेशोक्त्या पाणिनेरपि तन्मतानुयायितायाःसिध्या सांख्यमते जगदसत्त्वानुक्तेः पाणिनेरपि जगतोऽसत्त्वमनभिमतमेव ।

१२०-२१ एतद्दृष्टान्तः=शुक्तिरजतदृष्टान्तः

१४१-२० प्रत्यगात्मनोऽनादित्वमित्यतः परं इदं योज्यम्—

प्रजापतिपतिं विष्णु मनन्तमपराजितम् ।
प्रधानपुंसोरजयोः कारणं कार्यभूतयोः ॥

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।
अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते ॥

आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकम् ॥

प्रकृतिं पुरुषंचैव क्षेत्रं क्षेत्रज्ञमेव च

स्थूलं विलाप्य करणे करणं निदाने तत्कारणं करणकारणवर्जिते च । इत्थं विलाप्य यमिनः प्रविशन्ति यत्र तं त्वां हरिं विमलबोधघनं नमामः'' इति अविद्याया जन्यत्वे (पु. ३०८) मञ्जूषोक्तप्रमाणानां न तत्र तात्पर्यम् । तथाहि—

अत्र—आद्ये अजयोरित्युक्त्या प्रधानपुरुषयोरनादित्वमुक्तम् । कार्यभूतयोरित्यस्य अभिव्यक्तयोरित्यर्थः । मायाया ईश्वरादाविर्भाव इति नागेशोक्तदिशा अनयोरप्याविर्भाव इति वक्तुं शक्यत्वात् । द्वितीये अव्यक्तमुत्पन्नमित्यपि आविर्भूतमित्यर्थकमेव । तृतीये तुर्येच—क्षेत्रपदं प्रकृतिकार्यदेहपरम् । यथा मायाया ईश्वरे लयः संबन्धविशेषएवेति नागेशोऽवदत्, तथा हरौ प्रकृतिरूपकारणस्य लय सम्बन्धविशेष एव इति अन्येपिवक्तुं प्रभवन्ति । अतः एतानि कथमुक्तार्थे प्रमाणानि स्युरिति विभाव्यताम् । किंच—अनाद्यविद्यासहकारेण ईश्वरः सृजतीत्यङ्गीकारेपि स्वतन्त्रवस्त्वन्तरानपेक्षत्वमात्रेण प्रपंचस्य एककारणकत्वसिद्धिः । एतत्प्रघट्टके 'उक्तजातीयश्रुतीनां मदुक्तव्याख्यैवोचिते'ति नागेशोक्त्या च अनादित्ववादिनां श्रुतियोजना अन्यादृशीति भाति ॥

१९३-१२ धिति-धिति प्रभृति

१९३-१५ प्रकाशयतीति—इतः परं 'उपदेशेऽजनुनासिक इत्यत्र करणे घञा वार्तिकार्थलाभप्रकारं प्रकृति प्रत्ययार्थविचारं च दर्शयतां भाष्यकृतादीनामपि भ्रान्तत्वं सूचयति' इति योजनीयम् ।

१९४-१४ साधनेति ॥ एकं साधनपदमधिकम्

२०२-२५ त्रिविधा—कायिका वाचिका मानसिका इतित्रिविधा

# शोधनपत्रम्

अशुद्धं — शुद्धं

१०- ९ एव सर्वान्—एव पार्थः सर्वान्
११- १ सात्विकादि—सात्विक त्वादि
१३-१७ सूत्रद्वस्य—सूत्रद्वयस्य
१४-१२ तऐवं—तमेवं
१५-१२ शरणागतः—शरणं गतः
१५-२५ पश्मात्मतवसर्वा—परमात्मत्वसर्वा
१५-२६ गमेन तद—गमेन तस्य तद
१७- ५ संम्रस्य—समग्रस्य
१८-१२ नारायणस्यैवोक्त-नारायणस्यैवेत्युक्त
१४-२३ कुतंभमतिति—कृतंभवतिति
१९-२१ स्वरन्ति—स्मरन्ति ।
२०- ४ इत्याखण्डलार्थः—इत्यखण्डार्थः
२०-१२ जघदुपादान—जगदुपादान
२०-१३ नागशेन—नागेशेन
२२-२२ तद्भष्ये—तद्भाष्ये
२३-१६ विवियद्धिकरणं—वियदधिकरणं
२४- ५ संगच्छच्छन्ते—संगच्छन्ते
२५- ८ दुत्यति—द्युत्यति
२६- ३ प्रलयार्णशार्यं—प्रलयार्णवशायी
२७-१७ साधितम्—साधितवान्
२९- ६ स्थापनाय अर्वाचीन-स्थपकार्वाचीन
३३- ५ जगत्करणं—जगत्कारणं
३३-२० पौराणीकाः—पौराणिकाः
३८-१५ स्त्रीयाम्—स्त्रियाम्
३६-१८ अधिष्ठाय—अथिष्ठायेत्यत्र
३९- ७ सतन्ततवत्—सन्ततत्वात्
४०- ५ शरीवत्—शरीरवत्
४१-१५ विपरिणमितव्यं—विपरिणमयितव्यं
४२-१६ इत्यादि—सुन्दर इत्यादि
४३-१८ आत्मनावो—आत्मनैवो

अशुद्धं — शुद्धं

४४-१६ कार्मे—कर्म
,, १७ परिणमिति—परिणमते
४५-१७ परा—परायाः
,, ,, मध्यमा—मध्यमायाः
,, २५ स्फोर—स्फोट
४६- १ प्रधानसरिर—प्रधानशरिर
,, ३ अहुः—आहुः
,, ६ उपादानत्वेक्ते—उपादानत्वोक्तेः
,, २२ तथोर्भेदे—तयोर्भेदे
४७- ४ व्यददिश्यते—व्यपदिश्यते
,, ५ बच्चपशे—पञ्चदशे
,, १६ संभन्धस्य—संबन्धस्य
,, १८ पकणिना—पाणिनिना
,, २० नशाक्यनिरू—शक्यनिरू
४९-१२ मास्तीत्याह—मस्तीत्याह
५४- ९ परेतुवेत्यइत्यु—परेतुवेत्यु
५६- ३ इत्यादिक्यमु पलक्ष्यते—इत्यादि [वाक्यमुपलक्ष्यते
५८-१५ पूर्वेजातः—पूर्वे देवाः
५९- ९ स्ववैभवं—स्वविभवं
६३-१३ जीवने—जीवतेः
६९'१८ नारायणोख्यो—नाराणाख्यो
७१-२४ परवाक्ययोः—पदवाक्ययोः
७४- ६ पादार्थानां—पदार्थानां
,, १४ प्रयाणभूतस्य—प्रमाण भूत स्य
७८-१३ आम्येरन्—आम्येयुः
८२- १ काटके—काठके
,, २१ निच्चिक्युब्र—निच्चिक्युर्ब्र
,, २२ विपरिणमितव्यं—विपरिणमयितव्यं
८४- ८ सूत्रोपात्तवृत्ति—सूत्रोपात्तार्थवृत्ति

# शोधनपत्रम्

,, १३ चित्ताविरिक्त— चित्तातिरिक्त
,, १९ उत्पत्यभाव—उत्पत्त्य भाव
,, १६ उक्तया—उक्तया
,, २० सर्वैरपेक्षात:—सर्वैरपेक्षित:
९०-१२ बिन्दु—बिंन्दु
९४- ३ सूत्राद्योत—सूत्रोद्योत
१०२-११ दूरीकरणया—दूरीकरणाय
,, १३ अद्वैतपरत्वात्—अद्वैतपरत्वाभावात्
,, २२ अङ्गाङ्गिभावे—अङ्गाङ्गिभावत्वं
१११-१३ इत्येवार्थ:-इत्येवार्थ: मनूसूत्रभाष्यस्य
११३- ९ शास्त्रासिद्ध—शास्त्रसिद्ध
,, १९ न मुनित्रय—मुनित्रय
११७-१७ शास्त्राइर्थ—शास्त्रार्थ
११९- ५ भक्तेषु— विभक्तेषु
,, २० आत्माख्य भावापि-आत्माख्यभावापि
१२०- ५ निश्चया—निश्चय
,, २० उक्ति: । संगच्छतेसारेतर्हि—उक्ति-
[स्संगच्छते । सारेनहि
१२२- ३ नाम्न—नाम्न:
,, वृत्त्यसंगात्—वृत्त्यसंभवात्
१२४-१० अयुक्तामिति—अयुक्तम्
१२५- ७ कारीत्यत—कारीत्यतो
१२६-१३ इत्युक्तरिति—इत्युक्तेरिति
१२७- ९ स्वाप्राद्य—स्वप्राय
१२८-१७ प्रथमसूत्राथ—प्रथमसूत्रार्थ:
१२९- ५ पदाथ—पदार्थ
१३०-१४ निरूपंणं—निरूपणं, भागवते
१३८- ७ को भवेदत्र—तर्हि को भवेदत्र
,, २० वर्णयान्ति—वर्णयन्ति
,, बृहदारण्य—बृहदारण्यका
१४२- १ आधिकरण्य—अधिकरणा
,, ३ मयया—मायया
१४४- ५ स्वप्नो—स्वाप्नो
,, २० सिद्धेरि—सिद्धेरिति

१४६-१६ एतवदेव—एतावदेवालम् ।
,, १९ तात्पर्यमुर्क्त—तात्पर्यं युक्तम्
१४७-१३ इतीति—इति गीताविरुद्धं जग-
[दसत्ववचनम् ।
१४९- ९ प्रकृति मायादि—प्रकृतिमाया
१५२-१७ असत्य विद्यमानं-सति अविद्यमानं
,, ५३ दैवीत्येषे—दैवी त्येषे
१५५- ४ उपदेष्टं—उपदेष्टुं
१५७-२२ व्यंग्या:—व्यङ्ग्य:
१५८-२२ आस्ति—अस्ति
१५९- ५ सम्बन्धि—सम्बन्धी
१६२-१७ भाष्यं – भाष्य
१६४-२१ प्रणवस्यद्वयरूप—प्रणवस्य रूप
१६५-१७ पदवाक्ये—पदे वाक्ये
१६६- १ अथो—अर्थो
,, ११ नागेश—नागेशो
१६८-१९ अहोस्वित्—आहोस्वित्,
,, २२ व्यवस्थपयेत्—व्यवस्थापयेत्
१७५-१७ योगेत्यादि शक्यत्वादित्यन्तस्य स्थाने — योगभाष्ये वाचस्पतिना संकेतोपाधिरेकाकारप्रत्ययो न तु तात्विक इत्युक्तत्वेन तयोस्तादात्म्यं न वस्तवमित्यवधेयम् ।
१७६-१६ अनुमापकेश्वर—अनुमापक ईश्वर
१७७- ४ सम्बन्धेपि—सम्बन्धोऽपि
,, २२ गव्यादि—गाव्यादी
१८४- ५ शाब्दविषय—शब्दविषय
१८७-१७ अत्मज्ञान—आत्मज्ञान
१९०- ३ शब्दे—शाब्दे
१९१- ९ शशांकिरे—शशाङ्किरे इत्यत्र
,, ११ यवहारे—व्यवहारे
१९९-२३ माधिकारि—माधिकारि
२०२-१० स्वीकार्यमिति—अतएव उपचरित वष्णवत्वमिति सायणभाष्य उक्तम्